॥ श्रीः ॥

॥ शिवाभ्यां नमः ॥

इदं

श्रीमदापस्तम्बमहर्षिप्रणीतं

# ॥ धर्मसूत्रम् ॥

आपस्तम्बग्रन्थव्याख्यालङ्कर्मीणधिषण श्रीमद्धरदत्तमिश्रविरचितया

## उज्ज्वलाख्यया वृत्त्या

संवलितं

श्रीमद्गौरीमायूरदक्षिणपार्श्वप्रवहद्वीरचोळनदीदक्षिणतीरमण्डनायि-

नाचल्कुटीसमाख्याग्रहाराभिजनेन श्रीमद्यज्वलवशमुक्ता-

फलश्रीमद्गङ्गाधरसुधीमणेः पौत्रेण राजुशास्त्र्यपर-

नामकश्रीमन्मृत्युञ्जयसुधीमणेः चरमेण

तनुभुवा बृहदम्बिकागर्भजन्मना श्री-

कुम्भघोणनगरविराजमानस्वदेश-

भूषणवाणीविलासशालागीर्वाण-

वाण्युपाध्यायपदमावह-

ता

# रा०. हालास्यनाथशास्त्रिणा.

बहुभिः प्रतिकृतिभिस्सम्वाद्य सम्यक्संशोध्य

मूलाक्षर पारायणोपयोगिनमापस्तम्बधर्मसूत्रपाठं

संयोज्य च

कुम्भघोणस्थश्रीविद्यामुद्राक्षरशालायां

मुद्राक्षरैरङ्कयित्वा प्राकाश्यं नीतं

समुद्रमति नमाम ।

क्रिस्ताब्दाः [illegible] ।

TO

AGAD GURU

SRIMAT SACHCHIDANANDA SIVABHINAVA

NARASIMHA BHARATI SWAMI

OF

**SRINGARI**

This work is dedicated

BY

THE EDITOR

**R HALASYANATHA SASTRY.**

श्रीशारदाद्व्यै नमः ।

# अयं प्रबन्धः

अखिलभूमण्डलमण्डनायमानतुंगभद्रातरंगशिशिरीकृत-परिसरश्रीमच्छृंगगिरिक्षेत्रविराजमानश्रीमच्छंकरभगवत्पाद-प्रतिष्ठापितश्रीशारदापीठाधिपश्रीमत्परमहंसपरिव्राजकाचार्येत्यादिबिरुदांकितवैदिकमतधर्मपरिपालकपरमाचार्यमहामहिमशालिश्रीमज्जगद्गुरुसच्चिदानन्दशिवाभिनवनरसिंहभारतीस्वामिदिव्यसन्निधानाय सादरं सविनयं च उपहारत्वेन साष्टांगपातपूर्वं समर्पित

एतद्ग्रन्थप्रकटयित्रा रा. हालास्यनाथशास्त्रिणा.

आपस्तम्बमहर्षिणा विरचितं धर्मं सहैवोज्ज्वला-
वृत्त्या श्रीहरदत्तमिश्रकृतया लुप्तप्रसृत्याधुना ।
सम्मुद्र्योज्ज्वलनागराख्यलिपिभिर्धर्मज्ञतुष्ट्यै मुदा
भक्त्या सादरमार्पिपं हि जगदाचार्येन्द्रसत्सन्निधौ ॥१॥
ये श्रीशृंगगिरौ जगद्गुरुपदे राजन्ति वन्द्येऽखिलै
योगीन्द्रैरपि चित्तशुद्धिमहिता श्रीमन्नृसिंहाह्वया ।
येषां दिक्षु यशच्छटातिविमला शिष्यौघसंलालिता
विश्रान्तिं लभते यदीयकरुणा शिष्यान् प्रशास्त्यन्वहम् ॥२॥
ये श्रीशंकरसन्मतस्थपरमाकूतोपदेशादिभि
र्नित्यं शिष्यगणानवन्ति निखिलान्दिग्जैत्रयात्रोत्सवे ।
तेऽमी वैदिकधर्मपालनकलाधुर्यान्तरंगा मुदा
स्वीकृत्यैनमनुग्रहं वितनुयुर्दीने किशोरे मयि ॥३॥
ईशः सद्गुरुरूपइत्युपदिशन्त्याप्तोक्तयोऽकृत्रिमाः
तस्मात्कर्मसमर्पणं समुचितं श्रीमद्गुरोस्सन्निधौ ।
इत्यालोच्य विधाय यत्नममितं दिष्ट्याद्य संसाधितं
कर्मैतद्विनिवेश्य शंकरगुरुप्रासादयं धन्यताम् ॥४॥
श्रीमच्छंकरभगवत्स्थापितपीठाधिपत्यधृतशोभाः ।
सर्वाभीप्सितसिद्धिं कुर्युर्नरसिंहभारतीपादाः ॥५॥

इत्थम् एतद्ग्रन्थप्रकटयिता
श्रीमच्छंकरभगवत्पादचरणाम्बुजसेवा-
परमानन्दनिर्भरस्वान्तः
रा. हालास्यनाथशास्त्री.

# ॥ भूमिका ॥

आर्याः धर्ममार्मिका विद्वन्मणयः प्रभवश्च?

विदितमेव हि भवतां यदहं प्राचीनलुप्यमानलोकोत्तरसत्प्रबन्धप्रकटने धृतव्यवसायः सहृदयानां सत्प्रभूणां साहाय्येन सम्मुद्य प्राकट्यं **रसिकरञ्जनीटीका** सहितं **कुवलयानन्द**नामधेयमथालङ्कारप्रबन्धरत्नम् ।

अनन्तरमाकलय्य वैदिकधर्मप्रतिष्ठापकानाम् आर्षधर्मप्रबन्धानां प्रचारवैरल्यं पुस्तकदौर्लभ्यञ्च तादृशामापस्तम्बगौतमबोधायनादिमहर्षिप्रणीतानां प्रबन्धानां क्रमेण मुद्रणे महद्भुत्पद्येत सुकृतमिति धिया धृतोत्साहः समभवं प्रथमत आपस्तम्बधर्मस्य सवृत्तिकस्य प्रकटनारम्भे । तत्र च समासादिताः तिस्रः संप्रतिपन्नाः प्रतिकृतयः । यास्वन्यतमा प्रतिकृतिरस्मत्पितृपितामहादिपरिशीलिता शिथिलशिथिलाप्यनुपजातवर्णलोपा प्रायस्सुबद्धपाठा च । यासु च एकतमा **कुम्भघोण डबीर्वीधी** वास्तव्यानां धर्मशास्त्रपारावारपारीणधिषणानां श्रोत्रियशिखामणीनां परित्यक्तपरान्नप्रतिग्रहादिदुष्कर्मणां शिष्टाग्रेसराणां **कम्पङ्कुटि वैद्यनाथशास्त्रिणां** गृहकोशगता **कुम्भघोणगवर्मेण्ड कालेजभिधानहूणवाणीमहापाठशालाद्वैतीयिको**पाध्यायपदमलंकुर्वतामाश्रितजनरक्षणैकतानमानसानामविरतसमाचर्यमाणसद्व्यवसायसाहाय्यानामन्वर्थसाधुशब्दोपपदमहितनामधेयानां राजबहुदूर्बिरुदसमलंकृतानां सत्प्रभूणां **शेषार्याणां** निकटादासादिता प्रायस्सुबद्धपङ्क्तिरपि क्वचित् क्वचित् लेखकप्रमादकलुषीकृता च ।

यासु चान्यतमा **कुम्भघोणान्तर्गतबाणपुरी**वास्तव्यानां परिशीलितधर्मशास्त्रप्रबन्धानां यायजूकानां **कोविलुण्णि चक्रपाणिदीक्षितानां** सकाशादुपलब्धा अशिथिलतालपत्रापि बहुशः विच्छिन्नपङ्क्तिः प्रायस्सुबद्धा च ।

अन्यच्चात्र प्रतिकृतित्वेनोररीकृतं बहोः कालात्पूर्व (GEORGE BUHLER) **जार्जुबहुलराभिख्येन** वैदेशिकपण्डितोत्तमेन **मुम्बापुर्यां** मुद्रयित्वा प्रकटीकृतमुज्ज्वलावृत्तिसंग्रहयुक्तं कुम्भघोणस्थ गवर्मेण्टुकालेज्गीर्वाणवाण्युपाध्यायपदमण्डनायमानैः धर्मशास्त्रमर्मसर्वस्वकूलङ्कषधिषणैः चतुस्तन्त्रपारावारपारीणशेमुषीविशेषवित्ताम्मत्प्राचार्य मुडुम्बिकुलसम्भूत **श्रीकृष्णमाचार्य**तनूजन्मभिः अभिरूपशेखरैः पेरुवाळुन्दूरभिजनैः **रङ्गाचार्यैः** सानुग्रहं समर्पि-

तमापस्तम्बधर्मसूत्रप्रबन्धरत्नम् । एताः प्रतिकृतीः सम्यक्परिशील्य परिशो- ध्य च महता प्रयासेन समग्रोज्ज्वलावृत्तिसवलितममुमापस्तम्बधर्मसूत्रप्रबन्धं पारायणोपयोगिना स्थूलाक्षरमुद्रितेन केवलसूत्रपाठेनापि संयोज्य सप्रनयं मुद्रणपरिष्कारम् । अत्र च सूत्रविभागः प्रायः उज्ज्वलावृत्त्यनुगुण्येन वि हितोऽपि क्वचित् क्वचित् बम्बानगरीमुद्रितसूत्रपाठेन विप्रतिपद्येत । यद्यप्य- यं प्रबन्धः मुद्रणकाले असकृत्परिशोधित एव । आजानसिद्धतया वा अ- बोधविभ्रमयोः पुरुषचित्तस्य कार्यान्तरवैयग्र्यजनितेन मच्चित्तानवधान दोषेण वा क्वचित् क्वचिदक्षरच्युतिप्रभृतयो दोषाः समजनिषतेत्यालोचयन्नन् पुनः परिशोध्य काञ्चन शुद्धाशुद्धपत्रिकामपि समयोजयम ।

यदीतोऽन्येऽपि दोषा दृश्येरन्नसंशोधिताः तान् मर्षयन्तु नः सुहृद इति साञ्जलिबन्धमभ्यर्थये । अत्र विषये पुस्तकान्तरप्रदानेन कृतोपकाराणां पूर्वोद्दिष्टनामधेयानां **वैद्यनाथशास्त्रि**प्रभृतीनामेतच्छोधनविषये असकृद्वि रचितोपदेशानामव्याजकरुणार्णवानां मतिमन्दरपरिलोडितपाणिनितन्त्र पा- रावारमसमुद्धृततत्त्वार्थपीयूषमननुगृहीतविद्यामृताभ्यर्थिभूसुरनिकराणाम् अ- भिज्ञशिखामणीनामस्मदाचार्यचरणानां **श्रीमच्छठकोपाचार्यमणीनां** प्रत्युपकाराशक्ततयोपहारयामि बहून् प्रणामान् । धनिकजनैकसा- ध्ये महति मुद्रणव्यवसाये प्रवृत्तस्य मम द्रव्यसहाय्यादिना महान्तमुप- कारमातन्वता नञ्जासस्थानमध्यप्रवहत्कवेरकन्यकादक्षिणतटमण्डनायित(**ति- रुवावडुतुरै**) नामक श्रीमद्गोमुक्तिक्षेत्रविराजमानश्रीकैलासपरंपरागतनन्दिके- शाधिष्ठितश्रीशैवमठाधिपानामविरतमातन्यमानसद्व्यवसायसाह्यानां धार्मिक- शिखामणीनां **श्रीमदम्बलवाणदेशिकाभिधपण्डारचूडामणीनां** महत्सा हाय्यमेव एतादृशव्यवसायजीवातुभूतमिति सञ्जातकार्तज्ञ्यः तेषामविरत- मुपचीयमानं धर्मसंपत्तिशिष्यसपत्यादिकमभ्युदयजालमुत्तरोत्तरमभिवृद्धं भू- यादिति समभ्यर्थये भगवन्तं भवानीपरिबृढम् ॥

एतत्परिशोधने अकारादिक्रमेण सूत्रानुक्रमणिकादिलेखने च विहितसाहा- य्याय शिष्यसम्मिताय **सुन्दरशास्त्रिणे** महान्तं प्रत्युपकारं धारयामि । इत्यलमतिविपञ्चितेन ॥ इत्थं **रा. हालास्यनाथशास्त्री.**

# आपस्तम्बधर्मप्रतिपाद्यविषयसङ्ग्रहसूचिका

## प्रथमप्रश्ने

| | |
|---|---|
| १. प्रथमपटले— (ख०१-२-३-४) | प्रमाणस्वरूपम् । वर्णानामानुपूर्व्येण विभागः । तेषां धर्मः । उपनयनशब्दार्थविचारः । गायत्रीप्रशंसा । आचार्यलक्षणम् । मातापितृतोऽप्याचार्यस्य श्रैष्ठ्यप्रतिपादनम् । वर्णानुपूर्व्येण उपनयनकालः । काम्योपनयनकालः । उपनयनकालातिक्रमप्रायश्चित्तम् । पितृपितामहप्रपितामहादीनामुपनयनाभावे तत्कुलोत्पन्नानां पातित्यम् । इच्छतां तेषां प्रायश्चित्तम् । गुरुकुलवासकालः । ब्रह्मचर्यविधिर्विस्तृतः । आचार्यनिकटे शिष्येण स्थातव्यक्रम इति ॥ |
| २. द्वितीयपटले— (ख०५-६-७-८) | नियमस्य श्रैष्ठ्यम् । तदतिक्रमे प्रत्यवायः । गुरुशुश्रूषाप्राशस्त्यम् । गुरुशुश्रूषाक्रमः विस्तृतः गुरुदक्षिणाहरणप्रकारः । समावृत्तनियमः । गुरुसन्निधौ स्थातव्यक्रमः । आचार्यप्राचार्यसन्निपाते कर्तव्यपूजाक्रमः । आचार्योपसर्पणविधिः । शिष्यपरिपालनं चेति ॥ |
| ३. तृतीयपटले— (ख०९-१० ११) | अध्ययनानध्ययनकालः । तत्कर्तव्यप्रकारश्च । अध्ययनकाले श्रोत्रियाभ्यागमे अनुष्ठेयक्रमः । नित्यप्रश्नाध्ययनप्रकार इति ॥ |
| ४. चतुर्थपटले— (ख०१२-१३-१४) | नित्यप्रश्नप्रशंसा । कर्मकालोच्चरितानां मन्त्राणामनध्यायाभावनिरूपणम् । पञ्चयज्ञस्वरूपम् । तदनुष्ठानप्रकारः । अभिवाद्याभिवादनस्वरूपम् । कुशलप्रश्नादिप्रकारश्चेति ॥ |
| ५. पंचमपटले— (ख०१५-१६-१७) | गुर्वादीनामुपासने जपहोमादिषु च यज्ञसूत्रधारणप्रकारः । आचमनकालः । तत्प्रकारः । अभोज्यपदार्थनिर्णयः विस्तृतः । पदार्थशुद्धिप्रकार इति ॥ |
| ६. षष्ठपटले— (खं०१८-१९) | दुर्भिक्षे भोज्यस्वीकारक्रमः । अभोज्यान्नानां परिगणनम् । भोज्यान्नस्वरूपम् इति ॥ |
| ७. सप्तमपटले— (ख०२०-२१) | दाम्भिकनिन्दा । ब्राह्मणस्य वाणिज्यनिषेधः । दुर्भिक्षकाले वाणिज्यस्याप्यनुष्ठेयत्वनिरूपणम् । पतनीयकर्मपरिगणनम् । पतितनिन्दा चेति ॥ |
| ८. अष्टमपटले— (ख०२२-२३) | अध्यात्मविचारः । भूतदाहीयदोषपरित्यागस्य आवश्यकता । भूतदाहीयदोषपरिगणनम् । तत्प्रतिद्वन्द्विगुणपरिगणन चेति ॥ |
| नवमपटले— | वर्णानुपूर्व्येण हत्याप्रायश्चित्तम् । गुरुहननप्रायश्चित्तम् । गु- |

(ख०२४-२५ २६-२७) गुरुतल्पगमनप्रायश्चित्तम् । सुरापानप्रायश्चित्तम् । स्वर्णस्तेयप्रायश्चित्तम् । क्षत्रियादीनां ब्रह्महत्याप्रायश्चित्तम् । वायसादितिर्यक्प्राणिहननप्रायश्चित्तम् । अनिन्द्यनिन्दानृतोच्चारणादिप्रायश्चित्तम् । मिथ्याधीतप्रायश्चित्तम् । अभोज्यभोजनप्रायश्चित्तम् । कृच्छ्रद्वादशरात्रविधिः । अपतनीयप्रायश्चित्तमिति ॥

१०. दशमपटले— (ख०२८-२९) स्तेयस्वरूपम् । पतिते आचार्ये स्थातव्यक्रमः । पतितायां मातरि स्थातव्यक्रमः । अधर्माहृतभोगानुज्ञाप्रायश्चित्तम् । पतनीयप्रायश्चित्तम् । मतभेदेन गुरुतल्पगप्रायश्चित्तम् । दारव्यतिक्रमिणः प्रायश्चित्तम् । भर्तृव्यतिक्रमप्रायश्चित्तम् । भ्रूणघ्नः प्रायश्चित्तम् । अभिशस्तप्रायश्चित्तम् । अभिशस्तैः पुत्रेषु स्थातव्यक्रमः । पतितापत्यस्य पातित्यविषयविचारः । पतनीयवृत्ते प्रायश्चित्तम् इति ॥

११. एकादशपटले— (ख०३०-३१-३२) समावर्तनविधिः । स्नातकव्रतानि विस्तृतानि । गृहस्थसामान्यधर्मा विस्तृताः इति ॥

---

## ॥ द्वितीयप्रश्ने ॥

१ प्रथमपटले— (ख०१-२) दम्पत्योर्नियमः । स्थालीपाकप्रकारः । दारोपगमनकालः । दारोपगमने नियमः । सन्निपातानन्तरकालिकशुद्धिप्रकारः । स्वधर्मानुष्ठानप्रशंसा । तत्फलम् । पुण्यपापकर्मानुगुण्येन जन्मान्तरप्राप्तिः । चण्डालोपस्पर्शनप्रायश्चित्तमिति ॥

२. द्वितीयपटले— (ख०३-४-५) अन्नसंस्कारे अधिकारिणः । तेषांनियमः । आर्याधिष्ठितानां शूद्राणामपि अन्नसंस्काराधिकारः । तेषांनियमश्च । वैश्वदेवकरणप्रकारः विस्तृतः । अतिथिभोजनम् । अतिथ्युपासनस्य आवश्यकत्वम् । अनधीयानस्य ब्राह्मणस्य आतिथ्यप्रकारः । अतिथिभूतस्य शूद्रादेः आतिथ्यप्रकारः । ब्राह्मणस्य आपदि क्षत्रियादेरप्यध्ययनस्य कर्तव्यत्वम् । अतिथिभूतस्याचार्यादेरुपासनप्रकारः । शिष्येभ्यो विद्याप्रदाननियमः । तत्फलश्चेति ॥

३. तृतीयपटले— (ख०६-७) अतिथेर्जात्याचारसंशये तत्परिज्ञानप्रकारः । अतिथिलक्षणम् । तदुपासनप्रशंसा । तदुपासनप्रकारश्च । अतिथ्युपासनस्य क्रतुत्वनिरूपणम् । आहिताग्नेर्गृहस्थस्य आतिथ्युपासनप्रकारः अतिथ्युपासनपुण्यप्रशंसाचेति ॥

४ चतुर्थपटले— (ख०८-९) अतिथिभेदेन आतिथ्यप्रकारस्य नानात्वम् । अतिथ्यनुगमनप्रकारः । वैश्वदेवान्नभागिनः । आश्रमभेदेन ग्रासनिरूपणमिति ॥

**५. पंचमपटले—** (ख० १०-११-१२) याचननिमित्तानि । दानप्रकारः । वर्णभेदेन वृत्तिविवेचनम् । अयाज्यस्वरूपम् । शास्त्रोल्लङ्घिनां प्रायश्चित्तविधानम् । तदतिवर्तिनां राजादिमुखेन शिक्षाकरणम् । राज्ञा कर्तव्यो दण्डप्रकारः । मध्येमार्गं मिलितानामधिकारिभेदेन मार्गप्रदानप्रकारः । अघन्यवर्णस्य स्वधर्मानुष्ठानतः उत्तमवर्णत्वप्राप्तिः । उत्तमवर्णस्य अधर्मानुष्ठानतः जघन्यवर्णत्वप्राप्तिः । द्वितीयपाणिग्रहणनिमित्तम् । कन्यादानप्रकारः । कन्यादानप्रतिग्रहयोः वर्जनीयनिरूपणम् । ब्राह्मादिविवाहस्वरूपनिरूपणम् । अग्न्युपासनप्रकारः । गृहस्थधर्माणां केषाञ्चिन्निरूपणम् । अभिनिर्मुक्ताभ्युदितादीनां गर्हणम् इति ॥

**६. षष्ठपटले—** (ख० १३-१४-१५) यथाशास्त्रमनुष्ठितविवाहायाः पत्न्याः तदपत्यानां च प्रशंसा । बीजिप्राधान्यम् । दायविभागप्रकारः । भार्यादिमरणे अनुष्ठेयनियमः । होमप्रकारः । होमे अधिकारिणोऽनधिकारिणश्चेति ॥

**७. सप्तमपटले—** (ख० १६-१७) श्राद्धस्वरूपम् । श्राद्धविषये अपरपक्षस्य श्रैष्ठ्यम् । अपरपक्षे क्रियमाणस्य श्राद्धस्य प्रथमाद्यानुपूर्व्येण फलनिरूपणम् । श्राद्धार्हद्रव्यस्वरूपम् । श्राद्धे भोजनीयानां स्वरूपम् । श्राद्धे निमन्त्रणप्रकारः । निमन्त्रणे वर्जनीयानां ब्राह्मणानां च परिगणनम् । श्राद्धकालविवेचनम् इति ॥

**८. अष्टमपटले—** (ख० १८-१९-२०) श्राद्धे वर्जनीयानां पदार्थानां परिगणनम् । श्राद्धे अनुष्ठेयो नियमः । काम्यस्य श्राद्धस्य अनुष्ठानप्रकारः । भोजने नियमः । मासिश्राद्धविधिः । केषाञ्चिद्धर्माणां निरूपणं चेति ॥

**९. नवमपटले—** (ख० २१-२२-२३-२४) आश्रमविभागः । परिव्रजनप्रकारः । परिव्राड्धर्माः । वानप्रस्थस्वरूपम् । वानप्रस्थधर्माः । ऊर्ध्वरेतःप्रशंसा । पुण्यकृतां प्रशंसा । पापकृतां निन्दा चेति ॥

**१०. दशमपटले—** (ख० २५-२६-२७) राज्ञो गृहादिविन्यासप्रकारः । राज्ञा कर्तव्यो दण्डादिप्रणयनप्रकारः । राजधर्माः । दम्पत्योः परस्परमव्यतिक्रमः । व्यतिक्रमे प्रत्यवायः दण्डश्च । पुरुषवधस्तेयादिषु अपराधेषु दण्डप्रकारश्चेति ॥

**११. एकादशपटले—** ख० २८-२९ भूम्यादिपरस्वहारिणां दण्डप्रणयनविधिः । अदण्ड्यस्वरूपम् । अपराधिस्वरूपम् । अपराधसन्देहे निश्चयक्रमः । अनृताद्युक्तौ दण्डप्रकारः । सत्यप्रशंसा । स्त्र्यादिभ्योऽपि धर्मशेषस्य अवगन्तव्यतेति च एवंमादयो धर्माः बहवः आनुपूर्व्यान्न्यरूपयिषत । यथामति मया पटलक्रमेण तत्प्रतिपाद्यविषयाणां दिक्प्रदर्शनं कृतमिति विदन्तु सहृदयाः ॥

# ॥ सूचीपत्रम् ॥

## सूचीपत्रम् ।

सूचीपत्रम्।

सूचीपत्रम् ।

सूचीपत्रम् ।

## उज्ज्वलासहितापस्तम्बधर्मसूत्रस्य शोधनपत्रिका—

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १९ | वियम | नियम |
| २ | ७ | भणो | गुणो |
| ५ | ७ | सस्मवे | सम्भवे |
| १० | ७ | स्वप्स्यात् | स्वप्यात् |
| ११ | ८ | कत्र | कर्त्रे· |
| १५ | १७ | यान | यान् |
| २१ | २३ | ड | ऊ |
| २२ | २५ | एतत्क | एतत्कु |
| २२ | २६ | पीड | पीडय |
| २३ | २४ | शूक्त | शुक्त |
| २३ | २५ | शूक्त | शुक्त |
| ५२ | १७ | गपि | मपि |
| ५२ | १९ | पुरो | पुरे |
| ५६ | २० | गात् | गां |
| ५७ | ९ | यमेत् | धमेत् |
| ५९ | ३ | णीत्युप | ण्युप |
| ६० | १६ | मिदत् | मिद |
| ६० | २२ | निर्देश | निर्दश |
| ६० | २४ | निर्देश | निर्दश |
| ६२ | २४ | शूक्त | शुक्त |
| ६४ | ६ | शूक्त | शुक्त |
| ६४ | २६ | कीलल | कीलाल |
| ६४ | २६ | कीलल | कीलाल |
| ६८ | १८ | निर्वषे | निर्वपे |
| ६९ | २२ | यांवपा | यावावपा |
| ८० | २ | काशे उदकमिति | काशे क्षीरममुष्मिन्नवकाशे उदकमिति |

* अस्मिन्पुटे विद्यमानास्सर्वे शूक्तशब्दाः शुक्त इत्येव पठनीयाः

# उज्ज्वलासहितापस्तम्बधर्मसूत्रस्य शोधनपत्रिका ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९४ | १० | र्श्यायात् | श्रीयात् |
| ९५ | १९ | **बौंदक** | **हृदक** |
| ९६ | ७ | **त्पा** | **न्पा** |
| १०० | १ | बेदसा | वेदस्या |
| १०१ | २४ | शीता | शित |
| १०३ | २ | ण्यवहार | व्यवहार |
| १०७ | २७ | स्तम्भ | स्तम्भा |
| ११६ | १० | वगा | वमा |
| ११७ | ०७ | यक्त | युक्त |
| ११८ | ७ | हान | हीन |
| १२७ | १४ | मङ्गुमलि | मङ्गुलि |
| १३० | १८ | दिकगि | दिकमि |
| १३२ | ७ | निथिन | निर्थाना |
| १४२ | २७ | धान | धाने |
| १४३ | २६ | नानि | नामि |
| १४९ | २४ | भगि | मरि |
| १५२ | १९ | व्यभ | त्रिभ |
| १५२ | २१ | व्यम | त्रिम |
| १५५ | ३ | जय | चय |
| १५६ | १५ | व्यन् | व्यम् |
| १६० | ११ | **माद्य** | **मातृपुरुषाद्य** |
| १६१ | २० | **भर्ता** | **हर्ता** |
| १६० | २१ | भर्ता | हर्ता |
| १६५ | १३ | बर्त्मे | वर्त्मे |
| १७१ | १४ | निवेद | हिवेद |
| १७२ | ७ | **प्रशातः** | **प्रशास्त** |
| १७२ | ९ | प्रशात | प्रशास्त |
| १७२ | १३ | शक्य | शक्य |
| १७४ | २० | आन्या | अन्या |
| १७४ | २३ | ज्येष | ज्येष |

॥ शिवाभ्यां नमः ॥

# ॥ आपस्तम्बीयधर्मसूत्राणि ॥

॥ प्रथमप्रश्नप्रारम्भः ॥

ॐ अथातः सामयाचारिकान्धर्मान्व्याख्यास्यामः ॥१॥ धर्मज्ञसमयः प्रमाणम् ॥२॥ वेदाश्च ॥३॥ चत्वारोवर्णाब्राह्मणक्षत्रियवैश्यशूद्राः ॥४॥ तेषाम्पूर्वः पूर्वो जन्मतः श्रेयान् ॥५॥ अशूद्राणामदुष्टकर्मणामुपायनं वेदाध्ययनमग्न्याधेयं फलवन्ति च कर्माणि ॥६॥ शुश्रूषा शूद्रस्येतरेषां वर्णानाम् ॥७॥ पूर्वस्मिन् पूर्वस्मिन्वर्णे निःश्रेयसं भूयः ॥८॥ उपनयनं विद्यार्थस्य श्रुतितः संस्कारः ॥९॥ सर्वेभ्यो वै वेदेभ्यस्सावित्र्यनूच्यत इति हि ब्राह्मणम् ॥१०॥ तमसो वा एष तमः प्रविशति यमविद्वानुपनयते यश्चाविद्वानिति हि ब्राह्मणम् ॥११॥ तस्मिन्नभिजनविद्यासमुदेतं समाहितं संस्कर्तारमीप्सेत् ॥१२॥ तस्मिंश्चैव विद्याकर्मान्तमविप्रतिपन्ने धर्मेभ्यः ॥१३॥ यस्माद्धर्मानाचिनोति स आचार्यः ॥१४॥ तस्मै न द्रुह्येत्कदाचन ॥१५॥ स हि विद्यातस्तं जनयति ॥१६॥ तच्छ्रेष्ठं जन्म ॥१७॥ शरीरमे-

त्र मातापितरौ जनयतः ॥१८॥ वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यं गर्भाष्टमेषु ब्राह्मणं गर्भैकादशेषु राजन्यं गर्भद्वादशेषु वैश्यम् ॥१९॥ अथ काम्यानि ॥२०॥ सप्तमे ब्रह्मवर्चसकाममष्टम आयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादश इन्द्रियकामं द्वादशे पशुकामम् ॥२१॥ आ षोडशाद्ब्राह्मणस्यानात्यय आ द्वाविंशात्क्षत्रियस्या चतुर्विंशाद्वैश्यस्य ॥२२॥ यथा व्रतेषु समर्थः स्यात्तानि वक्ष्यामः ॥२३॥ अतिक्रान्ते सावित्र्याः काल ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेत् ॥२४॥ अथोपनयनम् ॥२५॥ ततस्संवत्सरमुदकोपस्पर्शनम् ॥२६॥ अथाध्याप्यः ॥२७॥ अथ यस्य पिता पितामह इत्यनुपेतौ स्यातां ते ब्रह्महसंस्तुताः ॥२८॥ तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत् ॥२९॥ तेषामिच्छतां प्रायश्चित्तम् ॥३०॥ यथा प्रथमेऽतिक्रम ऋतुरेवं संवत्सरः ॥३१॥ अथोपनयनम् ॥३२॥ तत उदकोपस्पर्शनम् ॥३३॥

॥ इति प्रथमा कण्डिका ॥ प्र० १ प० १ ख० १ ॥

गतिपूर्वं संख्याय संवत्सरान्यावन्तोऽनुपेताः स्युः ॥१॥ सप्तभिः पावमानीभिर्यदन्ति यच्च दूरक इत्येताभिर्यजुष्पवित्रेण सामपवित्रेणाङ्गिरसेनेति ॥२॥ अपि वा व्याहृतिभिरेव ॥३॥ अथाध्याप्यः ॥४॥ अथ यस्य प्रपितामहा-

दि नानुस्मर्येत उपनयनं ते श्मशानसंस्तुताः ॥५॥ तेषाम
भ्यागमनं भोजनं विवाहमिति च वर्जयेत्तेषामिच्छतां प्रा-
यश्चित्तं द्वादश वर्षाणि त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनं
तत उदकोपस्पर्शनं पावमान्यादिभिः ॥६॥ अथ गृहमेधो-
पदेशनम् ॥७॥ नाध्यापनम् ॥८॥ ततो यो निवर्तते तस्य-
संस्कारो यथा प्रथमेऽतिक्रमे ॥९॥ तत ऊर्ध्वं प्रकृतिवत् ॥१०॥
उपेतस्याचार्यकुले ब्रह्मचारिवासः ॥११॥ अष्टाचत्वारिं-
शद्वर्षाणि ॥१२॥ पादूनम् ॥१३॥ अर्धेन ॥१४॥ त्रिभिर्वा
॥१५॥ द्वादशावरार्ध्यम् ॥१६॥ न ब्रह्मचारिणो विद्यार्थस्य
परोपवासोऽस्ति ॥१७॥ अथ ब्रह्मचर्यविधिः ॥१८॥ आचा-
र्याधीनस्स्यादन्यत्र पतनीयेभ्यः ॥१९॥ हितकारी गुरोर-
प्रतिलोमयन्वाचा ॥२०॥ अधासनशायी ॥२१॥ नानुदेश्यं
भुञ्जीत ॥२२॥ तथा क्षारलवणमधुमांसानि ॥२३॥ अदिवा-
स्वापी ॥२४॥ अगन्धसेवी ॥२५॥ मैथुनं न चरेत् ॥२६॥
उत्सन्नश्लाघः ॥२७॥ अङ्गानि न प्रक्षालयीत ॥२८॥ प्र-
क्षालयीत त्वशुचिलिप्तानि गुरोरसन्दर्शने ॥२९॥ नाप्सु
श्लाघमानः स्नायाद्यदि स्नायाद्दण्डवत्प्लवेत् ॥३०॥
जटिलः ॥३१॥ शिखाजटो वा वापयेदितरान् ॥३२॥ मौ-
ञ्जी मेखला त्रिवृद्ब्राह्मणस्य शक्तिविषये दक्षिणावृत्तानाम्
॥३३॥ ज्या राजन्यस्य ॥३४॥ मौञ्जी वायोमिश्रा ॥३५॥

आवीसूत्रं वैश्यस्य ॥३६॥ सौरी तामली वेत्येके ॥३७॥ पालाशो दण्डो ब्राह्मणस्य नैयग्रोधः स्कन्धजोऽवाङ्ग्रो राजन्यस्य बादर औदुम्बरो वा वैश्यस्य वार्क्षो दण्ड इत्यवर्णसंयोगेनैक उपदिशन्ति ॥३८॥ वासः ॥३९॥ शाणीक्षौमाजिनानि ॥४०॥ काषायं चैके वस्त्रमुपदिशन्ति ॥४१॥

॥ इति द्वितीया खण्डिका (प्र० १ प० १ ख० २) ॥

माञ्जिष्ठं राजन्यस्य ॥१॥ हारिद्रं वैश्यस्य ॥२॥ हारिणमैणेयं वा कृष्णं ब्राह्मणस्य ॥३॥ कृष्णं चेदनुपास्तीर्णासनशायी स्यात् ॥४॥ रौरवं राजन्यस्य ॥५॥ बस्ताजिनं वैश्यस्य ॥६॥ आविकं सार्ववर्णिकम् ॥७॥ कम्बलश्च ॥८॥ ब्रह्मवृद्धिमिच्छन्नजिनान्येव वसीत क्षत्रवृद्धिमिच्छन् वस्त्राण्येवोभयवृद्धिमिच्छन्नुभयमिति हि ब्राह्मणम् ॥९॥ अजिनं त्वेवोत्तरं धारयेत् ॥१०॥ अनृत्तदर्शी ॥११॥ सभाः समाजांश्चागन्ता ॥१२॥ अजनवादशीलः ॥१३॥ रहश्शीलः ॥१४॥ गुरोरुदाचारेष्वकर्ता स्वैरिकर्माणि ॥१५॥ स्त्रीभिर्यावदर्थसम्भाषी ॥१६॥ मृदुः ॥१७॥ शान्तः ॥१८॥ दान्तः ॥१९॥ ह्रीमान् ॥२०॥ दृढधृतिः ॥२१॥ अग्लाँस्नुः ॥२२॥ अक्रोधनः ॥२३॥ अनसूयुः ॥२४॥ सर्वं लाभमाहरन् गुरवे सायम्प्रातरमत्रेण भिक्षाचर्यञ्चरेद्भिक्ष-

प्राणोऽन्यत्रापपात्रेभ्योऽभिशस्ताच्च॥ ॥२५॥ स्त्रीणां प्रत्याचक्षाणानां समाहितो ब्रह्मचारीष्टं दत्तं हुतं प्रजां पशून् ब्रह्मवर्चसमन्नाद्यं वृङ्क्ते । तस्मादु हवै ब्रह्मचारिसङ्घं चरन्तं न प्रत्याचक्षीतापि हैष्वेवंविध एवंव्रतःस्यादिति हि ब्राह्मणम् ॥२६॥ नानुमानेन भैक्षमुच्छिष्टं दृष्टश्रुताभ्यां तु ॥२७॥ भवत्पूर्वया ब्राह्मणो भिक्षेत ॥२८॥ भवन्मध्यया राजन्यः ॥२९॥ भवदन्त्यया वैश्यः ॥३०॥ तत्समाहृत्योपनिधायाचार्याय प्रब्रूयात् ॥३१॥ तेन प्रदिष्टं भुञ्जीत ॥३२॥ विप्रवासे गुरोराचार्यकुलाय ॥३३॥ तैर्विप्रवासेऽन्येभ्योऽपि श्रोत्रियेभ्यः ॥३४॥ नात्मप्रयोजनश्चरेत् ॥३५॥ भुक्त्वा स्वयममत्रं प्रक्षालयीत ॥३६॥ न चोच्छिष्टं कुर्यात् ॥३७॥ अशक्तौ भूमौ निखनेत् ॥३८॥ अप्सु वा प्रवेशयेत् ॥३९॥ आर्याय वा पर्यवदध्यात् ॥४०॥ अन्तर्धिने वा शूद्राय ॥४१॥ प्रोषितो भैक्षादग्नौ कृत्वा भुञ्जीत ॥४२॥ भैक्षं हविषा संस्तुतं तत्राचार्यो देवतार्थे ॥४३॥ आहवनीयार्थे च ॥४४॥ तं भोजयित्वा ॥४५॥

॥ इति तृतीया खण्डिका (प्र० १ प० १ ख० ३.) ॥

यदुच्छिष्टं प्राश्नाति ॥१॥ हविरुच्छिष्टमेव तत् ॥२॥ यदन्यानि द्रव्याणि यथालाभमुपहरति दक्षिणा एव ताः ॥३॥ स एष ब्रह्मचारिणो यज्ञो नित्यप्रततः ॥४॥ न चास्मै

श्रुतिविप्रतिषिद्धमुच्छिष्टं दद्यात् ॥५॥ यथा क्षारलवणमधुमांसादीनि ॥६॥ एतेनान्ये नियमा व्याख्याताः ॥७॥ श्रुतिर्हि बलीयस्यानुमानिकादाचारात् ॥८॥ दृश्यते चापि प्रवृत्तिकारणम् ॥९॥ प्रीतिर्ह्युपलभ्यते ॥१०॥ पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोक्तव्यम् ॥११॥ धर्मविप्रतिपत्तावभोज्यम् ॥१२॥ सायंप्रातरुदकुम्भमाहरेत् ॥१३॥ सदारण्यादेधानाहृत्याधो निदध्यात् ॥१४॥ नास्तमिते समिद्धारो गच्छेत् ॥१५॥ अग्निमिद्ध्वा परिसमूह्य समिध आदध्यात्सायं प्रातर्यथोपदेशम् ॥१६॥ सायमेवाग्निपूजेत्येके ॥१७॥ समिद्धमग्निं पाणिना परिसमूहेन्न समूहन्या ॥१८॥ प्राक्तु याथाकामी ॥१९॥ नाग्न्युदकशेषेण वृथा कर्माणि कुर्वीताचामेद्वा ॥२०॥ पाणिसंक्षुब्धेनोदकेनैकपाण्यावर्जितेन च नाचामेत् ॥२१॥ स्वप्नं च वर्जयेत् ॥२२॥ अथाहरहराचार्यं गोपायेद्धर्मार्थयुक्तैः कर्मभिः ॥२३॥ स गुप्त्वा संविशन्ब्रूयाद्धर्मगोपायमाजूगुपमहामिमिति ॥२४॥ प्रमादादाचार्यस्य बुद्धिपूर्वं वा नियमातिक्रमं रहसि बोधयेत ॥२५॥ अनिवृत्तौ स्वयं कर्माण्यारभेत ॥२६॥ निवर्तयेद्वा ॥२७॥ अथ यः पूर्वोत्थायी जघन्यसंवेशी तमाहुर्न स्वपितीति ॥२८॥ स य एवं प्रणिहितात्मा ब्रह्मचार्यत्रैवास्य सर्वाणि कर्माणि फल-

न्यवाप्तानि भवन्ति यान्यपि गृहमेधे ॥२९॥

(इति तुरीया खण्डिका) (प्र० १ प० १ख० ४)

इति चापस्तम्बधर्मसूत्रेषु प्रथम प्रश्ने प्रथम पटल. ॥१॥

नियमेषु तपश्शब्दः ॥१॥ तदतिक्रमे विद्याकर्म निःस्रवति ब्रह्म सहापत्यादेतस्मात् ॥२॥ कर्तपत्यमनायुष्यञ्च ॥ ३॥ तस्मादृषयोऽवरेषु न जायन्ते नियमातिक्रमात् ॥४॥ श्रुतर्षयस्तु भवन्ति केचित्कर्मफलशेषेण पुनस्सम्भवे॥५॥ यथा श्वेतकेतुः॥६॥ यत्किञ्च समाहितोऽब्रह्म प्याचार्यादुपयुङ्क्ते ब्रह्मवदेव तस्मिन् फलं भवति ॥७॥ अथो यत्किञ्च मनसा वाचा चक्षुषा वा सङ्कल्पयन्ध्यायत्याहाभिविपश्यति वा तथैव तद्भवतीत्युपादिशन्ति ॥८॥ गुरुप्रसादनीयानि कर्माणि स्वस्त्ययनमध्ययनसंवृत्तिः॥९॥इत्यतोऽन्यानि निवर्तन्ते ब्रह्मचारिणः कर्माणि ॥१०॥ स्वाध्यायधृग्धर्मरुचिस्तपस्व्यृजुर्मृदुः सिध्यति ब्रह्मचारी ॥ ११॥ सदा महान्तमपरात्रमुत्थाय गुरोस्तिष्ठन्प्रातरभिवादमभिवादयीतासावहम्भो इति ॥१२॥ समानग्रामे च वसतामन्येषामपि वृद्धतराणां प्राक्प्रातराशात् ॥१३॥ प्रोष्य च समागमे ॥१४॥ स्वर्गमायुश्चेप्सन् ॥१५॥ दक्षिणं बाहुं श्रोत्रसमं प्रसार्य ब्राह्मणोऽभिवादयीतोरस्समं राजन्यो मध्यसमं वैश्यो नीचैश्शूद्रः ॥१६॥ प्राञ्जलि ॥ १७॥ प्लावनञ्च नाम्नोऽभिवादनप्रत्याभिवादने च पूर्वे-

षां वर्णानाम् ॥१८॥ उदिते त्वादित्य आचार्येण समेत्योप- सङ्ग्रहणम् ॥१९॥ सदैवाभिवादनम् ॥२०॥ उपसंग्राह्य आ- चार्य इत्येके ॥२१॥ दक्षिणेन पाणिना दक्षिणं पादमधस्ता- दभ्यधिमृश्य सकुष्ठिकमुपसंगृह्णीयात् ॥२२॥ उभाभ्या- मेवोभावभिपीडयत उपसंग्राह्यावित्येके ॥२३॥ सर्वा- ह्णं सुयुक्तोऽध्ययनादनन्तरोऽध्याये ॥२४॥ तथा गुरुक- र्मसु ॥२५॥ मनसा चानध्याये ॥२६॥ आहूताध्यायी च स्यात् ॥२६॥

(इति पञ्चमी खण्डिका ॥ (प्र० १ प० २ ख० ५)

सदा निशायां गुरुं संवेशयेत्तस्य पादौ प्रक्षाल्य संवाह्य ॥१॥ अनुज्ञातस्संविशेत् ॥२॥ न चैनमभिप्रसारयीत ॥३॥ न खट्वायां सतोऽभिप्रसारणमस्तीत्येके ॥४॥ नचास्य स- काशे संविष्टो भाषेत ॥५॥ अभिभाषितस्त्वासीनः प्रति- ब्रूयात् ॥६॥ अनूत्थाय तिष्ठन्तम् ॥७॥ गच्छन्तमनुग- च्छेत् ॥८॥ धावन्तमनुधावेत् ॥९॥ न सोपानद्वेष्टित- शिरा अवहितपाणिर्वासीदेत् ॥१०॥ अध्वापन्नस्तु क- र्मयुक्तो वासीदेत् ॥११॥ न चेदुपसीदेत् ॥१२॥ देवमि- वाचार्यमुपासीताविकथयन्नविमना वाचं शुश्रूषमाणोऽ- स्य ॥१३॥ अनुपस्थकृतः ॥१४॥ अनुवाति वाते वीतः ॥१५॥ अप्रतिष्टब्धः पाणिना ॥१६॥ अनपाश्रितोऽन्य-

त्र ॥१७॥ यज्ञोपवीती द्विवस्त्रः ॥१८॥ अधोनिवीतस्त्वेकवस्त्रः ॥१९॥ अभिमुखोऽनभिमुखम् ॥२०॥ अनासन्नोऽनतिदूरे च ॥२१॥ यावदासीनो बाहुभ्यां प्राप्नुयात् ॥२२॥ अप्रतिवातम् ॥२३॥ एकाध्यायी दक्षिणं बाहुं प्रत्युपसीदेत् ॥२४॥ यथावकाशं बहवः ॥२५॥ तिष्ठति च नासीतानासनयोगविहिते ॥२६॥ आसीने च न संविशेत् ॥२७॥ चेष्टति च चिकीर्षंस्तच्छक्तिविषये ॥२८॥ न चास्य सकाशेऽन्वक्स्थानिन उपसंगृह्णीयात् ॥२९॥ गोत्रेण वा कीर्तयेत् ॥३०॥ न चैनं प्रत्युत्तिष्ठेदनूत्तिष्ठेद्वापि चेत्तस्य गुरुस्स्यात् ॥३१॥ देशात्त्वासनाच्च संसर्पेत् ॥३२॥ नाम्ना तदन्तेवासिनं गुरुमप्यात्मन इत्येके ॥३३॥ यस्मिंस्त्वनाचार्यसम्बन्धाद्गौरवं वृत्तिस्तस्मिन्नन्वक्स्थानीयेऽप्याचार्यस्य ॥३४॥ भुक्त्वा चास्य सकाशे नानूत्थायोच्छिष्टं प्रयच्छेत् ॥३५॥ आचामेद्वा ॥३६॥ किं करवाणीत्यामन्त्र्य ॥३७॥

॥ इति षष्ठी खण्डिका (प्र० १ प० २ ख० ६.) ॥

उत्तिष्ठेत्तूष्णीं वा ॥१॥ नापपर्यावर्तेत गुरोः प्रदक्षिणीकृत्यापेयात् ॥२॥ न प्रेक्षेत नग्नां स्त्रियम् ॥३॥ ओषधिवनस्पतीनामाच्छिद्य नोपजिघ्रेत् ॥४॥ उपानहौ छत्रं यानमिति वर्जयेत् ॥५॥ न स्मयेत ॥६॥ यदि स्मयेतापिगृह्य स्मयेतेति हि ब्राह्मणम् ॥७॥ नो-

पजिघ्रेत् स्त्रियं मुखेन ॥८॥ न हृदयेन प्रार्थयेत् ॥९॥ नाकारणादुपस्पृशेत् ॥१०॥ रजस्वलो रक्तदन्सत्यवादी स्यादिति हि ब्राह्मणम् ॥११॥ यां विद्यां कुरुते गुरौ तेऽध्यस्याचार्या ये तस्यां गुरोर्वंश्याः ॥१२॥ यानन्यान्पश्यतोऽस्योपसंगृह्णीयात्तदात्वे त उपसंग्राह्याः ॥१३॥ गुरुसमवाये भिक्षायामुत्पन्नायां यमनुबद्धस्तदधीना भिक्षा ॥१४॥ समावृत्तो मात्रे दद्यात् ॥१५॥ माता भर्तारं गमयेत् ॥१६॥ भर्ता गुरुम् ॥१७॥ धर्मकृत्येषु वोपयोजयेत् ॥१८॥ कृत्वा विद्यां यावतीं वेददक्षिणामाहरेद्धर्मतो यथाशक्ति ॥१९॥ विषमगते त्वाचार्य उग्रतः शूद्रतो वाहरेत् ॥२०॥ सर्वदा शूद्रत उग्रतो वाचार्यार्थस्याहरणं धर्म्यमित्येके ॥२१॥ दत्वा च नानुकथयेत् ॥२२॥ कृत्वा च नानुस्मरेत् ॥२३॥ आत्मप्रशंसां परगर्हामिति च वर्जयेत् ॥२४॥ प्रेषितस्तदेव प्रतिपद्येत ॥२५॥ शास्तुश्चानागमाद्वृत्तिरन्यत्र ॥२६॥ अन्यत्रोपसंग्रहणादुच्छिष्टाशनाच्चाचार्यवदाचार्यदारे वृत्तिः ॥२७॥ तथा समादिष्टेऽध्यापयति ॥२८॥ वृद्धतरे च सब्रह्मचारिणि ॥२९॥ उच्छिष्टाशनवर्जमाचार्यवदाचार्यपुत्रे वृत्तिः ॥३०॥ समावृत्तस्याप्येतदेव सामयाचारिकमेतेषु ॥३१॥

॥ इति सप्तमी खण्डिका (प्र० १ प० २ ख० ७) ॥

यथा ब्रह्मचारिणो वृत्तम् ॥ १ ॥ माल्यालिप्तमुख उपलिप्तकेशश्मश्रुरक्तोऽभ्यक्तो वेष्टित्युपवेष्टिती काञ्चुक्युपानही पादुकी ॥२॥ उदाचारेषु चास्यैतानि न कुर्यात्कारयेद्वा ॥३॥ स्वैरिकर्मसु च ॥४॥ यथा दन्तप्रक्षालनोत्सादनावलेखनानीति ॥ ५ ॥ तद्द्रव्याणां च न कथयेदात्मसंयोगेनाचार्यः ॥ ६ ॥ स्नातस्तु काले यथा विध्यभिहृतमाहृतोऽभ्येतो वा न प्रतिसंहरेदित्येके ॥७॥ उच्चैस्तरां नासीत ॥ ८ ॥ तथा बहुपादे ॥ ९ ॥ सर्वतःप्रतिष्ठिते ॥ १० ॥ शय्यासने चाचरिते नाविशेत् ॥ ११ ॥ यानमुक्तोऽध्वन्यन्वारोहेत् ॥ १२ ॥ सभानिकषकटस्वस्तरांश्च ॥ १३ ॥ नानभिभाषितो गुरुमभिभाषेत प्रियादन्यत् ॥१४॥ व्युपतोदव्युपजापव्यभिहासोदामन्त्रणनामधेयग्रहणप्रेषणानीति गुरोर्वर्जयेत् ॥ १५ ॥ आपद्यर्थं ज्ञापयेत् ॥ १६ ॥ सहवसन्सायं प्रातरनाहूतो गुरुं दर्शनार्थो गच्छेत् ॥ १७ ॥ विप्रोष्य च तदहरेव पश्येत् ॥ १८ ॥ आचार्यप्राचार्यसन्निपाते प्राचार्यायोपसंगृह्योपसञ्जिघृक्षेदाचार्यम् ॥ १९ ॥ प्रतिषेधेदितरः ॥२०॥ लुप्यते पूजा चास्य सकाशे ॥ २१ ॥ मुहूश्चाचार्यकुलं दर्शनार्थो गच्छेद्यथाशक्त्यधिहस्त्यमादायापि दन्तप्रक्षालनानीति ॥२२॥ मातरं पितरमाचार्यमग्नींश्च गृहाणि च रिक्तपाणिर्नोपगच्छेद्राजानं चेन्न श्रुतमिति ॥२३॥

तस्मिन्गुरोर्वृत्तिः ॥२४॥ पुत्रमिवैनमनुकांक्षन् सर्वधर्मेष्वनपच्छादयमानः सुयुक्तो विद्यां ग्राहयेत् ॥२५॥ न चैनमध्ययनविघ्नेनात्मार्थेषूपरुन्ध्यादनापत्सु ॥२६॥ अन्तेवास्यनन्तेवासी भवति विनिहितात्मा गुरावनैपुणमापद्यमानः ॥२७॥ आचार्योऽप्यनाचार्यो भवति श्रुतात्परिहरमाणः ॥२८॥ अपराधेषु चैनं सततमुपालभेत ॥२९॥ अभित्रास उपवास उदकोपस्पर्शनमदर्शनमिति दण्डा यथामात्रमानिवृत्तेः ॥३०॥ निवृत्तं चरितब्रह्मचर्यमन्येभ्यो धर्मेभ्योऽनन्तरो भवेत्यतिसृजेत् ॥३१॥

(इति अष्टमी खण्डिका) (प्र० १ प० २ ख० ८)

इति आपस्तम्बधर्मसूत्रे प्रथमप्रश्ने द्वितीयः पटलः ॥२॥

श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासं प्रदोषे नाधीयीत ॥१॥ तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेत् ॥२॥ अर्धपञ्चमांश्चतुरो मासानित्येके ॥३॥ निगमेष्वध्ययनं वर्जयेत् ॥४॥ आनडुहेन वा शकृत्पिण्डेनोपालिप्तेऽधीयीत ॥५॥ श्मशाने सर्वतश्शम्याप्रासात् ॥६॥ ग्रामेणाध्यवसिते क्षेत्रेण वा नानध्यायः ॥७॥ ज्ञायमाने तु तस्मिन्नेव देशे नाधीयीत ॥८॥ श्मशानवच्छूद्रपतितौ ॥९॥ समानागार इत्येके ॥१०॥ शूद्रायान्तु प्रेक्षणप्रतिप्रेक्षणयोरेवानाध्या-

यः ॥११॥ तथान्यस्यां स्त्रियां वर्णव्यतिक्रान्तायां मैथुने ॥१२॥ ब्रह्माध्येष्यमाणो मलवद्वाससेच्छन् सम्भाषितुं ब्राह्मणेन सम्भाष्य तथा सम्भाषेत सम्भाष्य तु ब्राह्मणेनैव सम्भाष्याधीयीत एवं तस्याः प्रजानिःश्रेयसम् ॥१३॥ अन्तश्शवम् ॥१४॥ अन्तश्चाण्डालम् ॥१५॥ अभिनिस्सृतानान्तु सीम्न्यनध्यायः ॥१६॥ सन्दर्शने चारण्ये ॥१७॥ तदहरागतेषु च ग्रामं बाह्येषु ॥१८॥ अपि सत्सु ॥१९॥ सन्धावनुस्तनिते रात्रिम् ॥२०॥ सर्वां रात्रिं नाधीयीत ॥२१॥ स्वप्नपर्यान्तं विद्युति ॥२२॥ उपव्युषं यावता वा कृष्णां सेहिगीमिति शम्याप्रासाद्विजानीयादेतस्मिन् काले विद्योतमाने सप्रदोषमहरनध्यायः ॥२३॥ दह्रेऽपररात्रे स्तनयित्नुना ॥२४॥ ऊर्ध्वमर्धरात्रादित्येके ॥२५॥ गवां चावरोधे ॥२६॥ वध्यानाञ्च यावता हन्यन्ते ॥२७॥ पृष्ठारूढः पशूनां नाधीयीत ॥२८॥ अहोरात्रावमावास्यासु ॥२९॥

(इति नवमी खण्डिका ॥ (प्र० १ प० ३ ख० ९)

चातुर्मासीषु च ॥१॥ वैरमणे गुरुष्वष्टाक्य औपाकरण इति त्र्यहाः ॥२॥ तथा सम्बन्धेषु ज्ञातिषु ॥३॥ मातरि पितर्याचार्य इति द्वादशाहाः ॥४॥ तेषु चोदकोपस्पर्शनं तावन्तं कालम् ॥५॥ अनुभाविनाञ्च परिवापनम् ॥६॥ न समावृत्ता वपेरन्नन्यत्र विहारादित्येके

॥७॥ अथापि ब्राह्मणम् । रिक्तो वा एषोऽनपिहितोऽयं मुण्डस्तस्यैतदपिधानं यच्छिखेति ॥८॥ सत्रेषु तु वचनाद्वपनं शिखायाः ॥९॥ आचार्ये त्रीनहोरात्रानित्येके ॥१०॥ श्रोत्रियसंस्थायामुपरिसंवत्सरायामेकाम् ॥ ॥११॥ सब्रह्मचारिणीत्येके ॥१२॥ श्रोत्रियाभ्यागमेऽधिजिगांसमानोऽधीयानो वानुज्ञाप्याधीयीत ॥१३॥ अध्यापयेद्वा ॥१४॥ गुरुसन्निधौ चाधीहि भो इत्युक्त्वाधीयीत ॥१५॥ अध्यापयेद्वा ॥१६॥ उभयत उपसंग्रहणमधिजिगांसमानस्याधीत्य च ॥१७॥ अधीयानेषु वा यत्रान्यो व्यपेयादेतमेव शब्दमुत्सृज्याधीयीत ॥१८॥ श्वगर्दभनादाः सलावृक्येकसृकोलूकशब्दास्सर्वे वादितशब्दा रोदनगीतसामशब्दाश्च ॥१९॥ शाखान्तरे च साम्नामनध्यायः ॥२०॥ सर्वेषु च शब्दकर्मसु यत्र संसृज्येरन् ॥२१॥ छर्दयित्वा स्वप्नान्तम् ॥ २२॥ सर्पिर्वा प्राश्य ॥२३॥ पूतिगन्धः ॥२४॥ शुक्तं चात्मसंयुक्तम् ॥२५॥ प्रदोषे च भुक्त्वा नाधीयीत ॥ २६॥ प्रोदकयोश्च पाण्योः ॥२७॥ प्रेतसंक्लृप्तं चान्नं भुक्त्वा सप्रदोषमहरनध्यायः ॥२८॥ आ च विपाकात् ॥ २९॥ अश्राद्धेन तु पर्यवदध्यात् ॥३०॥

(इति दशमी खण्डिका) (प्र० १ प० ३ ख० १०)

काण्डोपाकरणे चामातृकस्य ॥१॥ काण्डसमा-

पने चापितृकस्य ॥२॥ मनुष्यप्रकृतीनां च देवानां यज्ञे भुक्त्वेत्येके ॥३॥ पर्युषितैस्तण्डुलैराममांसेन च नानध्यायः ॥४॥ तथौषधिवनस्पतिमूलफलैः ॥५॥ यत्काण्डमुपाकुर्वीत तस्य चानुवाक्यं कुर्वीत न तत्तदहरधीयीत ॥६॥ उपाकरणसमापनयोश्च पारायणस्य ताविद्याम् ॥७॥ वायुर्घोषवान्भूमौ तृणसंवाहो वर्षति वा यत्र धाराः प्रवहेत् ॥८॥ ग्रामारण्ययोश्च सन्धौ महापथे च विप्रोष्य च समध्ययनं तदहः ॥९॥ स्वैरिकर्मसु च ॥१०॥ यथा दन्तप्रक्षालनोत्सादनानुलेखनानीति ॥११॥ तावन्तं कालं नाधीयीताध्यापयेद्वा ॥१२॥ सन्ध्योः ॥१३॥ तथा वृक्षमारूढोऽप्सु चावगाढो नक्तं चाप्रावृते ॥१४॥ दिवा च पिहिते ॥१५॥ अविहितमनुवाकाध्ययनमाषाढवासन्तिकयोः ॥१६॥ नित्यप्रश्नस्य चाविधिना ॥१७॥ तस्य विधिः ॥१८॥ अकृतप्रातराश उदकान्तं गत्वा प्रयतश्शुचौ देशेऽधीयीत यथाध्यायमुत्सृजन्वाचा ॥१९॥ मनसाचानध्याये ॥२०॥ विद्युति चाभ्यग्रायां स्तनयित्नावप्रायत्ये प्रेतान्ने नीहारे च मानसं परिचक्षते ॥२१॥ श्राद्धभोजन एवैके ॥२२॥ विद्युत्स्तनयित्नुर्वृष्टिश्चापर्त्तौ सन्निपतेयुस्त्र्यहमनध्यायः ॥२३॥ यावद्भूमिर्व्युदकेत्येके ॥२४॥ एकेन द्वाभ्यां वैतेषामाकालम् ॥२५॥ सूर्याचन्द्रमसोर्ग्रहणे भूमिचले-

ऽपस्वान उल्कायमग्न्युत्पाते च सर्वासां विद्यानां सार्वकालिकमाकालम् ॥ २६ ॥ अभ्रं चापर्तौ सूर्याचन्द्रमसोः परिवेष इन्द्रधनुः प्रति सूर्यमत्स्यश्च वाते पूतिगन्धे नीहारे च सर्वेष्वेतेषु तावत्कालम् ॥२७॥ मुहूर्तं विरते वाते ॥ २८ ॥ सलावृक्यामेकसृकइति स्वप्नपर्यन्तम् ॥ २९ ॥ नक्तं चारण्येऽनग्नावहिरण्ये वा ॥ ३० ॥ अननूक्तं चापर्त्तौ छन्दसो नाधीयीत ॥३१॥ प्रदोषे च ॥३२॥ सार्वकालिकमाम्नातम् ॥३३॥ यथोक्तमन्यदतः परिषत्सु ॥३४॥

(इति एकादशी खण्डिका) प्र० १ प० ३ ख० ११ ॥

इति चापस्तम्बधर्मसूत्रेषु प्रथमप्रश्ने तृतीयः पटलः ॥३॥

तपःस्वाध्याय इति ब्राह्मणम् ॥१॥ तत्र श्रूयते—स यदि तिष्ठन्नासीनः शयानो वा स्वाध्यायमधीते तप एव तत्तप्यते तपो हि स्वाध्याय इति ॥२॥ अथापि वाजसनेयिब्राह्मणम्। ब्रह्मयज्ञो ह वा एष यत्स्वाध्यायस्तस्यैते वषट्कारा यत्स्तनयति यद्विद्योतते यदवस्फूर्जति यद्वातो वायति तस्मात्स्तनयति विद्योतमानेऽवस्फूर्जति वाते वा वायत्यधीयीतैव वषट्काराणामच्छम्बट्कारायेति ॥३॥ तस्य शाखान्तरे वाक्यसमाप्तिः ॥४॥ अथ यदि वा वातो वायात्स्तनयेद्वा विद्योतेत वावस्फूर्जेद्वैकां वर्चमेकं वा यजुरेकं वा समाभिव्याह-

रेद्भूर्भुवस्सुवस्सत्यं तपः श्रद्धायां जुहोमीति वैतत् तेनो हैवास्यैतदहः स्वाध्याय उपात्तो भवति ॥५॥ एवं सत्यार्यसमयेनाविप्रतिषिद्धम् ॥६॥ अध्यायानध्यायं ह्युपदिशन्ति । तदनर्थकं स्याद्वाजसनेयिब्राह्मणं चेदवेक्षेत ॥७॥ आर्यसमयो ह्यगृह्यमानकारणः ॥८॥ विद्यां प्रत्यनध्यायः श्रूयते न कर्मयोगे मन्त्राणाम् ॥९॥ ब्राह्मणोक्ता विधयस्तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते॥१०॥ यत्र तु प्रीत्युपलब्धितः प्रवृत्तिर्न तत्र शास्त्रमस्ति ॥११॥ तदनुवर्तमानो नरकाय राध्यति ॥१२॥ अथ ब्राह्मणोक्ता विधयः ॥१३॥ तेषां महायज्ञा महासत्राणीति च संस्तुतिः ॥१४॥ अहरहर्भूतबलिर्मनुष्येभ्यो यथाशक्तिदानम् ॥१५॥

॥ (इति द्वादशी खण्डिका ॥ (प्र० १ प० ४ ख० १२) ॥

देवेभ्यः स्वाहाकार आकाष्ठात्पितृभ्यः स्वधाकार ओदपात्राहषिभ्यः स्वाध्याय इति ॥१॥ पूजा वर्णज्यायसां कार्या ॥२॥ वृद्धतराणाञ्च ॥३॥ हृष्टो दर्पति दृप्तो धर्ममतिक्रामति धर्मातिक्रमे खलु पुनर्नरकः ॥४॥ न समावृत्ते समादेशो विद्यते ॥ ५ ॥ ओङ्कारस्स्वर्गद्वारं तस्माद्ब्रह्माध्येष्यमाण एतदादि प्रतिपद्येत ॥६॥ विकथां चान्यां कृत्वैवं लौकिक्या वाचा व्यावर्तते

ब्रह्म ॥७॥ यज्ञेषु चैतदादयः प्रसवाः ॥८॥ लोके च भूतिकर्मस्वेतदादीन्येव वाक्यानि स्युर्यथा पुण्याहं स्वस्त्यृद्धिमिति ॥९॥ नासमयेन कृच्छ्रं कुर्वीत त्रिःश्रावणं त्रिस्सहवचनमिति परिहाप्य ॥१०॥ अविचिकित्सा यावद्ब्रह्म निगन्तव्यमिति हारीतः ॥११॥ न बहिर्वेदे गतिर्विद्यते ॥१२॥ समादिष्टमध्यापयन्तं यावदध्ययनमुपसङ्गृह्णीयात् ॥१३॥ नित्यमर्हन्तमित्येके ॥१४॥ न गतिर्विद्यते ॥१५॥ वृद्धानां तु ॥१६॥ ब्रह्मणि मिथो विनियोगे न गतिर्विद्यते ॥१७॥ ब्रह्म वर्धत इत्युपदिशन्ति ॥१८॥ निवेशे वृत्ते संवत्सरेसंवत्सरे द्वौद्वौ मासौ समाहित आचार्यकुले वसेद्भूयः श्रुतमिच्छन्निति श्वेतकेतुः ॥१९॥ एतेन ह्यहं योगेन भूयः पूर्वस्मात्कालाच्छ्रुतमकुर्वीति ॥२०॥ तच्छास्त्रैर्विप्रतिषिद्धम् ॥२१॥ निवेशे हि वृत्ते नैयमिकानि श्रूयन्ते ॥२२॥

॥ (इति त्रयोदशी खण्डिका) ॥ (प्र० १ प० ४ ख० १३) ॥

अग्निहोत्रमतिथयो यच्चान्यदेवं युक्तम् ॥१॥ अध्ययनार्थेन यं चोदयेन्न चैनं प्रत्याचक्षीत ॥२॥ न चास्मिन् दोषं पश्येत् ॥३॥ यदृच्छायामसंवृत्तौ गतिरेव तस्मिन् ॥४॥ मातरि पितर्याचार्यवच्छुश्रूषा ॥५॥ समावृत्तेन सर्वे गुरव उपसङ्ग्राह्याः ॥६॥ प्रोष्य च

समागमे ॥७॥ भ्रातृषु भगिनीषु च यथापूर्वमुपसंग्रहणम् ॥८॥ नित्या च पूजा यथोपदेशम् ॥९॥ ऋत्विक्छ्वशुरपितृव्यमातुलानवरवयसः प्रत्युत्थायाभिवदेत् ॥१०॥ तूष्णीं वोपसंगृह्णीयात् ॥११॥ दशवर्षं पौरसख्यं पञ्चवर्षं तु चारणम्। त्रिवर्षपूर्वः श्रोत्रियोऽभिवादनमर्हति ॥१२॥ ज्ञायमाने वयोविशेषे वृद्धतरायाभिवाद्यम् ॥१३॥ विषमगतायागुरवे नाभिवाद्यम् ॥१४॥ अन्वारुह्य वाभिवादयीत ॥१५॥ सर्वत्र तु प्रत्युत्थायाभिवादनम् ॥१६॥ अप्रयतेन नाभिवाद्यं तथा प्रयतायाप्रयतश्च न प्रत्यभिवदेत् ॥१७॥ पतिवयसः स्त्रियः ॥१८॥ न सोपानद्वेष्टितशिरा अवहितपाणिर्वाऽभिवादयीत ॥१९॥ सर्वनाम्ना स्त्रियो राजन्यवैश्यौ च ॥२०॥ न नाम्ना ॥२१॥ मातरमाचार्यदारं चेत्येके ॥२२॥ दशवर्षश्च ब्राह्मणः शतवर्षश्च क्षत्रियः। पितापुत्रौ स्म तौ विद्धि तयोस्तु ब्राह्मणः पिता ॥२३॥ कुशलमवरवयसं वयस्यं वा पृच्छेत् ॥२४॥ अनामयं क्षत्रियम् ॥२५॥ अनष्टं वैश्यम् ॥२६॥ आरोग्यं शूद्रम् ॥२७॥ नासम्भाष्य श्रोत्रियं व्यतिव्रजेत् ॥२८॥ अरण्ये च स्त्रियम् ॥२९॥

॥ (इति चतुर्दशी खण्डिका) प्र० १. प० ४ ख० १४.॥

इति चापस्तम्बधर्मसूत्रेषु प्रथमप्रश्ने चतुर्थः पटलः ॥४॥

उपासने गुरूणां वृद्धानामतिथीनां होमे जप्यकर्मणि भोजन आचमने स्वाध्याये च यज्ञोपवीती स्यात् ॥१॥ भूमिगतास्वप्स्वाचम्य प्रयतो भवति ॥२॥ यं वा प्रयत आचामयेत् ॥३॥ न वर्षधारास्वाचामेत् ॥४॥ तथा प्रदरोदके ॥५॥ तप्ताभिश्चाकारणात् ॥६॥ रिक्तपाणिर्वयस उद्यम्याप उपस्पृशेत् ॥७॥ शक्तिविषये न मुहूर्तमप्यप्रयतः स्यात् ॥८॥ नग्नो वा ॥९॥ नाप्सु सतः प्रयमणं विद्यते ॥१०॥ उत्तीर्य त्वाचामेत् ॥११॥ नाप्रोक्षितमिन्धनमग्नावादध्यात् ॥१२॥ मूढस्वस्तरे चासंस्पृशन्नन्यानप्रयतान्प्रयतो मन्येत ॥१३॥ तथातृणकाष्ठेषु निखातेषु ॥१४॥ प्रोक्ष्य वास उपयोजयेत् ॥१५॥ शुनोपहतः सचेलोऽवगाहेत ॥१६॥ प्रक्षाल्य वा तं देशमग्निना संस्पृश्य पुनः प्रक्षाल्य पादौ चाचम्य प्रयतो भवति ॥१७॥ अग्निं नाप्रयत आसीदेत् ॥१८॥ इषुमात्रादित्येके ॥१९॥ न चैनमुपधमेत् ॥२०॥ खट्वायां च नोपदध्यात् ॥२१॥ प्रभूतैधोदके ग्रामे यत्रात्माधीनं प्रयमणं तत्र वासो धार्म्यो ब्राह्मणस्य ॥२२॥ मूत्रं कृत्वा पुरीषं वा मूत्रपुरीषलेपानन्नलेपानुच्छिष्टलेपान्रेतसश्च ये लेपास्तान् प्रक्षाल्य पादौ चाचम्य प्रयतो भवति ॥२३॥

॥ इति पञ्चदशी खण्डिका ॥ प्र० १ प० ५ ख० १५ ॥

तिष्ठन्नाचामेत्प्रह्वो वा ॥१॥ आसीनस्त्रिराचामेद्धृदयङ्गमाभिरद्भिः ॥२॥ त्रिरोष्ठौ परिमृजेत् ॥३॥ द्विरित्येके ॥४॥ सकृदुपस्पृशेत् ॥५॥ द्विरित्येके ॥६॥ दक्षिणेन पाणिना सव्यं प्रोक्ष्य पादौ शिरश्चेन्द्रियाणीत्युपस्पृशेत् चक्षुषी नासिके श्रोत्रे च ॥७॥ अथाप उपस्पृशेत् ॥८॥ भोक्ष्यमाण स्तु प्रयतोऽपि द्विराचामेद्द्विः परिमृंजेत्सकृदुपस्पृशेत् ॥९॥ श्यावान्तपर्यन्तावोष्ठावुपस्पृश्याचामेत् ॥१०॥ न श्मश्रुभिरुच्छिष्टो भवत्यन्तरास्ये सद्भिः ॥११॥ यावन्न हस्तेनोपस्पृशति ॥१२॥ य आस्याद्बिन्दवः पतन्त उपलभ्यन्ते तेष्वाचमनं विहितम् ॥१३॥ ये भूमौ न तेष्वाचामेदित्येके ॥१४॥ स्वप्ने क्षवथौ शिङ्घाणिकाश्र्वालम्भे लोहितस्य केशानामग्नेर्गवां ब्राह्मणस्य स्त्रियाश्चालम्भे महापथं च गत्वामेध्यं चोपस्पृश्याप्रयतं च मनुष्यं नीवीञ्च परिधायाप उपस्पृशेत् ॥१५॥ आर्द्रं वा शकृदोषधीर्भूमिं वा ॥१६॥ हिंसार्थेनासिना मांसं च्छिन्नमभोज्यम् ॥१७॥ दद्भिरपूपस्य नापच्छिन्द्यात् ॥१८॥ यस्य कुले म्रियेत न तत्रानिर्दशे भोक्तव्यम ॥१९॥ तथानुत्थिताया सूतिकायाम् ॥२०॥ अन्तश्शवे च ॥२१॥ अप्रयतोपहतमन्नमप्रयतं न त्वभोज्यम ॥२२॥ अप्रयतेन तु शूद्रेणोपहृतमभोज्यम् ॥२३॥ यस्मिंश्चान्ने केशस्स्यात् ॥२४॥

अन्यद्वा मेध्यम् ॥२५॥ अमेध्यैरवमृष्टम् ॥२६॥ कीटोऽमेध्यसेवी ॥२७॥ मूषिकलाङ्गं वा ॥२८॥ पदा वोपहतम् ॥२९॥ सिचा वा ॥३०॥ शुना वापपात्रेण वा दृष्टम् ॥३१ सिचा वोपहतम् ॥३२॥ दास्या वा नक्तमाहृतम् ॥३३॥

॥ इति षोडशी खण्डिका ( प्र० १ प० ५ ख० १६ ) ॥

भुञ्जानं वा यत्र शूद्र उपस्पृशेत् ॥१॥ अनर्हद्भिर्वा समानपङ्क्तौ ॥२॥ भुञ्जानेषु वा यत्रानूत्थायोच्छिष्टं प्रयच्छेदाचामेद्वा ॥३॥ कुत्सयित्वा वा यत्रान्नं दद्युः॥४॥ मनुष्यैरवघ्रातमन्यैर्वामेध्यैः ॥५॥ न नावि भुञ्जीत ॥६॥ तथा प्रासादे ॥७॥ कृतभूमौ तु भुञ्जीत॥८॥ अनाप्रीते मृन्मये भोक्तव्यम्॥९॥ अप्रीतं चेदभिदग्धे ॥१०॥ परिमृष्टं लौहं प्रयतम् ॥११॥ निर्लिखितं दारुमयम् ॥१२॥ यथागमं यज्ञे ॥१३॥ नापणीयमन्नमश्नीयात् ॥१४॥ तथा रसानाममांसमधुलवणानीति परिहाप्य ॥१५॥ तैलसर्पिषी तूपयोजयेदुदकेऽवधाय॥१६॥ कृतान्नं पर्युषितमखाद्यापेयानाद्यम्॥१७॥ शुक्तं च॥१८॥ फाणितपृथुकतण्डुलकरम्बभरुजसक्तुशाकमांसपिष्टक्षीरविकारौषधिवनस्पतिमूलफलवर्जम् ॥ १९ ॥ शुक्तं चापरयोगम् ॥२०॥ सर्वं मद्यमपेयम्॥२१॥ त-

थैलकं पयः ॥२२॥ उष्ट्रीक्षीरमृगीक्षीरसन्धिनीक्षीरयमसूक्षीराणीति ॥२३॥ धेनोश्चानिर्दशायाः ॥२४॥ तथा कीलालौषधीनां च ॥२५॥ कलञ्जपलण्डुपरारीकाः ॥२६॥ यच्चान्यत्परिचक्षते ॥२७॥ क्याकुभोज्यमिति हि ब्राह्मणम् ॥२८॥ एकखुरोष्ट्रगवयग्रामसूकरशरभगवाम् ॥२९॥ धेन्वनडुहोर्भक्ष्यम् ॥३०॥ मेध्यमानडुहमिति वाजसनेयकम् ॥ ३१ ॥ कुक्कुटो विकिराणाम् ॥ ३२ ॥ प्लवः प्रतुदाम् ॥ ३३ ॥ क्रव्यादो हंसभासचक्रवाकसुपर्णाश्च कुञ्चक्रौञ्च वार्ध्राणसलक्ष्मणवर्जम् ॥ ३४ ॥ पञ्चनखानां गोधाकच्छपश्वाविट्छल्यकखड्गशशपूतिखषवर्जम् ॥ ३५ ॥ अभक्ष्यश्चेटो मत्स्यानाम् ॥ ३६ ॥ सर्पशीर्षी मृदुरः क्रव्यादो ये चान्ये विकृता यथा मनुष्यशिरसः ॥ ३७ ॥

॥ ( इति सप्तदशी खण्डिका ) ॥ (प्र० १ प० ५ ख० १७) ॥

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां प्रथमप्रश्ने पञ्चमः पटलः ॥ ५ ॥

मध्वामं मार्गं मांसं भूमिर्मूलफलानि रक्षा गव्यूतिर्निवेशनं युग्यघासश्चोग्रतः प्रतिग्राह्याणि ॥ १ ॥ एतान्यपि नानन्तेवास्याहृतानीति हारीतः ॥ २ ॥ आमं वा गृह्णीरन् ॥ ३ ॥ कृतान्नस्य वा विरसस्य ॥ ४ ॥ न सुभिक्षाः स्युः ॥ ५ ॥ स्वयमप्यवृत्तौ सुवर्णं दत्वा पशुं वा भुञ्जीत ॥ ६ ॥ नात्यन्तमन्ववस्येत् ॥ ७ ॥ वृ-

त्तिं प्राप्य विरमेत् ॥ ८ ॥ त्रयाणां वर्णानां क्षत्रियप्रभृतीनां समावृत्तेन न भोक्तव्यं प्रकृत्या ब्राह्मणस्य भोक्तव्यम् ॥ ९ ॥ कारणादभोज्यम् ॥ १० ॥ यत्राप्रायश्चित्तं कर्मासेवते प्रायश्चित्तवति ॥ ११ ॥ चरितनिर्वेषस्य भोक्तव्यम् ॥ १२ ॥ सर्ववर्णानां स्वधर्मे वर्तमानानां भोक्तव्यं शूद्रवर्जमित्येके ॥ १३ ॥ तस्यापि धर्मोपनतस्य ॥ १४ ॥ सुवर्णं दत्वा पशुं वा भुञ्जीत नात्यन्तमन्ववस्येद्वृत्तिं प्राप्य विरमेत् ॥ १५ ॥ सङ्घान्नमभोज्यम् ॥ १६ ॥ परिक्रुष्टं च ॥ १७ ॥ सर्वेषां च शिल्पाजीवानाम् ॥ १८ ॥ ये च शस्त्रमाजीवन्ति ॥ १९ ॥ ये चाधिम् ॥ २० ॥ भिषक् ॥ २१ ॥ वार्धुषिकः ॥ २२ ॥ दीक्षितोऽक्रीतराजकः ॥ २३ ॥ अग्नीषोमीयसंस्थायामेव ॥ २४ ॥ हुतायां वा वपायां दीक्षितस्य भोक्तव्यम् ॥ २५ ॥ यज्ञार्थे वा निर्दिष्टे शेषान्भुञ्जीरन्निति हि ब्राह्मणम् ॥ २६ ॥ क्लीबः ॥ २७ ॥ राज्ञां प्रेषकरः ॥ २८ ॥ अहविर्याजी ॥ २९ ॥ चारी ॥ ३० ॥ अविधिना च प्रव्रजितः ॥ ३१ ॥ यश्चाग्नीनपास्यति ॥ ३२ ॥ यश्च सर्वान्वर्जयते सर्वान्नी च श्रोत्रियो निराकृतिर्वृषलीपतिः ॥ ३३ ॥

॥ ( इति अष्टादशी खण्डिका ॥ ( प्र० १ प० ६ ख० १८ ) ॥

मत्त उन्मत्तो बद्धोऽणिकः प्रत्युपविष्टो यश्च प्रत्युपवेशयते तावन्तं कालम् ॥ १ ॥ क आश्यान्नः ॥ २ ॥

य ईप्सेदिति कण्वः ॥३॥ पुण्य इति कौत्सः ॥४॥ यः कश्चिद्दद्यादिति वार्ष्यायणिः ॥५॥ यदि हि रजः स्थावरं पुरुषे भोक्तव्यमथ चेच्चलं दानेन निर्दोषो भवति ॥६॥ शुद्धा भिक्षा भोक्तव्यैककुणिकौ काण्वकुत्सौ तथा पुष्करसादिः ॥७॥ सर्वतोपेतं वार्ष्यायणीयम् ॥८॥ पुण्यस्येप्सतो भोक्तव्यम् ॥९॥ पुण्यस्याप्यनीप्सतो न भोक्तव्यम् ॥१०॥ यतःकुतश्चाभ्युद्यतं भोक्तव्यम् ॥११॥ नाननियोगपूर्वमिति हारीतः ॥१२॥ अथ पुराणे श्लोकावुदाहरन्ति—उद्यतामाहृतां भिक्षां पुरस्तादप्रवेदिताम् । भोज्यां मेने प्रजापतिरपि दुष्कृतकारिणः ॥ न तस्य पितरोऽश्नन्ति दश वर्षाणि पञ्च च । न च हव्यं वहत्यग्निर्यस्तामभ्यधिमन्यते ॥ इति ॥१३॥ चिकित्सकस्य मृगयोश्शल्यकृन्तस्य पाशिनः । कुलटायाष्षण्डकस्य च तेषामन्नमनाद्यम् ॥१४॥ अथाप्युदाहरन्ति—अन्नादे भ्रूणहा मार्ष्टि अनेना अभिशंसति । स्तेनः प्रमुक्तो राजनि याचन्ननृतसङ्करे ॥ इति ॥१५॥

इति एकोनविंशतितमी खण्डिका (प्र० १ प० ६ ख० १९)
इति चापस्तम्बीयधर्मसूत्रेषु प्रथमप्रश्ने षष्ठः पटलः ॥ ६ ॥

— —

नेमं लौकिकमर्थं पुरस्कृत्य धर्मांश्चरेत् ॥१॥ निष्फला ह्यभ्युदये भवन्ति ॥२॥ तद्यथाम्रे फलार्थे नि-

मित्ते छाया गन्ध इत्यनूत्पद्येते । एवं धर्ममपि चर्यमाणमर्था अनूत्पद्यन्ते ॥३॥ नो चेदनूत्पद्यन्ते न धर्महानिर्भवति ॥४॥ अनसूयुर्दुष्प्रलम्भः स्यात्कुहकशठनास्तिकबालवादेषु ॥५॥ न धर्माधर्मौ चरत आवं स्व इति न देवगन्धर्वा न पितर इत्याचक्षतेऽयं धर्मोऽयमधर्म इति ॥६॥ यं त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मो यं गर्हन्ते सोऽधर्मः ॥७॥ सर्वजनपदेष्वेकान्तसमाहितमार्याणां वृत्तं सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामदाम्भिकानां वृत्तसादृश्यं भजेत ॥८॥ एवमुभौ लोकावभिजयति ॥९॥ अविहिता ब्राह्मणस्य वणिज्या ॥१०॥ आपदि व्यवहरेत पण्यानामपण्यानि व्युदस्यन् ॥११॥ मनुष्यान्रसान्रागान्गन्धानन्नं चर्म गवां वशां श्लेष्मोदके तोक्मकिण्वे पिप्पलीमरीचे धान्यं मांसमायुधं सुकृताशां च ॥१२॥ तिलतण्डुलांस्त्वेव धान्यस्य विशेषेण न विक्रीणीयात् ॥१३॥ अविहितश्चैतेषां मिथो विनिमयः ॥१४॥ अन्नेन चान्नस्य मनुष्याणां च मनुष्यैरसानां च रसैर्गन्धानां च गन्धैर्विद्यया च विद्यानाम् ॥१५॥ अक्रीतपण्यैर्व्यवहरेत ॥१६॥

इति विंशतितमी खण्डिका । (प्र० १ प० ७ ख० २०)

मुञ्जबल्बजैर्मूलफलैः ॥१॥ तृणकाष्ठैरविकृतैः ॥२॥ नात्यन्तमन्ववस्येत् ॥३॥ वृत्तिं प्राप्य विरमेत् ॥ ४ ॥ न पतितैस्संव्यवहारो विद्यते ॥५॥ तथाऽपपात्रैः ॥६॥ अथ पतनीयानि ॥७॥ स्तेयमाभिशस्त्यं पुरुषवधो ब्रह्मोज्झं गर्भशातनं मातुः पितुरिति योनिसम्बन्धे सहापत्ये स्त्रीगमनं सुरापानमसंयोगसंयोगः ॥८॥ गुर्वीसखिं गुरुसखिं च गत्वान्यांश्च परतल्पान् ॥९॥ नागुरुतल्पे पततीत्येके ॥१०॥ अधर्माणां तु सततमाचारः ॥११॥ अथाशुचिकराणि ॥१२॥ शूद्रगमनमार्यस्त्रीणाम् ॥ १३॥ प्रतिषिद्धानां मांसभक्षणम् ॥१४॥ शुनो मनुष्यस्य च कुक्कुटसूकराणां ग्राम्याणां क्रव्यादसाम् ॥१५॥ मनुष्याणां मूत्रपुरीषप्राशनम् ॥१६॥ शूद्रोच्छिष्टमपपात्रगमनं चार्याणाम् ॥१७॥ एतान्यपि पतनीयानीत्येके ॥१८॥ अतोऽन्यानि दोषवन्त्यशुचिकराणि भवन्ति ॥१९॥ दोषं बुध्वा न पूर्वः परेभ्यः पतितस्य समाख्याने स्याद्वर्जयेत्त्वेनं धर्मेषु ॥२०॥

॥( इति एकविंशतितमी खण्डिका ॥ ( प्र० १ प० ७ ख० २१ ) ॥
इति चापस्तम्बीयधर्मसूत्रेषु प्रथमप्रश्ने सप्तमः पटलः ॥ ७ ॥

ओं अध्यात्मिकान्योगाननुतिष्ठेन्न्यायसंहितानानैश्चारिकान् ॥१॥ आत्मलाभान्न परं विद्यते ॥२॥ त-

त्रात्मलाभीयाञ्छ्लोकानुदाहरिष्यामः ॥३॥ पूः प्राणिनः सर्व एव गुहाशयस्याहन्यमानस्य विकल्मषस्याचलं चलनिकेतं येऽनुतिष्ठन्ति तेऽमृताः ॥४॥ यदिदमिदिहेदिह लोके विषयमुच्यते विधूय कविरेतदनुतिष्ठेद्गुहाशयम् ॥५॥ आत्मन्नेवाहमलब्ध्वैतद्धितं सेवस्व नाहितम् । अथान्येषु प्रतीच्छामि साधुष्ठानमनपेक्षया । महान्तं तेजस्कायं सर्वत्र निहितं प्रभुम् ॥६॥ सर्वभूतेषु यो नित्यो विपश्चिदमृतो ध्रुवः । अनङ्गोऽशब्दोऽशरीरोऽस्पर्शश्च महाञ्छुचिः । स सर्वं परमा काष्ठा स वैषुवतं स वै वैभाजनं पुरम् ॥७॥ तं योऽनुतिष्ठेत्सर्वत्र प्राध्वं चास्य सदाचरेत् । दुर्दर्शं निपुणं युक्तो यः पश्येत्स मोदेत विष्टपे । इति ॥८॥

॥ ( इति द्वाविंशतितमी खण्डिका ॥ ( प्र० १ प० ८ ख० २२ ) ॥

आत्मन् पश्यन् सर्वभूतानि न मुह्येच्चिन्तयन् कविः । आत्मानं चैव सर्वत्र यः पश्येत्स वै ब्रह्मा नाकपृष्ठे विराजति ॥१॥ निपुणोऽणीयान् बिसोर्णाया यस्सर्वमावृत्य तिष्ठति । वर्षीयांश्च पृथिव्या ध्रुवः सर्वमारभ्य तिष्ठति । स इन्द्रियैर्जगतोऽस्य ज्ञानादन्योऽनन्यस्य ज्ञेयात्परमेष्ठी विभाजः । तस्मात्कायाः प्रभवन्ति सर्वे स मूलं शाश्वतिकः स नित्यः ॥२॥ दोषाणां

तु निर्घातो योगमूल इह जीविते । निर्हृत्य भूतदाहीयान् क्षेमं गच्छति पण्डितः ॥३॥ अथ भूतदाहीयान्दोषानुदाहरिष्यामः ॥४॥ क्रोधो हर्षो रोषो लोभो मोहो दम्भो द्रोहो मृषोद्यमत्याशपरीवादावसूया काममन्यू अनात्म्यमयोगस्तेषां योगमूलो निर्घातः ॥५॥ अक्रोधोऽहर्षोऽरोषोऽलोभोऽमोहोऽदम्भोऽद्रोहः सत्यवचनमनत्याशोऽपैशुनमनसूया संविभागस्त्याग आर्जवं मार्दवं शमो दमः सर्वभूतैरविरोधो योग आर्यमानृशंस्यं तुष्टिरिति सर्वाश्रमाणां समयपदानि तान्यनुतिष्ठन्विधिना सार्वगामी भवति ॥६॥

॥ इति त्रयोविंशतितमी खण्डिका ( प्र० १ प० ८ ख० २३ ) ॥

इति चापस्तम्बधर्मसूत्रेषु प्रथमप्रश्ने अष्टमः पटलः ॥८॥

---

क्षत्रियं हत्वा गवां सहस्रं वैरयातनार्थं दद्यात् ॥१॥ शतं वैश्ये ॥२॥ दश शूद्रे ॥३॥ ऋषभश्चात्राधिकः सर्वत्र प्रायश्चित्तार्थः ॥४॥ स्त्रीषु चैतेषामेवम् ॥५॥ पूर्वयोर्वर्णयोर्वेदाध्यायं हत्वा सवनगतं वाभिशस्तः ॥६॥ ब्राह्मणमात्रं च ॥७॥ गर्भं च तस्याविज्ञातम् ॥८॥ आत्रेयीं च स्त्रियम् ॥९॥ तस्य निर्वेषः ॥१०॥ आरण्यके कुटिं कृत्वा वाग्यतः शवशिरध्वजोऽर्धशाणीपक्षमधोनाभ्युपरिजान्वाच्छाद्य ॥११॥ तस्य पन्था अन्त-

रा वर्त्मनि ॥१२॥ दृष्ट्वा चान्यमुत्क्रामेत् ॥१३॥ खण्डेन लोहितकेन शरावेण ग्रामे प्रतिष्ठेत ॥१४॥ कोऽभिशस्ताय भिक्षामिति सप्तागाराणि चरेत् ॥१५॥ सा वृत्तिः ॥१६॥ अलब्ध्वोपवासः ॥१७॥ गाश्च रक्षेत् ॥१८॥ तासां निष्क्रमणप्रवेशने द्वितीयो ग्रामेऽर्थः॥१९॥ द्वादश वर्षाणि व्रतमेतच्चरित्वा सिद्धः सद्भिः सम्प्रयोगः ॥२०॥ आजिपथे वा कुटिं कृत्वा ब्राह्मणगव्योऽपजिगीषमाणो वसेत्त्रिः प्रतिराद्धोऽपजित्य वा मुक्तः॥२१॥ आश्वमेधिकं वावभृथमवेत्य मुच्यते ॥२२॥ धर्मार्थसन्निपातेऽर्थग्राहिण एतदेव ॥२३॥ गुरुं हत्वा श्रोत्रियं वा कर्मसमाप्तमेतेनैव विधिनोत्तमादुच्छ्वासाच्चरेत् ॥२४॥ नास्यास्मिँल्लोके प्रत्यापत्तिर्विद्यते कल्मषं तु निर्हण्यते ॥२५॥

॥ (इति चतुर्विंशतितमी-खण्डिका) ॥ (प्र० १ प० ९ ख० २४) ॥

गुरुतल्पगामी सवृषणं शिश्नं परिवास्याञ्जलावाधाय दक्षिणां दिशमनावृत्तिं व्रजेत् ॥१॥ ज्वलितां वा सूर्मिं परिष्वज्य समाप्नुयात् ॥२॥ सुरापोऽग्निस्पर्शां सुरां पिबेत् ॥३॥ स्तेनः प्रकीर्णकेशोंऽसे मुसलमाधाय राजानं गत्वा कर्माचक्षीत । तेनैनं हन्याद्वधे मोक्षः ॥४॥ अनुज्ञातेऽनुज्ञातारमेनः

स्पृशति ॥५॥ अग्निं वा प्रविशेत् ॥६॥ तीक्ष्णं वा तप आयच्छेत् ॥७॥ भक्तापचयेन वात्मानं समाप्नुयात् ॥८॥ कृच्छ्रसंवत्सरं वा चरेत् ॥९॥ अथाप्युदाहरन्ति ॥१०॥ स्तेयं कृत्वा सुरां पीत्वा गुरुदारं च गत्वा ब्रह्महत्यामकृत्वा । चतुर्थकाला मितभोजिनः स्युरपोऽभ्युपेयुः सवनानुकल्पम् । स्थानासनाभ्यां विहरन्त एते त्रिभिर्वर्षैरपपापं नुदन्ते ॥११॥ प्रथमं वर्णं परिहाप्य प्रथमं वर्णं हत्वा सङ्ग्रामं गत्वावतिष्ठेत तत्रैनं हन्युः ॥१२॥ अपि वा लोमानि त्वचं मांसमिति हावयित्वाग्निं प्रविशेत् ॥१३॥ वायसप्रचलाकबर्हिणचक्रवाकहंसभासमण्डूकनकुलडेरिकाश्वहिंसायां शूद्रवत्प्रायश्चित्तम् ॥१४॥

॥ ( इति पञ्चविंशतितमी खण्डिका ) ॥ (प्र० १ प० ९ ख० २५) ॥

धेन्वनडुहोश्चाकारणात् ॥१॥ धुर्यवाहप्रवृत्तौ चेतरेषां प्राणिनाम् ॥२॥ अनाक्रोश्यमाक्रुश्यानृतं वोक्त्वा त्रिरात्रमक्षीराक्षारलवणभोजनम् ॥३॥ शूद्रस्य सप्तरात्रमभोजनम् ॥४॥ स्त्रीणां चैवम् ॥५॥ येष्वाभिशस्त्यं तेषामेकाङ्गं छित्वाप्राणहिंसायाम् ॥६॥ अनार्यपैशुनप्रतिषिद्धाचारेष्वभक्ष्याभोज्यापेयप्राशने । शूद्रायां च रेतस्सिक्त्वा योनौ च दोषवच्च कर्मा-

भिसन्धिपूर्वं कृत्वानभिसन्धिपूर्वं वाब्लिङ्गाभिरप उ-
पस्पृशेद्वारुणीभिर्वान्यैर्वा पवित्रमन्त्रैर्यथा कर्माभ्या-
सः ॥७॥ गर्दभेनावकीर्णी निर्ऋतिं पाकयज्ञेन यजे-
त ॥८॥ तस्य शूद्रः प्राश्नीयात् ॥९॥ मिथ्याधीत-
प्रायश्चित्तम् ॥१०॥ संवत्सरमाचार्यहिते वर्तमानो
वाचं यच्छेत्स्वाध्याय एवोत्सृजमानो वाचमाचार्य
आचार्यदारे वा भिक्षाचर्ये च ॥११॥ एवमन्येष्वपि
दोषवत्स्वपतनीयेषूत्तराणि यानि वक्ष्यामः ॥१२॥ का-
ममन्युभ्यां वा जुहुयात्कामोऽकार्षीन्मन्युरकार्षीदिति
॥१३॥ जपेद्वा ॥१४॥ पर्वणि वा तिलभक्ष उपोष्य-
वा श्वोभूत उदकमुपस्पृश्य सावित्रीं प्राणायामश-
स्सहस्रकृत्व आवर्तयेदप्राणायामशो वा ॥१५॥

॥ इति षड्विंशतितमी खण्डिका ॥प्र० १ प० ९ ख० २६ ॥

श्रावण्यां पौर्णमास्यां तिलभक्ष उपोष्य श्वो
वा भूते महानदमुदकमुपस्पृश्य सावित्र्या समित्स-
हस्रमादध्याज्जपेद्वा ॥१॥ इष्टियज्ञक्रतून्वा पवित्रार्था-
नाहरेत् ॥२॥ अभोज्यं भुक्त्वा नैष्पुरीष्यम् ॥३॥
तत्सप्तरात्रेणावाप्यते ॥४॥ हेमन्तशिशिरयोर्वोभयोस्स-
न्ध्योर्वोदकमुपस्पृशेत् ॥५॥ कृच्छ्रद्वादशरात्रं वा चरेत्
॥६॥ त्र्यहमनक्ताश्यदिवाशी ततस्त्र्यहं त्र्यहमयाचि-

तव्रतस्त्र्यहं नाश्नाति किञ्चनेति कृच्छ्रद्वादशरात्रस्य विधिः ॥७॥ एतमेवाभ्यस्येत्संवत्सरं स कृच्छ्रसंवत्सरः ॥८॥ अथापरं बहून्यप्यपतनीयानि कृत्वा त्रिभिरनश्नत्पारायणैः कृतप्रायश्चित्तो भवति ॥९॥ अनार्यां शयने बिभ्रद्ददद्वृद्धिं कषायपः । अब्राह्मण इव वन्दित्वा तृणेष्वासीत पृष्ठतप् ॥१०॥ यदेकरात्रेण करोति पापं कृष्णं वर्णं ब्राह्मणः सेवमानश्चतुर्थकाल उदकाभ्यवायी त्रिभिर्वर्षैस्तदपहन्ति पापम् ॥११॥

॥ इति सप्तविंशतितमी खण्डिका (प्र० १ प० ९ ख० २७) ॥

॥ इति चापस्तम्बधर्मसूत्रेषु प्रथमप्रश्ने नवमः पटलः ॥९॥

---

यथा कथा च परपरिग्रहमभिमन्यते स्तेनो ह भवतीति कौत्सहारीतौ तथा काण्वपुष्करसादी ॥१॥ सन्त्यपवादाः परपरिग्रहेष्विति वार्ष्यायणिः ॥२॥ शाम्योषा युग्यघासो न स्वामिनः प्रतिषेधयन्ति ॥३॥ अतिव्यवहारो वृद्धो भवति ॥४॥ सर्वत्रानुमतिपूर्वमिति हारीतः ॥५॥ न पतितमाचार्यं ज्ञातिं वा दर्शनार्थो गच्छेत् ॥६॥ न चास्माद्भोगानुपयुञ्जीत ॥७॥ यदृच्छासन्निपात उपसंगृह्य तूष्णीं व्यतिव्रजेत् ॥८॥ माता पुत्रत्वस्य भूयांसि कर्माण्यारभते तस्यां शुश्रूषा

नित्या पतितायामपि ॥९॥ न तु धर्मसन्निवापः स्यात् ॥१०॥ अधर्माहृतान्भोगाननुज्ञाय न वयं चाधर्मश्चेत्यभिव्याहृत्याधोनाभ्युपरिजान्वाच्छाद्य त्रिषवणमुदकमुपस्पृशन्नक्षीराक्षारलवणं भुञ्जानो द्वादश वर्षाणि नागारं प्रविशेत् ॥११॥ ततः सिद्धिः ॥१२॥ अथ सम्प्रयोगस्स्यादार्यैः ॥१३॥ एतदेवान्येषामपि पतनीयानाम् ॥१४॥ गुरुतल्पगामी तु सुषिरां सूर्मिं प्रविश्योभयत आदीप्याभिदहेदात्मानम् ॥१५॥ मिथ्यैतदिति हारीतः ॥१६॥ यो ह्यात्मानं परं वाभिमन्यतेऽभिशस्त एव स भवति ॥१७॥ एतेनैव विधिनोत्तमादुच्छ्वासाच्चरेन्नास्यास्मिँल्लोके प्रत्यापत्तिर्विद्यते कल्मषं तु निर्हण्यते ॥१८॥ दारव्यतिक्रमी खराजिनं बहिर्लोम परिधाय दारव्यतिक्रमिणे भिक्षामिति सप्तागाराणि चरेत् । सा वृत्तिः षण्मासान् ॥१९॥ स्त्रियास्तु भर्तृ(र्तु)र्व्यतिक्रमे कृच्छ्रद्वादशरात्राभ्यासस्तावन्तं कालम् ॥२०॥

॥ इति अष्टाविंशतितमी खण्डिका । (प्र० १ प० १० ख० २८ ॥)

अथ भ्रूणहा श्वाजिनं खराजिनं वा बहिर्लोम परिधाय पुरुषशिरः प्रतीपानार्थमादाय खट्वाङ्गं दण्डार्थे कर्मनामधेयं प्रब्रुवाणश्चङ्क्रम्येत् को भ्रूणघ्ने

भिक्षामिति । ग्रामे प्राणवृत्तिं प्रतिलभ्य शून्यागारं वृक्षमूलं वाभ्युपाश्रयेन्न हि म आर्यैः सम्प्रयोगो विद्यते ॥१॥ एतेनैवोत्तमादुच्छ्वासाच्चरेत् नास्यास्मिँल्लोके प्रत्यापत्तिर्विद्यते । कल्मषं तु निर्हण्यते ॥२॥ यः प्रमत्तो हन्ति प्राप्तं दोषफलम् ॥३॥ सह सङ्कल्पेन भूयः ॥४॥ एवमन्येष्वपि दोषवत्सु कर्मसु ॥५॥ तथा पुण्यक्रियासु ॥६॥ परीक्षार्थोऽपि ब्राह्मण आयुधं नाददीत ॥७॥ यो हिंसार्थमभिक्रान्तं हन्ति मन्युरेव मन्युं स्पृशति न तस्मिन् दोष इति पुराणे ॥८॥ अथाभिशस्ताः समवसाय चरेयुर्धार्म्यमिति सांशित्येतरेतरयाजका इतरेतराध्यापका मिथो विवहमानाः ॥९॥ पुत्रान् सन्निष्पाद्य ब्रूयुर्विप्रव्रजतास्मदेवं ह्यस्मत्स्वार्याः सम्प्रत्यपत्स्यतेति ॥१०॥ अथापि न सेन्द्रियः पतति ॥११॥ तदेतेन वेदितव्यमङ्गहीनो हि साङ्गं जनयति ॥१२॥ मिथ्यैतदिति हारीतः ॥१३॥ दधिधानीसधर्मा स्त्री भवति ॥१४॥ यो हि दधिधान्यामप्रयतं पय आतच्य मन्थति न तेन धर्मकृत्यं क्रियत एवमशुचि शुक्लं यन्निवर्तते न तेन सह सम्प्रयोगो विद्यते ॥१५॥ अभीचारानुव्यवहारावशुचिकरावपतनीयौ ॥१६॥ पतनीयाविति हारीतः ॥१७॥ पतनीयवृत्तिस्त्वशुचिकराणां द्वादशमासान्

द्वादशार्धमासान् द्वादशं द्वादशाहान् द्वादश सप्ताहान् द्वादश त्र्यहान् द्वादशाहं सप्ताहं त्र्यहमेकाहम् ॥१८॥ इत्यशुचिकरनिर्वेषो यथा कर्माभ्यासः ॥१९॥

॥ इति एकोनत्रिंशत्तमी खण्डिका । (प्र० १ प० १० ख० २९ ॥)

इति चापस्तम्बधर्मसूत्रेषु प्रथमप्रश्ने दशमः पटलः ॥१०॥

---

विद्यया स्नातीत्येके ॥१॥ अथाव्रतेनाष्टाचत्वारिंशत्परीमाणेन ॥२॥ विद्याव्रतेन चेत्येके ॥३॥ तेषु सर्वेषु स्नातकवद्वृत्तिः ॥४॥ समाधिविशेषाच्छ्रुतिविशेषाच्च पूजायां फलविशेषः ॥५॥ अथ स्नातकव्रतानि ॥६॥ पूर्वेण ग्रामान्निष्क्रमणप्रवेशनानि शीलयेदुत्तरेण वा ॥७॥ सन्ध्योश्च बहिर्ग्रामादासनं वाग्यतश्च ॥८॥ विप्रतिषेधे श्रुतिलक्षणं बलीयः ॥९॥ सर्वान्रागान्वासांसि वर्जयेत् ॥१०॥ कृष्णं च स्वाभाविकम् ॥११॥ अनूद्भासि वासो वसीत ॥१२॥ अप्रतिकृष्टं च शक्तिविषये ॥१३॥ दिवा च शिरसः प्रावरणं वर्जयेन्मूत्रपुरीषयोः कर्म परिहाप्य ॥१४॥ शिरस्तु प्रावृत्य मूत्रपुरीषे कुर्यात् भूम्यां किञ्चिदन्तर्धाय ॥१५॥ छायायां मूत्रपुरीषयोः कर्म वर्जयेत् ॥१६॥ स्वां तु छायामवमेहेत ॥१७॥ न सोपानन्मूत्रपुरीषे

कुर्यात् ॥१८॥ कृष्टे ॥१९॥ पथि ॥२०॥ अप्सु च ॥२१॥ तथा ष्ठेवनमैथुनयोः ॥२२॥ कर्माप्सु वर्जयेत् ॥२३॥ अग्निम् ॥२४॥ आदित्यम् ॥२५॥ अपः ॥२६॥ ब्राह्मणम् ॥२७॥ गा देवताश्च ॥२८॥ अभिमुखो मूत्रपुरीषयोः कर्म वर्जयेत् ॥२९॥ अश्मानं लोष्टमार्द्रानोषधिवनस्पतीनूर्ध्वानाच्छिद्य मूत्रपुरीषयोः शुन्धने वर्जयेत् ॥३०॥ अग्निमादित्यमपो ब्राह्मणं गा देवता द्वारं प्रति पादं च शक्तिविषये नाभिप्रसारयीत ॥३१॥ अथाप्युदाहरन्ति ॥३२॥

॥ इति त्रिंशत्तमी खण्डिका ॥ (प्र० १ प० ११ ख० ३० ॥)

प्राङ्मुखोऽन्नानि भुञ्जीतोच्चरेद्दक्षिणामुख उदङ्मुखो मूत्रं कुर्यात्प्रत्यक्पादावनेजनमिति ॥१॥ आराच्चावसथान्मूत्रपुरीषे कुर्याद्दक्षिणां दिशं दक्षिणापरां वा ॥२॥ अस्तमिते च बहिर्ग्रामादारादावसथाद्वा मूत्रपुरीषयोः कर्म वर्जयेत् ॥३॥ देवताभिधानं चाप्रयतः ॥४॥ पुरुषं चोभयोर्देवतानां राज्ञश्च ॥५॥ ब्राह्मणस्य गोरिति पदोपस्पर्शनं वर्जयेत् ॥६॥ हस्तेन चाकारणात् ॥७॥ गोर्दक्षिणानां कुमार्याश्च परीवादान्वर्जयेत् ॥८॥ स्तृहतीं च गां नाचक्षीत ॥९॥ संसृष्टां च वत्सेनानिमित्ते ॥१०॥ नाधेनुमधेनुरिति ब्रूयात् ॥११॥

धेनूभव्येत्येव ब्रूयात् ॥१२॥ न भद्रं भद्रमिति ब्रूयात् ॥१३॥ पुण्यं प्रशास्तमित्येवं ब्रूयात् ॥१४॥ वत्सतन्तीं च नोपरिगच्छेत् ॥१५॥ प्रेङ्खावन्तरेण च नातीयात् ॥१६॥ नासौ मे सपत्न इति ब्रूयाद्यदसौ मे सपत्न इति ब्रूयाद्द्विषन्तं भ्रातृव्यं जनयेत् ॥१७॥ नेन्द्रधनुरिति परस्मै प्रब्रूयात् ॥१८॥ न पततः सञ्चक्षीत ॥१९॥ उद्यन्तमस्तं यन्तं चादित्यं दर्शने वर्जयेत् ॥२०॥ दिवादित्यः सत्त्वानि गोपायति नक्तं चन्द्रमास्तस्मादमावास्यायां निशायां स्वाधीय आत्मनो गुप्तिमिच्छेत् प्रायत्यब्रह्मचर्यकालेचर्यये च ॥२१॥ सह ह्येतां रात्रिं सूर्याचन्द्रमसौ वसतः ॥२२॥ न कुसृत्या ग्रामं प्रविशेत् ॥२३॥ यदि प्रविशेन्नमो रुद्राय वास्तोष्पतय इत्येतामृचं जपेदन्यां वा रौद्रीम् ॥२४॥ नाब्राह्मणायोच्छिष्टं प्रयच्छेत् ॥२५॥ यदि प्रयच्छेद्दन्तान्स्कुप्त्वा तस्मिन्नवधाय प्रयच्छेत् ॥२६॥ क्रोधादींश्च भूतदाहीयान्दोषान्वर्जयेत् ॥२७॥

॥ (इति एकत्रिंशत्तमी खण्डिका) प्र० १ प० ११ ख० ३१ ॥

प्रवचनयुक्तो वर्षाशरदं मैथुनं वर्जयेत् ॥१॥ मिथुनीभूय च न तया सह सर्वां रात्रिं शयीत ॥२॥

शयानश्चाध्यापनं वर्जयेत् ॥३॥ न च तस्यां शय्यायामध्यापयेद्यस्यां शयीत ॥४॥ अनाविःस्रगनुलेपणस्स्यात् ॥५॥ सदा निशायां दारं प्रत्यलङ्कुर्वीत ॥६॥ सशिरा वमज्जनमप्सु वर्जयेत् ॥७॥ अस्तमिते च स्नानम् ॥८॥ पालाशमासनं पादुके दन्तप्रक्षालनमिति च वर्जयेत ॥९॥ स्तुतिं च गुरोस्संमक्षं यथा सुस्नातमिति ॥१०॥ आ निशाया जागरणम् ॥११॥ अनध्यायो निशायामन्यत्र धर्मोपदेशाच्छिष्येभ्यः ॥१२॥ मनसा वा स्वयम् ॥१३॥ ऊर्ध्वमर्धरात्रादध्यापनम् ॥१४॥ नापररात्रमुत्थायानध्याय इति संविशेत् ॥१५॥ काममपाश्शयीत ॥१६॥ मनसा वाधीयीत ॥१७॥ क्षुद्रान् क्षुद्राचरितांश्च देशान्न सेवेत ॥१८॥ सभास्समाजांश्च ॥१९॥ समाजं चेद्गच्छेत्प्रदक्षिणीकृत्यापेयात् ॥२०॥ नगरप्रवेशनानि च वर्जयेत् ॥२१॥ प्रश्नं च न विब्रूयात् ॥२२॥ अथाप्युदाहरन्ति ॥२३॥ मूलं तूलं वृहति दुर्विवक्तुः प्रजां पशूनायतनं हिनस्ति । धर्मप्रह्रादन कुमालनाय रुदन् ह मृत्युर्व्युवाच प्रश्नम् । इति ॥२४॥ गार्दभं यानमारोहणे विषमारोहणावरोहणानि च वर्जयेत् ॥२५॥ बाहुभ्यां च नदीतरणम् ॥२६॥ नावं च सांशयिकीम् ॥२७॥ तृण-

च्छेदनलोष्टविमर्दनष्ठेवनानि चाकारणात् ॥२८॥ यच्चान्यत्परिचक्षते यच्चान्यत्परिचक्षते ॥२९॥

॥ ( इति द्वात्रिंशत्तमी खण्डिका ) ॥ (प्र० १ प० ११ ख० ३२ ) ॥

॥ इति चापस्तम्बधर्मसूत्रवृत्तौ प्रथमप्रश्ने एकादशः पटलः ॥




## ॥ द्वितीयप्रश्नप्रारम्भः ॥

पाणिग्रहणादधि गृहमेधिनोर्व्रतम् ॥१॥ कालयोर्भोजनम् ॥२॥ अतृप्तिश्चान्नस्य ॥३॥ पर्वसु चोभयोरुपवासः ॥४॥ औपवस्तमेव कालान्तरे भोजनम् ॥५॥ तृप्तिश्चान्नस्य ॥६॥ यच्चैनयोः प्रियं स्यात्तदेतस्मिन्नहनि भुञ्जीयाताम् ॥७॥ अधश्च शयीयाताम् ॥८॥ मैथुनवर्जनं च ॥९॥ श्वो भूते स्थालीपाकः ॥१०॥ तस्योपचारः पार्वणेन व्याख्यातः ॥

११॥ नित्यं लोक उपदिशन्ति ॥१२॥ यत्र क्व चा-
भिमुपसमाधास्यन् स्यात्तत्र प्राचीरुदीचीश्च तिस्र-
स्तिस्रो रेखा लिखित्वाद्भिरवोक्ष्याग्निमुपसमिन्ध्यात् ॥
१३॥ उत्सिच्यैतदुदकमुत्तरेण पूर्वेण वान्यदुपदध्यात्
॥१४॥ नित्यमुदधानान्यद्भिररिक्तानि स्युर्गृहमेधिनो-
व्रतम् ॥१५॥अहन्यसंवेशनम् ॥१६॥ ऋतौ च सन्निपातो
दारेणानुव्रतम् ॥१७॥ अन्तरालेऽपि दार एव ॥१८॥
ब्राह्मणवचनाच्च संवेशनम् ॥१९॥ स्त्रीवाससैव सन्नि-
पातस्स्यात् ॥२०॥ यावत्सन्निपातं चैव सहशय्या ॥
२१॥ ततो नाना ॥२२॥ उदकोपस्पर्शनम् ॥२३॥

( इति प्रथमा खण्डिका ) ॥ ( प्र० २ प० १ ख० १ )

अपि वा लेपान्प्रक्षाल्याचम्य प्रोक्षणमङ्गानाम् ॥१॥
सर्ववर्णानां स्वधर्मानुष्ठाने परमपरिमितं सुखम् ॥२॥
ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं वर्णं बलं
मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यते त-
च्चक्रवदुभयोर्लोकयोः सुख एव वर्तते ॥३॥ यथौषधि
वनस्पतीनां बीजस्य क्षेत्रकर्मविशेषे फलपरिवृद्धिरेव-
म् ॥४॥ एतेन दोषफलपरिवृद्धिरुक्ता ॥५॥ स्तेनोऽ
भिशस्तो ब्राह्मणो राजन्यो वैश्यो वा परस्मिल्लोके
परिमिते निरये वृत्ते जायते चाण्डालो ब्राह्मणः पौ-

ल्कसो राजन्यो वैणो वैश्यः ॥६॥ एतेनान्ये दोषफलैः कर्मभिः परिध्वंसा दोषफलासु योनिषु जायन्ते वर्णपरिध्वंसायाम् ॥७॥ यथा चाण्डालोपस्पर्शने सम्भाषायां दर्शने च दोषस्तत्र प्रायश्चित्तम् ॥८॥ अवगाहनमपामुपस्पर्शने सम्भाषायां ब्राह्मणसम्भाषा दर्शने ज्योतिषां दर्शनम् ॥९॥

॥ (इति द्वितीया खण्डिका) ॥ (प्र०२ प०१ ख०२ ) ॥

॥ इति चापस्तम्बीयधर्मसूत्रेषु द्वितीयप्रश्ने प्रथमः पटलः ॥ १ ॥

---

आर्याः प्रयता वैश्वदेवेऽन्नसंस्कर्तारः स्युः ॥१॥ भाषां कासं क्षवथुमित्यभिमुखोऽन्नं वर्जयेत् ॥२॥ केशानङ्गं वासश्चालभ्याप उपस्पृशेत् ॥३॥ आर्याधिष्ठिता वा शूद्रास्संस्कर्तारः स्युः ॥४॥ तेषां स एवाचमनकल्पः ॥५॥ अधिकमहरहः केशश्मश्रुलोमनखवापनम् ॥६॥ उदकोपस्पर्शनं च सह वाससा ॥७॥ अपि वाष्टमीष्वेव पर्वसु वा वपेरन् ॥८॥ परोक्षमन्नं संस्कृतमग्नावधिश्रित्याद्भिः प्रोक्षेत्तद्देवपवित्रमित्याचक्षते ॥९॥ सिद्धेऽन्ने तिष्ठन् भूतमिति स्वामिने प्रब्रूयात् ॥१०॥ तत्सुभूतं विराडन्नं तन्मा क्षायीति प्रतिवचनः ॥११॥ गृहमेधिनो यदशनीयस्य होमा बलयश्च स्वर्गपुष्टिसंयुक्ताः ॥१२॥ तेषां मन्त्राणामुपयोगे द्वादशा-

हमधश्शय्या ब्रह्मचर्यं क्षारलवणवर्जनं च ॥१३॥ उत्तमस्यैकरात्रमुपवासः ॥ १४ ॥ बलीनां तस्यतस्य देशे संस्कारो हस्तेन परिमृज्यावोक्ष्य न्युप्य पश्चात्परिषेचनम् ॥१५॥ औपासने पचने वा षड्भिराद्यैः प्रतिमन्त्रं हस्तेन जुहुयात् ॥१६॥ उभयतः परिषेचनं यथा पुरस्तात् ॥ १७॥ एवं बलीनां देशेदेशे समवेतानां सकृत्सकृदन्ते परिषेचनम् ॥१८॥ सति सूपसंसृष्टेन कार्याः ॥ १९॥ अपरेणाग्निं सप्तमाष्टमाभ्यामुदगपवर्गम् ॥२०॥ उदधानसन्निधौ नवमेन ॥२१॥ मध्येऽगारस्य दशमैकादशाभ्यां प्रागपवर्गम् ॥२२॥ उत्तरपूर्वे देशेऽगारस्योत्तरैश्चतुर्भिः ॥२३॥

॥ इति तृतीया खण्डिका (प्र० २ प० २ ख० ३) ॥

शय्यादेशे कामलिङ्गेन ॥१॥ देहल्यामन्तरिक्षलिङ्गेन ॥२॥ उत्तरेणापिधान्याम् ॥३॥ उत्तरैर्ब्रह्मसदने ॥४॥ दक्षिणतः पितृलिङ्गेन प्राचीनावीत्यवाचीनपाणिः कुर्यात् ॥५॥ रौद्र उत्तरो यथा देवताभ्यः ॥६॥ तयोर्नाना परिषेचनं धर्मभेदात् ॥७॥ नक्तमेवोत्तमेन वैहायसम् ॥८॥ य एतानव्यग्रो यथोपदेशं कुरुते नित्यः स्वर्गः पुष्टिश्च ॥९॥ अग्रं च देयम् ॥१०॥ अतिथीनेवाग्रे भोजयेत् ॥११॥ बालान्वृद्धान्रोगसम्बन्धान्स्त्रीश्चान्तर्वत्नीः ॥१२॥ काले स्वामिनावन्नार्थिनं न प्रत्याचक्षी-

याताम् ॥१३॥ अभावे भूमिरुदकं तृणानि कल्याणी वागित्येतानि वै सतोऽगारे न क्षीयन्ते कदाचनेति ॥ १४॥ एवंवृत्तावनन्तलोकौ भवतः ॥१५॥ ब्राह्मणायानधीयानायासनमुदकमन्नमिति देयं न प्रत्युत्तिष्ठेत् ॥१६॥ अभिवादनायैवोत्तिष्ठेदभिवाद्यश्चेत् ॥१७॥ राजन्यवैश्यौ च ॥१८॥ शूद्रमभ्यागतं कर्मणि नियुञ्ज्यात् ॥ १९॥ अथास्मै दद्यात् ॥२०॥ दासा वा राजकुलादाहृत्यातिथिवच्छूद्रं पूजयेयुः ॥२१॥ नित्यमुत्तरं वासः कार्यम् ॥२२॥ अपि वा सूत्रमेवोपवीतार्थे ॥२३॥ यत्र भुज्यते तत्समूह्य निर्हृत्यावोक्ष्य तं देशममत्रेभ्यो लेपान् सङ्कृष्याद्भिः संसृज्योत्तरतः शुचौ देशे रुद्राय निनयेदेवं वास्तु शिवं भवति ॥२४॥ ब्राह्मण आचार्यः स्मर्यते तु ॥२५॥ आपदि ब्राह्मणेन राजन्ये वैश्ये वाध्ययनम् ॥२६॥ अनुगमनं च पश्चात् ॥२७॥ तत ऊर्ध्वं ब्राह्मण एवाग्रे गतौ स्यात् ॥२८॥

॥ इति चतुर्थी खण्डिका (प्र० २ प० २ ख० ४) ॥

सर्वविद्यानामप्युपनिषदामुपाकृत्यानध्ययनं तदहः ॥१॥ अधीत्य चाविप्रक्रमणं सद्यः ॥२॥ यदि त्वरेत गुरोः समीक्षायां स्वाध्यायमधीत्य कामं गच्छेदेवमुभयोः शिवं भवति ॥३॥ समावृत्तं चेदाचार्योऽभ्यागच्छेत्तमभिमुखोऽभ्यागम्य तस्योपसङ्गृह्य न

बीभत्समान उदकमुपस्पृशेत् पुरस्कृत्योपस्थाप्य यथोपदेशं पूजयेत् ॥४॥ आसने शयने भक्ष्ये भोज्ये वाससि वा सन्निहिते निहीनतरवृत्तिः स्यात् ॥५॥ तिष्ठन् सव्येन पाणिनानुगृह्याचार्यमाचामयेत् ॥६॥ अन्यं वा समुदेतम् ॥७॥ स्थानासनचङ्क्रमणस्मितेष्वनुचिकीर्षन् ॥८॥ सन्निहिते मूत्रपुरीषवातकर्मोच्चैर्भाषाहासष्ठेवनदन्तस्कवननिःशृङ्खणभ्रूक्षेपणतालननिष्ठ्यानीति ॥ ९ ॥ दारे प्रजायां चोपस्पर्शनभाषाविस्रम्भपूर्वाः परिवर्जयेत ॥१०॥ वाक्येन वाक्यस्य प्रतिघातमाचार्यस्य वर्जयेच्छ्रेयसां च ॥११॥ सर्वभूतपरीवादाक्रोशांश्च ॥१२॥ विद्यया च विद्यानाम् ॥१३॥ यया विद्यया न विरोचेत पुनराचार्यमुपेत्य नियमेन साधयेत् ॥ १४ ॥ उपाकरणाद्योत्मर्जनादध्यापयितुर्नियमो लोमसंहरणं मांसं श्राद्धं मैथुनमिति वर्जयेत् ॥१५॥ ऋत्वे वा जायाम् ॥ १६ ॥ यथागमं शिष्येभ्यो विद्यासम्प्रदाने नियमेषु च युक्तः स्यादेवं वर्तमानः पूर्वापरान् सम्बन्धानात्मानं च क्षेमे युनक्ति ॥१७॥ मनसा वाचा प्राणेन चक्षुषा श्रोत्रेण त्वक्छिश्नोदरारम्भणानास्रावान् परीवृञ्जानोऽमृतत्वाय कल्पते ॥ १८ ॥

इति पञ्चमी खण्डिका ॥ (प्र० २ प० २ ख० ५ ॥)

॥ इत्यापस्तम्बीयधर्मसूत्रेषु द्वितीयप्रश्ने द्वितीयः पटलः ॥२॥

---

जात्याचारसंशये धर्मार्थमागतमग्निमुपसमाधाय जातिमाचारं च पृच्छेत् ॥१॥ साधुतां चेत्प्रतिजानीतेऽग्निरुपद्रष्टा वायुरुपश्रोताऽऽदित्योऽनुख्याता साधुतां चेत्प्रतिजानीते साध्वस्मा अस्तु वितथ एष एनस इत्युक्त्वा शास्तुं प्रतिपद्येत ॥२॥ अग्निरिव ज्वलन्नतिथिरभ्यागच्छति ॥३॥ धर्मेण वेदानामेकैकां शाखामधीत्य श्रोत्रियो भवति ॥४॥ स्वधर्मयुक्तं कुटुम्बिनमभ्यागच्छति धर्मपुरस्कारो नान्नप्रयोजनः सोऽतिथिर्भवति ॥५॥ तस्य पूजायां शान्तिः स्वर्गश्च ॥६॥ तमभिमुखोऽभ्यागम्य यथावयस्समेत्य तस्यासनमाहारयेत् ॥७॥ शक्तिविषये नाबहुपादमासनं भवतीत्येके ॥८॥ तस्य पादौ प्रक्षालयेच्छूद्रमिथुनावित्येके ॥९॥ अन्यतरोऽभिषेचने स्यात् ॥१०॥ तस्योदकमाहारयेन्मृण्मयेनेत्येके ॥११॥ नोदकमाहारयेदसमावृत्तः ॥१२॥ अध्ययनसांवृत्तिश्चात्राधिका ॥१३॥ सान्त्वयित्वा तर्पयेद्रसैर्भक्ष्यैरद्भिरवराध्येनेति ॥१४॥ आवसथं दद्यादुपरिशय्यामुपस्तरणमुपधानं सावस्तरणमभ्यञ्जनं चेति ॥१५॥ अन्नसंस्कर्तारमाहूय व्रीहीन् यवान्वा तदर्थान्निर्वपेत् ॥१६॥ उद्धृतान्यन्नान्यवेक्षेतेदं भूयाऽऽऽ इदऽऽऽमिति ॥१७॥ भूय उद्धरेत्येव ब्रूयात् ॥१८॥ द्विषन्द्विषतो वा नान्नमश्नीयाद्दोषेण वा मीमां-

समानस्य मीमांसितस्य वा ॥ १९ ॥ पाप्मानं हि स तस्य भक्षयतीति विज्ञायते ॥२०॥

॥ ( इति षष्ठी खण्डिका ॥ ( प्र० २ प० ३ ख० ६ ) ॥

स एष प्राजापत्यः कुडुम्बिनो यज्ञो नित्यप्रततः ॥१॥ योऽतिथीनामग्निः स आहवनीयो यः कुडुम्बे स गार्हपत्यो यस्मिन्पच्यते सोऽन्वाहार्यपचनः ॥२॥ ऊर्जं पुष्टिं प्रजां पशूनिष्टापूर्तमिति गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ॥३॥ पयउपसेचनमन्नमग्निष्टोमसम्मितं सर्पिषोक्थ्यसम्मितं मधुनातिरात्रसम्मितं मांसेन द्वादशाहसम्मितमुदकेन प्रजावृद्धिरायुषश्च ॥४॥ प्रियाप्रियाश्चातिथयः स्वर्गं लोकं गमयन्तीति विज्ञायते ॥५॥ स यत्प्रातर्मध्यंदिने सायमिति ददाति सवनान्येव तानि भवन्ति ॥६॥ यदनुतिष्ठत्युदवस्यत्येव तत् ॥७॥ यत्सान्त्वयति सा दक्षिणा प्रशंसा ॥८॥ यत्संसाधयति ते विष्णुक्रमाः ॥९॥ यदुपावर्तते सोऽवभृथः ॥१०॥ इति ब्राह्मणम् ॥११॥ राजानं चेदतिथिरभ्यागच्छेच्छ्रेयसीमस्मै पूजामात्मनः कारयेत् ॥१२॥ आहिताग्निं चेदतिथिरभ्यागच्छेत्स्वयमेनमभ्युदेत्य ब्रूयाद्व्रात्य क्वावात्सीरिति व्रात्योदकमिति व्रात्य तर्पयंस्त्विति ॥१३॥ पुराग्निहोत्रस्य होमादुपांशु जपेद्व्रात्य

यथा ते मनस्तथास्त्विति व्रात्य यथा ते वशस्तथास्त्विति व्रात्य यथा ते प्रियं तथास्त्विति व्रात्य यथा ते निकामस्तथास्त्विति ॥१४॥ यस्योद्धृतेष्वहुतेष्वग्निष्वतिथिरभ्यागच्छेत्स्वयमेनमभ्युदेत्य ब्रूयात् व्रात्यातिसृज होष्यामीत्यतिसृष्टेन होतव्यमनतिसृष्टे चेज्जुहुयाद्दोषं ब्राह्मणमाह ॥१५॥ एकरात्रं चेदतिथीन्वासयेत्पार्थिवाँल्लोकानभिजयति द्वितीययान्तरिक्ष्यांस्तृतीयया दिव्यांश्चतुर्थ्या परावतो लोकानपरिमिताभिरपरिमिताँल्लोकानभिजयतीति विज्ञायते ॥१६॥ असमुदेतश्चेदतिथिर्ब्रुवाण आगच्छेदासनमुदकमन्नं श्रोत्रियाय ददामीत्येव दद्यादेवमस्य समृद्धं भवति ॥१७॥

॥ इति सप्तमी खण्डिका (प्र० २ प० ३ ख० ७) ॥

इति चापस्तम्बीयधर्मसूत्रेषु द्वितीयप्रश्ने तृतीयः पटलः ॥३॥

येन कृतावसथः स्यादतिथिर्न तं प्रत्युत्तिष्ठेत्प्रत्यवरोहेद्वा पुरस्ताच्चेदभिवादितः ॥ १ ॥ शेषभोज्यतिथीनां स्यात् ॥ २ ॥ न रसान् गृहे भुञ्जीतानवशेषमतिथिभ्यः ॥ ३ ॥ नात्मार्थमभिरूपमन्नं पाचयेत् ॥४॥ गोमधुपर्कार्हो वेदाध्यायः ॥ ५ ॥ आचार्य ऋत्विक्स्नातको राजा वा धर्मयुक्तः ॥ ६ ॥ आचार्यायर्त्विजे श्वशुराय राज्ञ इति परिसंवत्सरादुपतिष्ठद्भ्यो गौर्मधुपर्कश्च ॥७॥ दधिमधुसंसृष्टं मधुपर्कः पयो वा मधु-

संसृष्टम् ॥८॥ अभाव उदकम् ॥९॥ षडङ्गो वेदः ॥ १०॥ छन्दः कल्पो व्याकरणं ज्योतिषं निरुक्तं शीक्षा छन्दोविचितिरिति ॥ ११ ॥ शब्दार्थारम्भाणां तु कर्मणां समाम्नायस्समाप्तौ वेदशब्दस्तत्र सङ्ख्या विप्रतिषिद्धा ॥१२॥ अङ्गानां तु प्रधानैरव्यपदेश इति न्यायवित्समयः ॥१३॥ अतिथिं निराकृत्य यत्रगते भोजने स्मरेत्ततो विरम्योपोष्य ॥१४॥

॥ इति अष्टमी खण्डिका (प्र०२ प०३ ख०८ )॥

श्वो भूते यथामनसं तर्पयित्वा संसाधयेत् ॥ १॥ यानवन्तमा यानात् ॥२॥ यावन्नानुजानीयादितरः ॥३॥ अप्रतीभायां सीम्नो निवर्तेत ॥४॥ सर्वान्वैश्वदेवे भागिनः कुर्वीता श्वचण्डालेभ्यः ॥५॥ नानर्हद्भ्यो दद्यादित्येके ॥६॥ उपेतः स्त्रीणामनुपेतस्य चोच्छिष्टं वर्जयेत् ॥७॥ सर्वाण्युदकपूर्वाणि दानानि ॥८॥ यथाश्रुति विहारे ॥९॥ ये नित्यभाक्तिकास्तेषामनुपरोधेन संविभागो विहितः ॥१०॥ काममात्मानं भार्यां पुत्रं वोपरुन्ध्यान्न त्वेव दासकर्मकरम् ॥११॥ तथा चात्मनोऽनुपरोधं कुर्याद्यथा कर्मसु समर्थस्स्यात् ॥१२॥ अथाप्युदाहरन्ति— 'अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनः । द्वात्रिंशतं

गृहस्थस्यापरिमितं ब्रह्मचारिणः । आहिताग्निरनड्वां-
श्च ब्रह्मचारी च ते त्रयः । अश्नन्त एव सिध्यन्ति नै-
षां सिद्धिरनश्नतामिति ॥१३॥

॥ इति नवमी खण्डिका । (प्र० २ प० ४ ख० ९ ॥)
इति चापस्तम्बधर्मसूत्रेषु द्वितीयप्रश्ने चतुर्थः पटलः ॥४॥

---

भिक्षा निमित्तमाचार्यो विवाहो यज्ञो माता-
पित्रोर्बुभूर्षार्हतश्च नियमविलोपः ॥१॥ तत्र गुणान्
समीक्ष्य यथाशक्ति देयम् ॥२॥ इन्द्रियप्रीत्यर्थस्य तु भि-
क्षणमनिमित्तम् ॥३॥ तस्मान्न तदाद्रियेत ॥४॥ स्वक-
र्म ब्राह्मणस्याध्ययनमध्यापनं यज्ञो याजनं दानं प्रति-
ग्रहणं दायाद्यं शिलोञ्छः ॥५॥ अन्यच्चापरिगृहीतम् ॥६॥
एतान्येव क्षत्रियस्याध्यापनयाजनप्रतिग्रहणानीति प-
रिहाप्य दण्डयुद्धाधिकानि ॥७॥ क्षत्रियवद्वैश्यस्य द-
ण्डयुद्धवर्जं कृषिगोरक्ष्यवाणिज्याधिकम् ॥८॥ नानूनू-
चानमृत्विजं वृणीते न पणमाणम् ॥९॥ अयाज्योऽनधी-
यानः ॥१०॥ युद्धे तद्योगा यथोपायमुपदिशन्ति तथा
प्रतिपत्तव्यम् ॥११॥ न्यस्तायुधप्रकीर्णकेशप्राञ्जलिप-
राङ्मुखवृत्तानामार्या वधं परिचक्षते ॥१२॥ शास्त्रैरधिगता-
नामिन्द्रियदौर्बल्याद्विप्रतिपन्नानां शास्ता निर्वेषमुप-
दिशेद्यथाकर्म यथोक्तम् ॥१३॥ तस्य चेच्छास्त्रमतिप्र-

वर्तेरन् ॥१४॥ राजानं गमयेत् ॥१५॥ राजा पुरोहितं धर्मार्थकुशलम् ॥१६॥ स ब्राह्मणान्नियुञ्ज्यात् ॥१७॥ बलविशेषेण वधदास्यवर्जं नियमैरुपशोषयेत् ॥१८॥

॥ इति दशमी खण्डिका ( प्र० २ प० ५ ख० १० ) ॥

इतरेषां वर्णानामाप्राणविप्रयोगात्समवेक्ष्य तेषां कर्माणि राजा दण्डं प्रणयेत् ॥१॥ न च सन्देहे दण्डं कुर्यात् ॥ २ ॥ सुविचितं विचित्या दैवप्रश्नेभ्यो राजा दण्डाय प्रतिपद्येत ॥३॥ एवंवृत्तो राजोभौ लोकावभिजयति ॥४॥ राज्ञः पन्था ब्राह्मणेनासमेत्य ॥५॥ समेत्य तु ब्राह्मणस्यैव पन्थाः ॥६॥ यानस्य भाराभिनिहितस्यातुरस्य स्त्रिया इति सर्वैर्दातव्यः ॥७॥ वर्णज्यायसां चेतरैर्वर्णैः ॥८॥ अशिष्टपतितमत्तोन्मत्तानामात्मस्वस्त्ययनार्थेन सर्वैरेव दातव्यः ॥९॥ धर्मचर्यया जघन्यो वर्णः पूर्वंपूर्वं वर्णमापद्यते जातिपरिवृत्तौ ॥१०॥ अधर्मचर्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ ॥ ११ ॥ धर्मप्रजासम्पन्ने दारे नान्यां कुर्वीत ॥१२॥ अन्यतराभावे कार्या प्रागग्न्याधेयात् ॥१३॥ आधाने हि सती कर्मभिस्सम्बध्यते येषामेतदङ्गम् ॥१४॥ सगोत्राय दुहितरं न प्रयच्छेत् ॥१५॥ मातुश्च योनिसम्बन्धेभ्यः ॥१६॥ ब्राह्मे

विवाहे बन्धुशीलश्रुतारोग्याणि बुध्वा प्रजां सहत्वकर्मभ्यः प्रतिपादयेच्छक्तिविषयेणालंकृत्य ॥१७॥ आर्षे दुहितृमते मिथुनौ गावौ देयौ ॥१८॥ दैवे यज्ञतन्त्र ऋत्विजे प्रतिपादयेत् ॥१९॥ मिथः कामात्सांवर्तेते स गान्धर्वः ॥२०॥

॥ इति एकादशी खण्डिका (प्र० २ प० ५ ख० ११) ॥

शक्तिविषयेण द्रव्याणि दत्वावहेरन् स आसुरः ॥१॥ दुहितृमतः प्रोथयित्वावहेरन् स राक्षसः ॥२॥ तेषां त्रय आद्याः प्रशस्ताः पूर्वःपूर्वः श्रेयान् ॥३॥ यथायुक्तो विवाहस्तथा युक्ता प्रजा भवति ॥४॥ पाणिसमूढं ब्राह्मणस्य नाप्रोक्षितमभितिष्ठेत् ॥५॥ अग्निं ब्राह्मणं चान्तरेण नातिक्रामेत् ॥६॥ ब्राह्मणांश्च ॥७॥ अनुज्ञाप्य वातिक्रामेत् ॥८॥ अग्निमपश्च न युगपद्धारयीत ॥९॥ नानाग्नीनां च सन्निवापं वर्जयेत् ॥१०॥ प्रतिमुखमग्निमाह्रियमाणं नाप्रतिष्ठितं भूमौ प्रदक्षिणीकुर्यात् ॥११॥ पृष्ठतश्चात्मनः पाणी न संश्लेषयेत् ॥१२॥ स्वपन्नभिनिर्मुक्तो नाश्वान्वाग्यतो रात्रिमासीत श्वोभूत उदकमुपस्पृश्य वाचं विसृजेत् ॥१३॥ स्वपन्नभ्युदितो नाश्वान्वाग्यतोऽहस्तिष्ठेत् ॥१४॥ आतमितोः प्राणमायच्छेदित्येके ॥१५॥ स्वप्नं वा पापकं दृष्ट्वा ॥

१६॥ अर्थं वा सिसाधयिषन् ॥१७॥ नियमातिक्रमे चान्यस्मिन् ॥१८॥ दोषफलसंशये न तत्कर्तव्यम् ॥१९॥ एवमध्यायानध्याये ॥२०॥ न संशये प्रत्यक्षवद्ब्रूयात् ॥ २१॥ अभिनिर्मुक्ताभ्युदितकुनखीश्यावदाग्रादिधिषुदिधिषूपतिपर्याहितपरिशिष्टपरिवित्तपरिविन्नपरिविविदानेषु चोत्तरोत्तरस्मिन्नशुचिकरनिर्वेषो गरीयान् गरीयान् ॥ २२॥ तच्च लिङ्गं चरित्वोद्धार्यमित्येके ॥२३॥

॥ इति द्वादशी खण्डिका ॥ (प्र०२ प०५ ख०१२) ॥
इति चापस्तम्बधर्मसूत्रेषु द्वितीयप्रश्ने पञ्चम पटलः ॥८॥

---

सवर्णापूर्वशास्त्रविहितायां यथर्तु गच्छतः पुत्रास्तेषां कर्मभिस्सम्बन्धः ॥१॥ दायेन चाव्यतिक्रमश्चोभयोः ॥२॥ पूर्ववत्यामसंस्कृतायां वर्णान्तरे च मैथुने दोषः ॥३॥ तत्रापि दोषवान् पुत्र एव ॥४॥ उत्पादयितुः पुत्र इति हि ब्राह्मणम् ॥५॥ अथाप्युदाहरन्ति—इदानीमेवाहं जनकः स्त्रीणामीर्ष्यामि नो. पुरा। यदा यमस्य सादने जनयितुः पुत्रमब्रुवन् । रेतोधाः पुत्रं नयति परेत्य यमसादने । तस्माद्भार्यां रक्षन्ति बिभ्यन्तः पररेतसः । अप्रमत्ता रक्षथ तन्तुमेतं मा वः क्षेत्रे परबीजानि वाप्सुः। जनयितुः पुत्रो भवति साम्पराये मोघं वेत्ता कुरुते तन्तुमेत-

मिति ॥६॥ दृष्टो धर्मव्यतिक्रमस्साहसं च पूर्वेषाम् ॥७॥ तेषां तेजोविशेषेण प्रत्यवायो न विद्यते ॥८॥ तदन्वीक्ष्य प्रयुञ्जानस्सीदत्यवरः ॥९॥ दानं क्रयधर्मश्चापत्यस्य न विद्यते ॥१०॥ विवाहे दुहितृमते दानं काम्यं धर्मार्थं श्रूयते तस्माद्दुहितृमतेऽतिरथं शतं देयं तन्मिथुया कुर्यादिति तस्यां क्रयशब्दस्संस्तुतिमात्रं 'धर्माद्धि सम्बन्धः ॥११॥

॥ इति त्रयोदशी खण्डिका (प्र० २ प० ६ ख० १३) ॥

एकधनेन ज्येष्ठं तोषयित्वा जीवन् पुत्रेभ्यो दायं व्यभजेत् समं क्लीबमुन्मत्तं पतितं च परिहाप्य ॥१॥ पुत्राभावे यः प्रत्यासन्नः सपिण्डः ॥२॥ तदभाव आचार्य आचार्याभावे अन्तेवासी हृत्वा तदर्थेषु धर्मकृत्येषु वोपयोजयेत् ॥३॥ दुहिता वा ॥४॥ सर्वाभावे राजा दायं हरेत् ॥५॥ ज्येष्ठो दायाद इत्येके ॥६॥ देशविशेषे सुवर्णं कृष्णा गावः कृष्णं भौमं ज्येष्ठस्य ॥७॥ रथः पितुः परिभाण्डं च गृहे ॥८॥ अलङ्कारो भार्याया ज्ञातिधनं चेत्येके ॥९॥ तच्छास्त्रैर्विप्रतिषिद्धम् ॥१०॥ मनुः पुत्रेभ्यो दायं व्यभजदित्यविशेषेण श्रूयते ॥११॥ अथापि तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाययन्तीत्येकवच्छ्रूयते

॥१२॥ अथापि नित्यानुवादमविधिमाहुर्न्यायविदो यथा तस्मादजावयः पशूनां सहचरन्तीति । तस्मात् स्नातकस्य मुखं रेफायतीव । तस्मात् बस्तश्च श्रोत्रियश्च स्त्रीकामतमाविति ॥१३॥ सर्वे हि धर्मयुक्ता भागिनः ॥१४॥ यस्त्वधर्मेण द्रव्याणि प्रतिपादयति ज्येष्ठोऽपि तमभागं कुर्वीत ॥१५॥ जायापत्योर्न विभागो विद्यते ॥१६॥ पाणिग्रहणाद्धि सहत्वं कर्मसु ॥१७॥ तथा पुण्यफलेषु द्रव्यपरिग्रहेषु च ॥१८॥ न हि भर्तुर्विप्रवासे नैमित्तिके दाने स्तेयमुपदिशन्ति ॥१९॥

॥ इति चतुर्दशी खण्डिका । (प्र० २ प० ६ ख० १४) ॥

एतेन देशकुलधर्मा व्याख्याताः ॥१॥ मातुश्च योनिसम्बन्धेभ्यः पितुश्चासप्तमात्पुरुषाद्यावता वा सम्बन्धो ज्ञायते तेषां प्रेतेषूदकोपस्पर्शनं गर्भान्परिहाप्यापरिसंवत्सरान् ॥२॥ मातापितरावेव तेषु भर्तारश्च ॥३॥ भार्यायां परमगुरुसंस्थायां चाकालमभोजनम् ॥४॥ आतुरव्यञ्जनानि कुर्वीरन् ॥५॥ केशान्प्रकीर्य पांसूनोप्यैकवाससो दक्षिणामुखास्सकृदुपमज्ज्योत्तीर्योपविशन्त्येवं त्रिः ॥६॥ तत्प्रत्ययमुदकमुत्सिच्याप्रतीक्षा ग्राममेत्य यत्स्त्रिय आ

हुस्तत्कुर्वन्ति ॥ ७॥ इतरेषु चैतदेवैक उपदिशन्ति ॥ ८॥ शुचीन्मन्त्रवतस्सर्वकृत्येषु भोजयेत् ॥ ९॥ देशतः कालतः शौचतः सम्यक्प्रतिग्रहीतृत इति दानानि प्रतिपादयति ॥१०॥ यस्याग्नौ न क्रियते यस्य चाग्रं न दीयते न तद्भोक्तव्यम् ॥११॥ न क्षारलवणहोमो विद्यते ॥१२॥ तथावरान्नसंसृष्टस्य च ॥१३॥ अहविष्यस्य होम उदीचीनमुष्णं भस्मापोह्य तस्मिञ्जुहुयात्तद्धुतमहुतं चाग्नौ भवति ॥१४॥ न स्त्री जुहुयात् ॥१५॥ नानुपेतः ॥ १६ ॥ आम्रप्राशनाद्दर्भा नाप्रयता भवन्ति ॥१७॥ आ परिसंवत्सरादित्येके ॥१८॥ यावता वा दिशो न प्रजानीयुः ॥ १९॥ औपनयनादित्यपरम् ॥२०॥ अत्र ह्यधिकारश्शास्त्रैर्भवति ॥२१॥ सा निष्ठा ॥२२॥ स्मृतिश्च ॥२३॥

॥ इति पञ्चदशी खण्डिका (प्र० २ प० ६ ख० १५ ) ॥

इति चापस्तम्बीयधर्मसूत्रेषु द्वितीयप्रश्ने षष्ठः पटलः ॥ ६ ॥

सह देवमनुष्या अस्मिँल्लोके पुरा बभूवुः । अथ देवाः कर्मभिर्दिवं जग्मुरहीयन्त मनुष्याः । तेषां ये तथा कर्माण्यारभन्ते सह देवैर्ब्रह्मणा चामुष्मिन्ल्लोके भवन्ति । अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच । प्रजानिश्श्रेयसाय च ॥१॥ तत्र पितरो देवता ब्राह्मणा-

स्त्वाहवनीयार्थे ॥ २ ॥ मासिमासि कार्यम् ॥ ३ ॥ अपरपक्षस्यापराह्णः श्रेयान् ॥ ४ ॥ तथाऽपरपक्षस्य जघन्यान्यहानि ॥ ५ ॥ सर्वेष्वेवापरपक्षस्याहस्सु क्रियमाणे पितॄन् प्रीणाति । कर्तुस्तु कालाभिनियमात्फलविशेषः ॥ ६ ॥ प्रथमेऽहनि क्रियमाणे स्त्रीप्रायमपत्यं जायते ॥ ७ ॥ द्वितीये स्तेनाः ॥ ८ ॥ तृतीये ब्रह्मवर्चसिनः ॥ ९ ॥ चतुर्थे क्षुद्रपशुमान् ॥ १० ॥ पञ्चमे पुमांसो बह्वपत्यो न चानपत्यः प्रमीयते ॥ ११ ॥ षष्ठेऽध्वशीलोऽक्षशीलश्च ॥ १२ ॥ सप्तमे कर्षे राद्धिः ॥ १३ ॥ अष्टमे पुष्टिः ॥ १४ ॥ नवम एकखुराः ॥ १५ ॥ दशमे व्यवहारे राद्धिः ॥ १६ ॥ एकादशे कृष्णायसं त्रपुसीसम् ॥ १७ ॥ द्वादशे पशुमान् ॥ १८ ॥ त्रयोदशे बहुपुत्रो बहुमित्रो दर्शनीयापत्यो युवमारिणस्तु भवन्ति ॥ १९ ॥ चतुर्दश आयुधे राद्धिः ॥ २० ॥ पञ्चदशे पुष्टिः ॥ २१ ॥ तत्र द्रव्याणि तिलमाषा व्रीहियवा आपो मूलफलानि च ॥ २२ ॥ स्नेहवति त्वेवान्ने तीव्रतरा पितॄणां प्रीतिर्द्राघीयांसं च कालम् ॥ २३ ॥ तथा धर्माहृतेन द्रव्येण तीर्थप्रतिपन्नेन ॥ २४ ॥ संवत्सरं गव्येन प्रीतिः ॥ २५ ॥ भूयांसमतो माहिषेण ॥ २६ ॥ एतेन ग्राम्यारण्यानां पशूनां मांसं मेध्यं व्याख्यातम् ॥ २७ ॥

॥ इति षोडशी खण्डिका (प्र० २ प० ७ ख० १६) ॥

खड्गोपस्तरणे खड्गमांसेनानन्त्यं कालम् ॥ १॥ तथा शतबलेर्मत्स्यस्य मांसेन ॥२॥ वाध्राणसस्य च ॥३॥ प्रयतः प्रसन्नमनास्सृष्टो भोजयेद्ब्राह्मणान् ब्रह्मविदो योनिगोत्रमन्त्रान्तेवास्यसम्बन्धान् ॥ ४॥ गुणहान्यां तु परेषां समुदेतः सोदर्योऽपि भोजयितव्यः ॥५॥ एतेनान्तेवासिनो व्याख्याताः ॥ ६॥ अथाप्युदाहरन्ति ॥७॥ सम्भोजनी नाम पिशाचभिक्षा नैषा पितॄन् गच्छति नोत देवान् । इहैव सा चरति क्षीणपुण्या शालान्तरे गौरिव नष्टवत्सा ॥ ८ ॥ इहैव सम्भुञ्जती दक्षिणा कुलात्कुलं विनश्यतीति ॥ ९ ॥ तुल्यगुणेषु वयोवृद्धः श्रेयान् द्रव्यकृशश्चेप्सन् ॥ १० ॥ पूर्वेद्युर्निवेदनम् ॥ ११ ॥ अपरेद्युर्द्वितीयम् ॥ १२ ॥ तृतीयसामन्त्रणम् ॥ १३ ॥ त्रिःप्रायमेके श्राद्धमुपदिशन्ति ॥ १४ ॥ यथाप्रथममेवं द्वितीयं तृतीयं च ॥ १५ ॥ सर्वेषु वृत्तेषु सर्वतस्समवदाय शेषस्य ग्रासावरार्ध्यं प्राश्नीयाद्यथोक्तम् ॥ १६ ॥ उदीच्यवृत्तिस्त्वासनगतानां हस्तेषूदपात्रानयनम् ॥१७॥ उद्ध्रियतामग्नौ च क्रियतामित्यामन्त्रयते ॥ १८ ॥ काममुद्ध्रियतां काममग्नौ च क्रियतामित्यतिसृष्ट उद्धरेज्जुहुयाच्च ॥ १९ ॥ श्वभिरपपात्रैश्च श्राद्धस्य दर्शनं परिचक्षते ॥ २० ॥ श्वित्रिःशिपिविष्टः परतल्पगाम्यायुधी-

यपुत्रश्शूद्रोत्पन्नो ब्राह्मण्यामित्येते श्राद्धे भुञ्जानाः पङ्क्तिदूषणा भवन्ति ॥२१॥ त्रिमधुस्त्रिसुपर्णस्त्रिणाचिकेतश्चतुर्मेधः पञ्चाग्निर्ज्येष्ठसामिको वेदाध्याय्यनूचानपुत्रः श्रोत्रिय इत्येते श्राद्धे भुञ्जानाः पङ्क्तिपावना भवन्ति ॥ २२ ॥ न च नक्तं श्राद्धं कुर्वीत ॥२३॥ आरब्धे चाभोजनमासमापनादन्यत्र राहुदर्शनात् ॥२४॥

॥ इति सप्तदशी खण्डिका (प्र० २ प० ७ ख० १७) ॥

॥ इति चापस्तम्बीयधर्मसूत्रेषु द्वितीयप्रश्ने सप्तमः पटलः ॥७॥

---

विलयनं मथितं पिण्याकं मधु मांसं च वर्जयेत् ॥ १ ॥ कृष्णधान्यं शूद्रान्नं ये चान्ये नाश्यसम्मताः ॥ २ ॥ अहविष्यमनृतं क्रोधं येन च क्रोधयेत् स्मृतिमिच्छन् यशो मेधां स्वर्गं पुष्टिं द्वादशैतानि वर्जयेत् ॥ ३ ॥ अधोनाभ्युपरिजान्वाच्छाद्य त्रिषवणमुदकमुपस्पृशन्ननग्निपक्ववृत्तिरच्छायोपगतस्थानासनिकस्संवत्सरमेतद्व्रतं चरेदेतदष्टाचत्वारिंशत्सम्मितमित्याचक्षते ॥४॥ नित्यश्राद्धम् ॥ ५ ॥ बहिर्ग्रामाच्छुचयः शुचौ देशे संस्कुर्वन्ति ॥ ६ ॥ तत्र नवानि द्रव्याणि ॥ ७ ॥ यैरन्नं संस्क्रियते येषु च भुज्यते ॥ ८ ॥ तानि च भुक्तवद्भ्यो दद्यात् ॥ ९ ॥ समुदेतांश्च भोजयेत् ॥ १० ॥ न चातद्गुणायोच्छिष्टं प्रयच्छेत् ॥ ११ ॥ एवं संवत्सर-

म् ॥ १२ ॥ तेषामुत्तमं लोहेनाजेन कार्यम् ॥ १३ ॥ मानं च कारयेत्प्रतिच्छन्नम् ॥ १४ ॥ तस्योत्तरार्धे ब्राह्मणान् भोजयेत् ॥ १५ ॥ उभयान्पश्यति ब्राह्मणांश्च भुञ्जानान्माने च पितॄनित्युपदिशन्ति ॥ १६ ॥ कृताकृतमत ऊर्ध्वम् ॥ १७ ॥ श्राद्धेन तृप्तिं निवेदयन्ते पितरः ॥ १८ ॥ तिष्येण पुष्टिकामः ॥ १९ ॥

॥ (इति अष्टादशी खण्डिका) ॥ (प्रं० २ प० ८ ख० १८) ॥

गौरसर्षपाणां चूर्णानि कारयित्वा तैः पाणिपादं प्रक्षाल्य मुखं कर्णौ प्राश्य च यद्वातो नातिवाति तदासनोऽजिनं वस्तस्य प्रथमः कल्पो वाग्यतो दक्षिणामुखो भुञ्जीत ॥ १ ॥ अनायुष्यं त्वेवंमुखस्य भोजनं मातुरित्युपदिशन्ति ॥ २ ॥ औदुम्बरश्चमसः सुवर्णनाभः प्रशस्तः ॥ ३ ॥ न चान्येनापि भोक्तव्यः ॥ ४ ॥ यावद्ग्रासं सन्नयन्नस्कन्दयन्नापजिहीत वा कृत्स्नं ग्रासं ग्रसीत सहाङ्गुष्ठम् ॥ ५ ॥ न च मुखशब्दं कुर्यात् ॥ ६ ॥ पाणिं च नावधूनुयात् ॥ ७ ॥ आचम्य चोर्ध्वौ पाणी धारयेदाप्रोदकीभावात् ॥ ८ ॥ ततोऽग्निमुपस्पृशेत् ॥ ९ ॥ दिवा च न भुञ्जीतान्यन्मूलफलेभ्यः ॥ १० ॥ स्थालीपाकानुद्देश्यानि च वर्जयेत् ॥ ११ ॥ सोत्तराच्छादनश्चैव यज्ञोपवीती भुञ्जीत ॥ १२ ॥ नैयमिकं तु श्राद्धं

स्नेहवदेव दद्यात् ॥१३॥ सर्पिर्मांसमिति प्रथमः कल्पः ॥१४॥ अभावे तैलं शाकमिति ॥१५॥ मघासु चाधिकं श्राद्धकल्पेन सर्पिर्ब्राह्मणान् भोजयेत् ॥१६॥

॥ इति एकोनविंशतितमी खण्डिका । (प्र०२ प०८ ख०१९) ॥

मासि श्राद्धे तिलानां द्रोणंद्रोणं येनोपायेन शक्नुयात् तेनोपयोजयेत् ॥१॥ समुदेतांश्च भोजयेन्न चातद्गुणायोच्छिष्टं दद्युः ॥ २ ॥ उदगयन आपूर्यमाणपक्षस्यैकरात्रमवरार्ध्यमुपोष्य तिष्येण पुष्टिकामः स्थालीपाकं श्रपयित्वा महाराजमिष्ट्वा तेन सर्पिष्मता ब्राह्मणंभोजयित्वा पुष्ट्यर्थेन सिद्धिं वाचयीत ॥ ३ ॥ एवमहरहरापरस्मात्तिष्यात् ॥ ४ ॥ द्वौ द्वितीये ॥५॥ त्रींस्तृतीये ॥ ६ ॥ एवं संवत्सरमभ्युच्चयेन ॥ ७ ॥ महान्तं पोषं पुष्यति ॥ ८ ॥ आदित एवोपवासः ॥ ९ ॥ आत्ततेजसां भोजनं वर्जयेत् ॥ १० ॥ भस्मतुषाधिष्ठानम् ॥ ११ ॥ पदा पादस्य प्रक्षालनमधिष्ठानं च वर्जयेत् ॥ १२ ॥ प्रेङ्खोलनं च पादयोः ॥ १३ ॥ जानुनि चात्याधानं जङ्घायाः ॥ १४ ॥ नखैश्च नखवादनम् ॥ १५ ॥ स्फोटनानि चाकारणात् ॥ १६ ॥ यच्चान्यत्परिचक्षते ॥ १७ ॥ योक्ता च धर्मयुक्तेषु द्रव्यपरिग्रहेषु च १८ ॥ प्रतिपादयिता च तीर्थे ॥ १९ ॥ यन्ता चातीर्थे

यतो न भयं स्यात् ॥ २० ॥ सङ्गृहीता च मनुष्यान् ॥ २१ ॥ भोक्ता च धर्माविप्रतिषिद्धान् भोगान् ॥ २२ ॥ एवमुभौ लोकावभिजयति ॥ २३ ॥

॥ इति विंशतितमी खण्डिका (प्र०२ प०८ ख०२० ) ॥

इति चापस्तम्बीयधर्मसूत्रेषु द्वितीयप्रश्ने अष्टमः पटलः ॥८॥

चत्वार आश्रमा गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थ्यमिति ॥१॥ तेषु सर्वेषु यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छति ॥ २ ॥ सर्वेषामुपनयनप्रभृति समान आचार्यकुले वासः ॥ ३ ॥ सर्वेषामनूत्सर्गो विद्यायाः ॥ ४ ॥ बुध्वा कर्माणि यत्कामयते तदारभेत ॥ ५ ॥ यथा विद्यार्थस्य नियम एतेनैवान्तमनूपसीदत आचार्यकुले शरीरन्यासो ब्रह्मचारिणः ॥ ६ ॥ अथ परिव्राजः ॥७॥ अत एव ब्रह्मचर्यवान् प्रव्रजति ॥ ८ ॥ तस्योपदिशन्ति ॥ ९ ॥ अनग्निरनिकेतस्स्यादशर्माशरणो मुनिः स्वाध्याय एवोत्सृजमानो वाचं ग्रामे प्राणवृत्तिं प्रतिलभ्यानिहोऽनमुत्रश्चरेत् ॥ १० ॥ तस्य मुक्तमाच्छादनं विहितम् ॥११॥ सर्वतः परिमोक्षमेके ॥ १२ ॥ सत्यानृते सुखदुःखे वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत् ॥ १३ ॥ बुद्धे क्षेमप्रापणम् ॥ १४ ॥ तच्छास्त्रैर्विप्रतिषिद्धम् ॥ १५ ॥ बुद्धे चेत्क्षेमप्रापणमिहैव न दुःखमुपलभेत ॥ १६ ॥ एतेन परं व्याख्यातम् ॥ १७ ॥

अथ वानप्रस्थः ॥ १८ ॥ अत एव ब्रह्मचर्यवान् प्रव्रजति ॥१९॥ तस्योपदिशन्त्येकाग्निरनिकेतस्स्यादशर्माशरणो मुनिः स्वाध्याय एवोत्सृजमानो वाचम् ॥२०॥

॥ इति एकविंशतितमी खण्डिका (प्र० २ प० ९ ख० २१)॥

तस्यारण्यमच्छादनं विहितम् ॥ १ ॥ ततो मूलैः फलैः पर्णैस्तृणैरिति वर्तयंश्चरेत् ॥ २ ॥ अन्ततः प्रवृत्तानि ॥ ३ ॥ ततोऽपो वायुमाकाशमित्यभिनिश्रयेत् ॥ ४ ॥ तेषामुत्तर उत्तरस्संयोगः फलतो विशिष्टः ॥५॥ अथ वानप्रस्थस्यैवानुपूर्व्यमेक उपदिशन्ति ॥ ६ ॥ विद्यां समाप्य दारं कृत्वाग्नीनाधाय कर्माण्यारभते सोमावराध्यानि यानि श्रूयन्ते ॥ ७ ॥ गृहान् कृत्वा सदारस्सप्रजस्सहाग्निभिर्बहिर्ग्रामाद्वसेत् ॥ ८ ॥ एको वा ॥ ९ ॥ सिलोञ्छेन वर्तयेत् ॥ १० ॥ न चात ऊर्ध्वं प्रतिगृह्णीयात् ॥ ११ ॥ अभिषिक्तश्च जुहुयात् ॥ १२ ॥ शनैरपोऽभ्युपेयादभिघ्नन्नभिमुख आदित्यमुदकमुपस्पृशेत् ॥ १३ ॥ इति सर्वत्रोदकोपस्पर्शनविधिः ॥ १४ ॥ तस्य द्वन्द्वं द्रव्याणामेक उपदिशन्ति पाकार्थभोजनार्थवासिपरशुदात्रकाजानाम् ॥ १५ ॥ द्वन्द्वानामेकैकमादायेतराणि दत्वारण्यमवतिष्ठेत ॥१६॥ तस्यारण्येनैवात ऊर्ध्वं होमो वृत्तिः प्रतीक्षाच्छादनं च

॥ १७ ॥ येषु कर्मसु पुरोडाशाश्चरवस्तेषु कार्याः ॥ १८॥ सर्वं चोपांशु सह स्वाध्यायेन ॥ १९ ॥ नारण्यमभ्याश्रावयेत् ॥ २० ॥ अग्न्यर्थं शरणम् ॥ २१ ॥ आकाशे स्वयम् ॥ २२ ॥ अनुपस्तीर्णे शय्यासने ॥ २३ ॥ नवे सस्ये प्राप्ते पुराणमनुजानीयात् ॥ २४ ॥

॥ इति द्वाविंशतितमी खण्डिका (प्र० २ प० ९ ख० २२ ॥

भूयांसं वा नियममिच्छन्नन्वहमेव पात्रेण सायंप्रातरर्थमाहरेत् ॥ १ ॥ ततो मूलैः फलैः पर्णैस्तृणैरिति वर्तयंश्चरेदन्ततः प्रवृत्तानि ततोऽपो वायुमाकाशमित्यभिनिश्रयेत् । तेषामुत्तर उत्तरस्संयोगः फलतो विशिष्टः ॥ २ ॥ अथ पुराणे श्लोकावुदाहरन्ति—अष्टाशीतिसहस्राणि ये प्रजामीषिरऋषयः । दक्षिणेनार्यम्णः पन्थानं ते श्मशानानि भेजिरे ॥ ३ ॥ अष्टाशीतिसहस्राणि ये प्रजां नेषिर ऋषयः । उत्तरेणार्यम्णः पन्थानं तेऽमृतत्वं हि कल्पते ॥ ४ ॥ इत्यूर्ध्वरेतसां प्रशंसा ॥ ५ ॥ अथापि सङ्कल्पसिद्धयो भवन्ति ॥६॥ यथा वर्षं प्रजादानं दूरेदर्शनं मनोजवता यच्चान्यदेवं युक्तम् ॥ ७ ॥ तस्माच्छ्रुतितः प्रत्यक्षफलत्वाच्च विशिष्टानाश्रमानेतानेके ब्रुवते ॥ ८ ॥ त्रैविद्यवृद्धानां तु वेदाः प्रमाणमिति निष्ठा तत्र यानि श्रूयन्ते ॥ ९ ॥ व्री-

हियवपश्वाज्यपयःकपालपत्नीसम्बन्धान्युच्चैर्नीचैः कार्यमिति तैर्विरुद्ध आचारोऽप्रमाणमिति मन्यन्ते ॥१०॥ यत्तु श्मशानमुच्यते नानाकर्मणामेषोऽन्ते पुरुषसंस्कारो विधीयते ॥ ११ ॥ ततः परमनन्त्यं फलं स्वर्ग्यशब्दं श्रूयते ॥ १२ ॥

॥ इति त्रयोविंशतितमी खण्डिका (प्र० २ प० ९ ख० २३) ॥

---

अथाप्यस्य प्रजातिममृतमाम्नाय आह । प्रजामनु प्रजायसे तदु ते मर्त्यामृतमिति ॥ १ ॥ अथापि स एवायं विरूढः पृथक्प्रत्यक्षेणोपलभ्यते दृश्यते चापि सारूप्यं देहत्वमेवान्यत् ॥ २ ॥ ते शिष्टेषु कर्मसु वर्तमानाः पूर्वेषां साम्परायेण कीर्तिं स्वर्गं च वर्धयन्ति ॥३॥ एवमवरोऽवरः परेषाम् ॥ ४ ॥ आभूतसंप्लवात्ते स्वर्गजितः ॥ ५ ॥ पुनस्सर्गे बीजार्था भवन्तीति भविष्यत्पुराणे ॥ ६ ॥ अथापि प्रजापतेर्वचनम् ॥ ७ ॥ त्रयीं विद्यां ब्रह्मचर्यं प्रजातिं श्रद्धां तपो यज्ञमनुप्रदानम् । य एतानि कुर्वते तैरित्सह स्मो रजो भूत्वा ध्वंसतेऽन्यत्प्रशंसन्निति ॥ ८ ॥ तत्र ये पापकृतस्त एव ध्वंसन्ति यथा पर्णं वनस्पतेर्न परान् हिंसन्ति ॥९॥ नास्यास्मिँल्लोके कर्मभिस्सम्बन्धो विद्यते तथा परस्मिन् कर्मफलैः ॥१०॥ तदेतेन वेदितव्यम् ॥११॥ प्रजापते

र्षीणामिति सर्गोऽयम् ॥ १२ ॥ तत्र ये पुण्यकृतस्तेषां प्रकृतयः परा ज्वलन्त्य उपलभ्यन्ते ॥ १३ ॥ स्यात्तु कर्मावयवेन तपसा वा कश्चित्सशरीरोऽन्तवन्तं लोकं जयति सङ्कल्पसिद्धिश्च स्यान्न तु तज्ज्यैष्ठ्यमाश्रमाणाम् ॥ १४ ॥

इति चतुर्विंशतितमी खण्डिका ॥ प्र० २ प० ९ ख० २४ ॥

इति चापस्तम्बधर्मसूत्रेषु द्वितीयप्रश्ने नवमः पटलः ॥ ९ ॥

---

व्याख्याताः सर्ववर्णानां साधारणवैशेषिका धर्माः । राज्ञस्तु विशेषाद्वक्ष्यामः ॥१॥ दक्षिणाद्वारं वेश्म पुरं च मापयेत् ॥ २ ॥ अन्तरस्यां पुरि वेश्म ॥ ३ ॥ तस्य पुरस्तादावसथस्तदामन्त्रणमित्याचक्षते ॥ ४ ॥ दक्षिणेन पुरं सभा दक्षिणोदग्द्वारा यथोभयं सन्दृश्येत बहिरन्तरं चेति ॥ ५ ॥ सर्वेष्वेवाजस्रा अग्नयस्स्युः ॥६॥ अग्निपूजा च नित्या यथा गृहमेधे ॥७॥ आवसथे श्रोत्रियावरार्ध्यानतिथीन् वासयेत् ॥ ८ ॥ तेषां यथागुणमावसथाः शय्यान्नपानं च विदेयम् ॥ ९ ॥ गुरूनमात्यांश्च नातिजीवेत् ॥ १० ॥ न चास्य विषये क्षुधा रोगेण हिमातपाभ्यां वावसीदेदभावाद्बुद्धिपूर्वं वा कश्चित् ॥ ११ ॥ सभाया मध्येऽधिदेवनमुद्धत्यावोक्ष्याक्षान्निवपेद्युग्मान् वैभीतकान् यथार्थान् ॥१२॥ आर्याः शुचयस्सत्यशीला दीवितारस्स्युः ॥१३॥ आयुधग्रहणं

नृत्तगीतवादित्राणीति राजाधीनेभ्योऽन्यत्र न विद्येरन् ॥ १४ ॥ क्षेमकृद्राजा यस्य विषये ग्रामेऽरण्ये वा तस्करभयं न विद्यते ॥ १५ ॥

॥ इति पञ्चविंशतितमी खण्डिका ( प्र० २ प० १० ख० २५ ) ॥

भृत्यानामनुपरोधेन क्षेत्रं वित्तं च ददद्ब्राह्मणेभ्यो यथार्हमनन्ताँल्लोकानभिजयति ॥१॥ ब्राह्मणस्वान्यपजिगीषमाणो राजा यो हन्यते तमाहुरात्मयूपो यज्ञोऽनन्तदक्षिण इति ॥२॥ एतेनान्ये शूरा व्याख्याताः प्रयोजने युध्यमानास्तनुत्यजः ॥३॥ ग्रामेषु नगरेषु चार्याञ्छुचीन् सत्यशीलान् प्रजागुप्तये निदध्यात् ॥४॥ तेषां पुरुषास्तथागुणा एव स्युः ॥ ५ ॥ सर्वतो योजनं नगरं तस्करेभ्यो रक्ष्यम् ॥ ६ ॥ क्रोशो ग्रामेभ्यः ॥७॥ तत्र यन्मुष्यते तैस्तत्प्रतिदाप्यम् ॥ ८ ॥ धार्म्यं शुल्कमपहारयेत् ॥९॥ अकरः श्रोत्रियः ॥ १० ॥ सर्ववर्णानां च स्त्रियः ॥ ११ ॥ कुमाराश्च प्राक् व्यञ्जनेभ्यः ॥ १२ ॥ ये च विद्यार्था वसन्ति ॥ १३ ॥ तपस्विनश्च ये धर्मपराः ॥ १४ ॥ शूद्रश्च पादावनेक्ता ॥ १५ ॥ अन्धमूकबधिररोगाविष्टाश्च ॥ १६ ॥ ये व्यर्था द्रव्यपरिग्रहैः ॥ १७ ॥ अबुद्धिपूर्वमलंकृतो युवा परदारमनुप्रविशन् कुमारीं वा वाचा बाध्यः ॥ १८ ॥ बुद्धिपूर्वं तु दुष्टभावो दण्ड्यः ॥ १९ ॥ सन्निपाते वृत्ते शिश्नच्छेदनं

सवृषणस्य ॥ २० ॥ कुमार्यां तु स्वान्यादाय नाश्यः ॥ २१॥ अथ भृत्ये राज्ञा ॥२२॥ रक्ष्ये चात ऊर्ध्वं मैथुनात् ॥ २३ ॥ निर्वेशे वृत्ते तु स्वेभ्योऽवसृजेत ॥ २४ ॥

इति षड्विंशतितमी कण्डिका । प्र० २ प० १० ख० २६ ॥

---

चरिते यथापुरं धर्माद्धि सम्बन्धः ॥ १ ॥ सगोत्रस्थानीयां नापरेभ्यस्समाचक्षीत ॥ २ ॥ कुलाय हि स्त्री प्रदीयत इत्युपदिशन्ति ॥ ३ ॥ तदिन्द्रियदौर्बल्याद्विप्रतिपन्नम् ॥ ४ ॥ अविशिष्टं हि परत्वं पाणेः ॥५॥ तद्व्यतिक्रमे खलु पुनरुभयोर्नरकः ॥ ६ ॥ नियमारम्भणो हि वर्षीयानभ्युदय एवमारम्भणादपत्यात् ॥७ ॥ नाश्य आर्यश्शूद्रायाम् ॥८॥ वध्यश्शूद्र आर्यायाम् ॥ ९॥ दारं चास्य कर्शयेत् ॥ १० ॥ सवर्णायामन्यपूर्वायां सकृत्सन्निपाते पादः पततीत्युपदिशन्ति ॥११॥ एवमभ्यासे पादः पादः ॥ १२ ॥ चतुर्थे सर्वम् ॥ १३ ॥ जिह्वाच्छेदनं शूद्रस्यार्यं धार्मिकमाक्रोशतः ॥ १४ ॥ वाचि पथि शय्यायामासन इति समीभवतो दण्डताडनम् ॥ १५ ॥ पुरुषवध स्तेये भूम्यादान इति स्वान्यादाय वध्यः ॥ १६ ॥ चक्षुर्निरोधस्त्वेतेषु ब्राह्मणस्य ॥ १७ ॥ नियमातिक्रमिणमन्यं वा रहसि बन्धयेत् ॥१८॥ आसमापत्तेः ॥ १९ ॥ असमापत्तौ नाश्यः ॥ २० ॥

गाङ्गा इति पाठान्तरम् ॥

आचार्य ऋत्विक्स्नातको राजेति त्राणं स्युरन्यत्र वध्यात् ॥ २१ ॥

॥ इति सप्तविंशतितमी खण्डिका ॥ (प्र० २ प० १० ख० २७) ॥

॥ इति चापस्तम्बधर्मसूत्रेषु द्वितीयप्रश्ने दशमः पटलः ॥ १० ॥

---

क्षेत्रं परिगृह्योत्थानाभावात्फलाभावे यस्समृद्धस्स भावि तदपहार्यः ॥ १ ॥ अवशिनः कीनाशस्य कर्मन्यासे दण्डताडनम् ॥ २ ॥ तथा पशुपस्य ॥ ३ ॥ अवरोधनं चास्य पशूनाम् ॥ ४ ॥ हित्वा व्रजमादिनः कर्शयेत्पशून् ॥ ५ ॥ नातिपातयेदवरुध्य पशून्मारणे नाशने वा स्वामिभ्योऽवसृजेत् ॥६॥ प्रमादादारण्ये पशूनुत्सृष्टान् दृष्ट्वा ग्राममानीय स्वामिभ्योऽवसृजेत् ॥ ७ ॥ पुनः प्रमादे सकृदवरुध्य ॥ ८ ॥ तत ऊर्ध्वं न सूक्षेत् ॥ ९ ॥ परपरिग्रहमविद्वानाददान एवोदके मूले पुष्पे फले गन्धे ग्रासे शाक इति वाचा बाध्यः ॥१०॥ विदुषो वाससः परिमोषणम् ॥ ११ ॥ अदण्ड्यः कामकृते तथा प्राणसंशये भोजनमाददानः ॥ १२ ॥ प्राप्तनिमित्ते दण्डाकर्मणि राजानमेनस्स्पृशति ॥ १३ ॥

॥ इति अष्टाविंशतितमी खण्डिका (प्र० २ प० ११ ख० २८) ॥

प्रयोजयिता मन्ता कर्तेति स्वर्गनरकफलेषु कर्मसु भागिनः ॥१॥ यो भूय आरभते तस्मिन् फलविशेषः ॥२॥ कुटुम्बिनौ धनस्येशाते ॥ ३ ॥ तयोर-

नुनतेऽन्येऽपि तद्धितेषु वर्तेरन् ॥ ४ ॥ विवादे विद्याभिजनसम्पन्ना वृद्धा मेधाविनो धर्मेष्वविनिपातिनः ॥ ५॥ सन्देहे लिङ्गतो दैवेनेति विचित्य ॥ ६॥ पुण्याहे प्रातरग्नाविद्धेऽपामन्ते राजवत्युभयतस्समाख्याप्य सर्वानुमते मुख्यस्सत्यं प्रश्नं ब्रूयात् ॥ ७ ॥ अनृते राजा दण्डं प्रणयेत् ॥८॥ नरकश्चात्राधिकः साम्पराये ॥९॥ सत्ये स्वर्गस्सर्वभूतप्रशंसा च ॥१०॥ सा निष्ठा या विद्या स्त्रीषु शूद्रेषु च ॥११॥ आथर्वणस्य वेदस्य शेष इत्युपदिशन्ति ॥१२॥ कृच्छ्रा धर्मसमाप्तिस्समाम्नातेन लक्षणकर्मणा तु समाप्यते ॥ १३ ॥ तत्र लक्षणम् । सर्वजनपदेष्वेकान्तसमाहितमार्याणां वृत्तं सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामदाम्भिकानां वृत्तसादृश्यं भजेत । एवमुभौ लोकावभिजयति ॥ १४ ॥ स्त्रीभ्यस्सर्ववर्णेभ्यश्च धर्मशेषान्प्रतीयादित्येक इत्येके ॥ ॥ १५ ॥

॥ इति एकोनत्रिंशत्तमी खण्डिका । प्र०२ प०११ ख०२९ ॥

॥ इति चापस्तम्बधर्मसूत्रेषु द्वितीयप्रश्ने एकादशः पटलः ॥११॥

॥ द्वितीयप्रश्नश्च समाप्तः ॥

---



# आपस्तम्बधर्मसूत्रपाठस्य शोधनपत्रिका ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १० | १२ | चार्यास्या | चार्यार्थस्या |
| १२ | १७ | पालिप्ते | पल्लिप्ते |
| १२ | २१ | नाध्या | नध्या |
| १३ | २ | तपा | तया |
| १४ | ७ | अध्याये | अध्यापय |
| १५ | ४ | तस्य | यस्य |
| १६ | १ | उल्कायम | उल्कायाम |
| २१ | ४ | णीत्युप | ण्युप |
| २४ | १४ | शेषान्नु | शेषाङ्कु |
| ३२ | १२ | न्ध्योर्वोद | न्ध्योरुद |
| ३३ | १५ | वृद्धो | व्यृद्धो |
| ३५ | १८ | अशुद्धि | अशुचि |
| ३७ | ७ | शुन्धने | शुन्धन |
| ५४ | १० | व्यभजेत | विभजेत् |
| ५५ | १३ | माद्या | मातृपुरुषाद्या |
| ५५ | १५ | भर्तारश्च | हर्तारश्च |
| ६० | ५ | निवेदयन्ते | हि वेदयन्ते |
| ६२ | ५ | मच्छादन | माच्छादनं |

शिवाभ्यां नमः

# ॥ आपस्तम्बप्रणीतं धर्मसूत्रम् ॥

## ॥ हरदत्तमिश्रविरचितया उज्ज्वलाख्यवृत्त्या सहितम् ॥

### प्रथमप्रश्नप्रारम्भः

मातामहमहाशैलं महस्तदपितामहम् ।
कारणं जगतां वन्दे कण्ठादुपरि वारणम् ॥
प्रणिपत्य महादेवं हरदत्तेन धीमता ।
धर्माख्यप्रश्नयोरेषा क्रियते वृत्तिरुज्ज्वला ॥

**ओम् ॥ * अथातः सामयाचारिकान्धर्मान् व्याख्यास्यामः ॥१॥**

अथशब्द आनन्तर्ये । अतश्शब्दो हेतौ । उक्तानि श्रौतानि गार्ह्याणि च कर्माणि । तानि च वक्ष्यमाणान् धर्मानपेक्षन्ते । कथम् । 'आचान्तेन कर्म कर्तव्यं शुचिना कर्तव्य'मिति[1] वचनादाचमनशौचादीनपेक्षन्ते । 'सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।' इति वचनात् सन्ध्यावन्दनम् । एवम् 'अशुचिकरनिर्वेषः ।' 'द्विजातिकर्मभ्यो हानिः पतनम्' इति वचनात् ब्रह्महत्यादिप्रायश्चित्तानि च । एवमन्येष्वपि यथासम्भवमपेक्षा द्रष्टव्या । अतस्तदनन्तरम् । सामयाचारिकान्धर्मान् व्याख्यास्यामः । पौरुषेयी व्यवस्था समयः । स च त्रिविधः । विधिर्नियमः प्रतिषेध इति । तत्र प्रवृत्तिप्रयोजनो विधिः । 'सन्ध्योश्च बहिर्ग्रामादासनं वाग्यतश्चे'त्यादिः (१–११–३०–८) । निवृत्तिप्रयोजनावितरौ । 'प्राङ्मुखोऽन्नानि भुञ्जीते'ति नियमविधिः (१–११–३१–१) । अनुपपत्त्यार्थो भोजने प्रवृत्तिः । शक्यं च य

---

१. 'आचान्तेन कर्तव्यं तथा शुचिना च पवित्रपाणिना च यज्ञोपवीतिना च कर्तव्यमिति वचनादाचमनादिचतुष्कृत्यमपेक्षन्ते ।' इति पाठान्तरम् ।

त्किञ्चनदिङ्मुखेनापि भुञ्जानेन क्षुदुपहन्तुम् । तत्र नियमः क्रियते प्राङ्मुख एव भुञ्जीत न दक्षिणामुख इति । परिसङ्ख्या तु नियमस्यैव कियानपि भेदः । एवं द्रव्यार्जने रागात्प्रवृत्तं प्रति नियमः क्रियते 'याजनाध्यापनप्रतिग्रहैरेव ब्राह्मणो द्रव्यमार्जयेत् न कृषिवाणिज्यादिने'ति । 'ब्राह्मणस्य गोरिति पदोपस्पर्शनं च वर्जये'दित्यादिः (१–११–३१–६) प्रतिषेधः । समयमूला आचारास्समयाचाराः तेषु भवाः सामयाचारिकाः । एवम्भूतान् धर्मानिति । कर्मजन्योऽभ्युदयनिश्श्रेयसहेतुरपूर्वाख्य आत्मगुणो धर्मः । तद्धेतुभूतकर्मव्याख्यानमेव तद्व्याख्यानम् । तत्र विधिषु तावद्विषयानुष्ठानाद्धर्म इति नास्ति विप्रतिपत्तिः । नियमेष्वपि नियमानुष्ठानाद्धर्म इति प्रतिषेधेष्वपि तत्र नञर्थानुष्ठानाद्धर्म इति केचित् । अत एव धर्मानित्यविशेषेणाह । अन्ये तु, विधिष्वेव धर्मः । इतरयोस्तु विपरीतानुष्ठानादधर्मः केवलं, न तु विषयानुष्ठानात् कश्चिद्धर्मः । न ह्यप्रतिगृह्णन्नपिबन्वा सुरां धार्मिक इति लोके प्रसिद्धः । सूत्रे तु धर्मग्रहणमधर्मस्याप्युपलक्षणमिति स्थितिः ॥ इति ॥ १ ॥ किं च भो समयोऽपि प्रमाणं, यदि प्रमाणमिदमपि प्रमाणं भवितुमर्हति 'चैत्यं वन्देत स्वर्गकामः । प्रगे भुञ्जीत । केशानुल्लुञ्छेत् । तिष्ठन् भुञ्जीत । न स्नाया'दिति । तत्राह— * **धर्मज्ञसमयः प्रमाणम्** ॥ २ ॥ न हि ब्रूमः समयमात्रं प्रमाणमिति । किं तर्हि । धर्मज्ञा ये मन्वादयस्तेषां समयः प्रमाणं धर्माधर्मयोः । कथं पुनरिदमवगतं मन्वादयो धर्मज्ञा न बुद्धादय इति । यद्युच्यते बुद्धादीनामतीन्द्रियेऽर्थे ज्ञानं न सम्भवतीति, मन्वादिष्वपि समानम् । अथ तेषां धर्मज्ञानातिशयादतीन्द्रियेऽपि ज्ञानं सम्भवतीति, तत् बुद्धादिष्वपि समानम् । यथाह—'सुगतो यदि धर्मज्ञः कपिलो नेति का प्रमा । तावुभौ यदि सर्वज्ञौ मतिभेदः कथं तयोः ॥' इति । वक्तव्यो वा विशेषः ॥ २ ॥ तमाह— * **वेदाश्च** ॥ ३ ॥ चोऽवधारणे । वेदा एव मूलप्रमाणं धर्माधर्मयोः । न च नित्यनिर्दोषेषु वेदेषूक्तोपालम्भसम्भवः । स्वतःप्रमाणस्य हि शब्दस्य न वक्तृदोषनिबन्धनमप्रामा-

१. 'धर्मज्ञसमयः प्रमाणं वेदाश्च' इति एकसूत्रतयैव क्वचित्पाठः ।

ण्यम् । तदिहास्मदादीनां धर्मज्ञसमयः प्रमाणं धर्मज्ञानां तु वेदाः प्रमाणम् । मनुरप्याह—'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् । आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥' गौतमोऽपि—'वेदो धर्ममूलं तद्विदां च स्मृतिशीले ।' इति । यद्यपि अप्रत्यक्षो वेदो मूलभूतोऽस्मदादिभिर्नोपलभ्यते । तथापि मन्वादिभिरुपलभ्यत इत्यनुमीयते । वक्ष्यति च 'तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते' इति ॥ ३ ॥ * **चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः** ॥ ४ ॥ ब्राह्मणाद्याश्चत्वारो वर्णसञ्ज्ञकाः । ते च सामयाचारिकैर्धर्मैरभिक्रियन्ते । चतुर्णामेवोपदेशेऽपि पुनश्चतुर्ग्रहणं यथाक्रमं चतुर्ष्वन्तर्भूतानामपि ग्रहणार्थम् । ततश्च 'ब्राह्मणः क्षत्रियां वैश्य' इति बोधायनादिभिरुक्तानामनुलोमादीनामप्यत्र ग्रहणं मतम् । तथा च गौतमः प्रतिलोमानामेव धर्मेऽनधिकारमाह—'प्रतिलोमास्तु धर्महीनाः' इति ॥ ४ ॥

* **तेषां पूर्वः पूर्वो जन्मतः श्रेयान्** ॥५॥ जन्मत इति वचनात् सद्वृत्तादपि शूद्राद्वैश्यो दुर्वृत्तोऽपि श्रेयान् । एवं वैश्यात् क्षत्रियः क्षत्रियात् ब्राह्मणः ॥ ५ ॥ * **अशूद्राणामदुष्टकर्मणामुपायनं वेदाध्ययनमग्न्याधेयं फलवन्ति च कर्माणि** ॥६॥ शूद्रवर्जितानां त्रयाणां वर्णानामदुष्टकर्मणामुपायनादयो धर्माः । उपायनमुपनयनम् । नात्र त्रैवर्णिकानामुपनयनादि विधीयते । प्राप्तत्वात् । नापि शूद्राणां प्रतिषिध्यते । प्राप्त्यभावात् । तथाहि—उपनयनं तावद्गृह्ये 'गर्भाष्टमेषु ब्राह्मणमुपनयीते'त्यादिना त्रैवर्णिकानामेव विहितम् । इहापि तथैव विधास्यते । अध्ययनमपि 'उपेतस्याचार्यकुले ब्रह्मचारिवास' इत्यारभ्य विधानात् अनुपनीतस्याप्राप्तमेव । किं च 'श्मशानवच्छूद्रपतितावि'ति अध्ययननिषेधो वक्ष्यते । यस्य यस्य समीपे नाध्येयं स कथं स्वयमध्येतुमर्हति । अग्न्याधेयमपि 'वसन्ते ब्राह्मण'मित्यादि त्रैवर्णिकानामेव विहितम् । 'फलवन्ति चाग्निहोत्रादीनि कर्माणि त्रयाणां वर्णानां'मित्युक्तत्वात् त्रैवर्णिकानामेव नियतानि । विद्याग्न्यभावाच्च शूद्राणामप्राप्त-

१ 'मन्वादय उपलब्धवन्त इत्यनुमीयते' इति पाठान्तरम् ।

२ 'वर्णानामुपदेशेऽपि पुनश्चतुर्ग्रहणं यथाकथञ्चिच्चतुर्ष्वन्तर्भूतानामपी'ति पाठान्तरम् ।

क्तानि । उक्तो विद्याग्न्यभावः । तस्माद्दुष्टकर्मप्रतिषेधार्थं सूत्रम् । तथा शास्त्रान्तरे—'द्विजादिकर्मभ्यो हानिः पतन'मिति । अप्रतिषेधे तु दुष्टकर्मणामप्यविकारो भवत्येव । फलवन्ति च कर्माणीत्यभिधानात् क्रियत इति कर्मेति निर्वचनात् 'प्रागुपनयनात् कामचारवादभक्ष' इति गौतमस्मरणं ब्रह्महत्यादिमहापातकव्यतिरिक्तविषयमित्यनुपेतस्यापि दुष्टकर्मत्वसम्भवात् अदुष्टकर्मणामुपनयनमुक्तम् । शूद्रप्रतिषेधस्तु, प्राप्तानुवादः ॥६॥ यथा ब्राह्मणादीनामुपनयनादयो धर्माः प्रधानभूताः तादृश शूद्रस्य कर्माह—* **शुश्रूषा शूद्रस्येतरेषां वर्णानाम्** ॥७॥ इतरेषां ब्राह्मणादीनां वर्णानां या शुश्रूषा सा शूद्रस्य परमो धर्मः ॥ ७ ॥ तत्र विशेषः—* **पूर्वस्मिन्पूर्वस्मिन्वर्णे निःश्रेयसं भूयः** ॥ ८ ॥ सर्वप्रकार कृताया अपि वैश्यशुश्रूषायाः मात्रयापि कृता क्षत्रियशुश्रूषा बहुतर फल साधयति । एवं क्षत्रियशुश्रूषाया ब्राह्मणशुश्रूषा ॥८॥ उपनयन वेदाध्ययनमित्यादि यदुक्तं अस्मिन् क्रमे उपनयने विशेषमाह—* **उपनयनं विद्यार्थस्य श्रुतितः संस्कारः** ॥९॥ विद्या अर्थः प्रयोजन यस्य स विद्यार्थः । तस्याय श्रुतिविहितसंस्कारः उपनयनं नाम । 'विद्यार्थस्ये'ति वचनात् मूकादेर्न भवति । तथा च शङ्खलिखितौ 'नोन्मत्तमूकान् संस्कुर्यात्' इति । लिङ्गस्य विवक्षितत्वात् स्त्रिया अपि तन्न भवति । यद्यपि तस्याः 'अग्ने गृहपते' इत्यादिकया विद्यया अर्थः । श्रुतित इति वचनं तदतिक्रमे श्रौतातिक्रमप्रायश्चित्तप्राप्त्यर्थम् ॥९॥ अनेकवेदाध्यायिनां वेदव्रतवदुपनयनमपि प्रतिवेद भेदेन कर्तव्यमिति प्राप्ते उच्यते—* **सर्वेभ्यो वै वेदेभ्यः सावित्र्यनूच्यत इति हि ब्राह्मणम्** ॥१०॥ 'त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् । तदित्यृचोऽस्याःसावित्र्याः परमेष्ठी प्रजापतिः ॥' इति मनुः । ततश्चोपनयने यत्सावित्र्या अनुवचनं तन्मुखेन सर्ववेदा अनूक्ता भवन्तीत्यगृह्यमाणविशेषत्वादेकमेवोपनयनं सर्वार्थमिति । अस्मिन्नर्थे ब्राह्मणमपि भवति । ब्राह्मणमेव पठितम ॥ आथर्वणस्य वेदस्य पृथगुपनयनं कर्तव्यम् । तथा च तत्रैव श्रुतम् 'नान्यसंस्कृतो भृग्वङ्गिरसोऽधीयीते'ति ॥१०॥ विद्वानेवोपनेताभिगम्यत इति विधातुमविदुषो निन्दामाह—* **तमसो वा एष तमः प्रविशति यमविद्वानुपनयते यश्चाविद्वानिति हि ब्राह्मणम्** ॥ ११ ॥

यथा कश्चित् तमस्सकाशात्तम एव प्रविष्टो न किञ्चिज्जानाति एवमेषः यं माणवकमविद्वानुपनयते तथा यश्चाविद्वान्। उपनीयते इत्यपेक्ष्यते । यश्च स्वयमप्यविद्वान् सन्नुपनीयते सोऽपि तमस एव तमः प्रविशति । अस्मिन्नर्थे ब्राह्मणमपि भवतीति॥ ११॥ कीदृशस्तर्ह्युपनेताभिगम्यस्तमाह—***तस्मिन्नाभिजनविद्यासमुदेतं समाहितं संस्कर्तारमीप्सेत्** ॥ १२॥ अविच्छिन्नवेदवित्सम्बन्धे कुले जन्म अभिजनः । षड्भिरङ्गैस्सहैव यथावदर्थज्ञानपर्यन्तमधीतो वेदो विद्या। सर्वासम्भवे वेद एव वा । तस्मिन्नुपनयने कर्तव्ये ताभ्यां अभिजनविद्याभ्यां समुदेतं सम्पन्नम् । समाहितं विहितप्रतिषिद्धेष्ववहितमनसम्। संस्कर्तारमाचार्यमीप्सेत् । इच्छया करण लक्ष्यते।आप्नुयादभिगच्छेदिति॥ १२॥***तस्मिंश्चैव विद्याकर्मान्तमविप्रतिपन्ने धर्मेभ्यः** ॥ १३॥ तस्मिन्नेव चोपनेतरि विद्याकर्म विद्याग्रहण कर्तव्यम् । आन्तमासमाप्तेः । अविप्रतिपन्ने धर्मेभ्यः । यद्याचार्यो धर्मेभ्यो न प्रच्युतो भवति । प्रच्युते तु तस्मिन्नसम्पर्कार्हे अन्यतोऽपि विद्याकर्म भवत्येव । येषां चाचार्यकरणविधिप्रयुक्तमध्ययनं तेषामेतन्नोपपद्यते । कथमुपनीयाध्यापनेनाचार्यकं भावयेदिति । सकृदुपनीतस्य माणवकस्य न पुनरुपनयनसंस्कारःसम्भवति । तं कथमन्योऽध्यापयेत् । एतेन मध्ये आचार्यमरणे माणवकस्य तदन्तमध्ययनं नाचार्यान्तरात् सम्भवतीति द्रष्टव्यम्॥ १३॥ आचार्यशब्दनिर्वचनमाह—***यस्माद्धर्मानाचिनोति स आचार्यः** ॥ १४॥ यस्मात्पुरुषादयं माणवकः धर्मानाचिनोति शिक्षते स आचार्यः । 'अप्यक्षरसामान्यानि ब्रूयादि'ति चकारमात्रेणेदं निर्वचनम् । अनेन प्रकारेण माणवकमाचार्यः शौचाचारांश्च शिक्षयेदित्युक्त भवति॥ १४॥***तस्मै न द्रुह्येत्कदाचन**॥ १५॥ तस्मै एवभूताचार्याय कदाचन कदाचिदपि न द्रुह्येत् । तद्विषयमपकारं न कुर्यात ॥ १५॥ कस्मादित्यत आह— ***स हि विद्यातस्तं जनयति** ॥ १६ ॥ स ह्याचार्यः तं माणवकं विद्यातो जनयति । यथा पिता मातृतः । 'अत्रास्य माता सावित्री पिता त्वाचार्य उच्यते । 'इति शास्त्रान्तरम्॥ १६॥***तच्छ्रेष्ठं जन्म** ॥ १७॥

---

१ 'आचार्यविधिकरण' इति पाठान्तरम् ।

२. 'तद्वृत्तमध्ययन' 'तदवृत्तमध्ययनम्' इति च क्वचित्पाठः ।

तद्विद्यातो जन्म श्रेष्ठं प्रशस्ततमम् । अभ्युदयनिःश्रेयसहेतुत्वात् ॥ १७ ॥ मातापितृभ्यामाचार्यः श्रेष्ठ इत्याह—***शरीरमेव मातापितरौ जनयतः ।१८।** मातापितरौ शरीरमात्रमेव काष्ठकुड्यादिसमं जनयतः । आचार्यस्तु, सर्वपुरुषार्थक्षमं रूपं जनयति । 'आचार्यः श्रेष्ठो गुरूणा'मिति गौतमः ॥ १८ ॥ ***वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यं गर्भाष्टमेषु ब्राह्मणं गर्भैकादशेषु राजन्यं गर्भद्वादशेषु वैश्यम् ॥ १९ ॥** वसन्ते ब्राह्मणमित्यादि गृह्ये गतम् ॥ १९ ॥ *** अथ काम्यानि ॥ २० ॥** कामनिमित्तानि उपनयनानि वक्ष्यन्ते ॥ २० ॥ *** सप्तमे ब्रह्मवर्चसकाममष्टम आयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादश इन्द्रियकामं द्वादशे पशुकामम् ॥ २१ ॥** ब्रह्मवर्चसकाममित्यादीनि षट्सूत्राणि स्पष्टार्थानि । सर्वत्रोपनयीतेत्यपेक्ष्यते ॥ २१ ॥ 'आचार्याधीनस्स्या'दित्यादीनि यानि ब्रह्मचारिणो व्रतानि वक्ष्यन्ते तेष्वसमर्थानां कुमाराणां वर्णक्रमेणानुकल्पमाह —***आषोडशाद्ब्राह्मणस्यानात्यय आद्वाविंशात्क्षत्रियस्याचतुर्विंशाद्वैश्यस्य ॥ २२ ॥ यथा व्रतेषु समर्थः स्याद्यानि वक्ष्यामः ॥ २३ ॥** आकारोऽभिविधौ । अत्ययोऽतिक्रमः । स एवाऽत्ययः तदभावोऽनात्ययः । याटच्छिको दीर्घः । आर्षो वा प्रयोगः । प्रकरणादुपनयनकालस्येति गम्यते । यथा व्रतेषु समर्थः स्यात् तथा एतावान् कालः प्रतीक्ष्यः । पूर्वमेव तु सामर्थ्ये सति अष्टवर्षाद्यतिक्रमे वक्ष्यमाणप्रायश्चित्तमेव भवति । एवं षोडशादिभ्य ऊर्ध्वं कियन्तश्चित्कालमसमर्थानां पश्चात्सामर्थ्ये सति प्रायश्चित्तं भवत्येव ॥ २२ २३ ॥ तदानीं प्रायश्चित्तमाह—***अतिक्रान्ते सावित्र्याः काल ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेत् ॥ २४ ॥** यस्य यः सावित्र्याः काल उक्तः तदतिक्रमे त्रैविद्यकं त्र्यवयवा विद्या तामधीयते त्रैविद्याः तेषामिदं त्रैविद्यकम् । 'गोत्रचरणाद्वुञ्' चरणाद्धर्माम्नाययोरि'ति वुञ् । एवंभूतं ब्रह्मचर्यम् अग्निपरिचर्यामध्ययनं गुरुशुश्रूषामिति परिहाप्य सकलं ब्रह्मचर्यधर्मं चरेत् । कियन्तं कालम् ऋतुं कालाध्वनोरत्यन्तसंयोगे द्वितीया । ऋतुमिति वचनाद्वत्सरारम्भे प्रायश्चित्तारम्भमिच्छन्ति ॥ २४ ॥ *** अथोपनयनम् ॥ २५ ॥** एवं चरितव्रत उपनेतव्यः ॥ २५ ॥ **ततस्संवत्सरमुदकोपस्पर्शनम् ॥ २६ ॥** ततः उपनयनादा-

रभ्य संवत्सरमुदकोपस्पर्शनं स्नानं कर्तव्यम् । शक्तस्य त्रिषवणं स्नानम् । अन्यस्य यथाशक्ति ॥२६॥ *** अथाध्याप्यः ॥ २७॥** एवं चरितव्रतः पश्चादध्याप्यः॥२७॥ *** अथ यस्य पिता पितामह इत्यनुपेतौ स्यातां ते ब्रह्महसंस्तुताः ॥ २८ ॥** यस्य माणवकस्य पिता पितामहश्चानुपेतौ स्यातां स्वयं च ते । तथाविधा माणवका ब्रह्महसंस्तुताः ब्रह्महण इत्येव कीर्तिताः ब्रह्मवादिभिः । अस्मिन् तच्छब्दयोगस्तद्धर्मप्राप्त्यर्थं । एवं च 'श्मशानवच्छूद्रपतिना'वित्यध्ययननिषेधप्रकरणे वक्ष्यते । ततश्च ब्रह्म यथा ब्रह्महसमीपे नाध्येयमेवमेषामपीति॥२८॥ ***तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत् ॥२९॥** तेषामेतेषामभ्यागमनमाभिमुख्येन गमनम् । मातापितृपुत्रदारशरीररक्षणार्थमपि वर्जयेत् । यद्यपि भिक्षा सर्वत्र प्रतिग्राह्येति वक्ष्यते । भोजनमुद्यतमपि वर्जयेत् । 'अपि दुष्कृतकारिण' इति सत्यपि वचने विवाहं च वर्जयेत् । यद्यपि 'स्त्रीरत्नं दुष्कुलादपी'ति मानवस्मरणम् ॥२९॥ ***तेषामिच्छतां प्रायश्चित्तम् ॥ ३० ॥** इच्छतामिति वचनान्न बलात्कारेण प्रायश्चित्तं कारयितव्यम्॥३०॥ ***यथा प्रथमेऽतिक्रम ऋतुरेवं संवत्सरः ॥ ३१ ॥** यथा प्रथमेऽतिक्रमे ब्रह्मचर्यस्य ऋतुःकालः एवमन्यस्मिन्नतिक्रमे संवत्सरः काल ॥३१॥ ***अथोपनयनं तत उदकोपस्पर्शनम्॥३२॥३३॥**गते॥३२॥ ॥३३॥ ॥ इति प्रथमा खण्डिका ॥ प्र० १ प० १ ख० १ ॥

---

***प्रतिपूरुषं सङ्ख्याय संवत्सरान्यावन्तोऽनुपेताः स्युः ॥ १ ॥** यदि पितैवानुपेतः तत संवत्सरमेक अथ पितामहोऽपि ततो द्वौ । अथ स्वयमपि यथाकालमनुपेतः ततः संवत्सरानिति ॥१॥ अथोदकोपस्पर्शने मन्त्राः— ***सप्तभिः पावमानीभिर्यदन्ति यच्च दूरक इत्येताभिर्यजुष्पवित्रेण सामपवित्रेणाङ्गिरसेनेति ॥२॥** पवमानः सोमो देवता यासां ताः पावमान्यः, यजुष्पवित्रेण 'आपो अस्मान्मातरः शुन्धन्त्वि'त्यनेन, सामपवित्रेण 'कया नश्चित्र आभुवदि'त्यादिगीतेन वामदेव्येन साम्ना, आङ्गिरसेन 'हंसःशुचिषदि'त्यनेन एतैरञ्जलिना शिरस्यपोऽवासिञ्चेत् ॥२॥ *** अपि वा व्याहृतिभिरेव ॥ ३ ॥** पूर्वैः सह व्याहृतीनां विकल्पः ॥३॥ *** अथाध्या-**

ध्यः ॥ ४ ॥ गतम् ॥ तत्र 'यस्य पिता पितामह' इत्युपक्रमे यस्येत्येकवचनमन्तेऽ'ध्यध्याप्य' इति । मध्ये तु 'ब्रह्महसंस्तुताः' तेषामभ्यागमनं तेषामिच्छतामिति बहुवचनम् । तत्रोपक्रमोपसंहारानुसारेण माणवकस्यैव प्रायश्चित्तमुपनयनमध्यापनं च । बहुवचनं तु तथाविधमाणवकबहुत्वापेक्षमित्यवोचाम ॥४॥ * **अथ यस्य प्रपितामहादि नानुस्मर्यत उपनयनं ते श्मशानसंस्तुताः** ॥ ५ ॥ प्रपितामहः पितामहः पिता स्वयं च यथा कालमिति । ते तथाविधा माणवकाः श्मशानसंस्तुताः । एतेन 'श्मशाने सर्वतः शम्याप्रासा'दित्यध्ययननिषेधात्तेषामपि सन्निधौ भवति ॥५॥ * **तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत्तेषामिच्छतां प्रायश्चित्तं द्वादशवर्षाणि त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनं तत उदकोपस्पर्शनं पावमान्यादिभिः** ॥ ६ ॥ गतम् । पावमान्यादिभिरित्यनेनैव प्रतिपुरुषं सङ्ख्याय संवत्सरानित्येतदपि द्रष्टव्यम् ॥६॥ * **अथ गृहमेधोपदेशनम्** ॥ ७ ॥ गृहमेधो गृह्यशास्त्र गृहस्थधर्मो वा ॥७॥ * **नाध्यापनम्** ॥८॥ कृत्स्नस्य वेदस्य । किं तु गृह्यमन्त्राणामेवेति ॥८॥ * **ततो यो निवर्तते तस्य संस्कारो यथा प्रथमेऽतिक्रमे** ॥९॥ ततः एवं कृतप्रायश्चित्तात् गृहस्थीभूतात्ततो यो निवर्तते उत्पद्यते तस्योपनयनसंस्कारः कर्तव्यः । कथम् । यथा प्रथमेऽतिक्रमे ऋतु त्रैविद्यकं ब्रह्मचर्यं चारयित्वेत्यर्थः ।९। ***तत ऊर्ध्वं प्रकृतिवत्** ॥ १० ॥ ततः यो निवर्तते तस्य प्रकृतिवत् यथा प्राप्तमुपनयनं कर्तव्यमिति । यस्य प्रपितामहस्य पितुरारभ्य नानुस्मर्यत उपनयन तत्र प्रायश्चित्त (चा) नोक्तम् । धर्मज्ञैरूहितव्यम् । एवं ततः पूर्वेष्वपि निरूपितमुपनयनम् ॥१०॥ अथाध्ययनविधिः—* **उपेतस्याचार्यकुले ब्रह्मचारिवासः** ॥ ११ ॥ एवं यथाविध्युपेतस्य ब्रह्मचारिणस्सत आचार्यकुले वासो भवति । ब्रह्म वेदस्तदर्थं व्रतं चरतीति ब्रह्मचारी । अध्ययनाङ्गानि व्रतानि चरता आचार्यकुले वस्तव्यमित्युक्तं भवति ॥ ११ ॥तत्रकालः—***अष्टाचत्वारिंशद्वर्षाणि** ॥ १२ ॥ चतुर्णां वेदानामध्ययनकाल एषः । प्रतिवेदं द्वादश॥ १२॥ ***पादूनम्** ॥ १३॥ स एव कालः पादून वा प्रत्येतव्यः । पादेनोन पादूनम् । पररूप कन्तवत् । षट्त्रिंशद्वर्षाणि । प्रतिवेदं नव ॥ १३ ॥

**स्पतिमूलफलवर्जम्** ॥१९॥ अनन्तरोक्तं विधिद्वयं फाणितादीन्वर्जयित्वा द्रष्टव्यम् । फाणितं पानविशेषः । इक्षुरस इति केचित् । भृष्टानां व्रीहीणां तण्डुलाः पृथूकृताः पृथुकाः । करम्बो दधिसक्तुसमाहारः,ऽयः करम्ब इति प्रसिद्धः । वेदेऽप्युभयं भवति—'यत्करम्भैर्जुहोति धानाः करम्बः परिवाप' इति ॥ भरूजाः भृष्टा यवाः । क्षीरविकारो दध्यादि । प्रसिद्धमन्यत् । 'अथाशूक्तं चेत्यस्य विधेः शेषम् ॥ १९ ॥ ***शूक्तं चापरयोगम्** ॥२०॥ परेण द्रव्यान्तरेण योगो यस्य तत् परयोगं, ततोऽन्यदपरयोगम् । तदेव शूक्तं वर्ज्यं यत्तद्रव्यादि द्रव्यान्तरसंसृष्टं शूक्तं तदभोज्यमेव । एवं च पूर्वत्रैवापरयोगमिति विशेषणं वक्तव्यम् । इदमेव वा सूत्रमस्तु । सूत्रद्वयकरणं चाचार्यप्रवृत्तिकृतम् । यथा 'सलावृक्येकसृकोलूकशब्दा' इति पूर्वं सामान्येनाभिधाय 'सलावृक्यामेकसृक' इति 'स्वप्नपर्यन्त'मिति पश्चाद्विशेष उक्तः ॥२०॥ ***सर्वं मद्यमपेयम्** ॥२१॥ मद्य मदकरं तत्सर्वमपेयम् । अत्र स्मृत्यन्तरवशाद्व्यवस्था । तत्र मनुः—'गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा । यथैवैका न पातव्या तथा सर्वा द्विजोत्तमैः ॥' इति । सुराव्यतिरिक्तं तु मद्यं ब्राह्मणस्य नित्यमपेयम् । तथा च गौतमः— 'मद्यं नित्य ब्राह्मणस्ये'ति 'क्षत्रियवैश्ययोस्तु ब्रह्मचारिणो'रिति । २१ । ***तथैलकं पयः** ॥२२॥ अविः एलका । तस्याः क्षीरमपेयम् ॥२२॥ ***उष्ट्रीक्षीरमृगीक्षीरसन्धिनीक्षीरयमसूक्षीराणीति** ॥२३॥ उष्ट्रमृगौ प्रसिद्धौ । या गर्भिणी दुग्धे सा सन्धिनी शास्त्रान्तरे प्रसिद्धा । एककालदोहेत्यन्ये । एकस्मिन् प्रसवे या अनेकं गर्भं सूते, सा यमसूः । उष्ट्रादीनां क्षीराण्यपेयानि । इतिकरणमेकशफाना क्षीरमपेयमिति । तथा च मनुः—'आरण्यानां च सर्वेषां मृगाणां माहिषीं विना । स्त्रीक्षीरं चैव वर्ज्यानि सर्वशूक्तानि चैव हि ॥ अनिर्दशाया गोः क्षीरमौष्ट्रमैकशफं तथा । आविकं सन्धिनीक्षीरं विवत्सायाश्च गोः पयः ॥' इति ॥२३॥ * **धेनोश्चानिर्दशायाः** ॥२४॥ या धेनुर्नवसूतिका गौः । चकारादजामाहिष्योश्च । 'अजा गावो माहिष्यश्चे'ति मानवे दर्शनात् ॥२४॥ * **तथा कीललौषधीनां च** ॥२५॥ कीललौषधयः सुरा

र्था ओषधयः तासां च विकारभूतमन्नमनाद्यम् ॥२५॥ ***कलञ्जपलण्डुपरारीकाः** ॥२६॥ कलञ्जं रक्तलशुनम् । पलण्डु श्वेतम् । परारीका कृष्णम् । मण्डुभाख्यया म्लेच्छानां प्रसिद्धम् । एते चाभक्ष्याः ॥२६॥ प्रतिपदपाठो न शक्यत इति समासेनाह—***यच्चान्यत्परिचक्षते** ॥२७॥ यच्चान्यदेवं युक्तं शिष्टाः परिचक्षते वर्जयन्ति तदप्यभक्ष्यम् । तत्राह मनुः—'लशुनं गृञ्जनं चैव पलण्डुकवकानि च । अभक्ष्याणि द्विजातीनाममेध्यप्रभवानि च ॥' इति ॥२७॥ ***क्याकभोज्यमिति हि ब्राह्मणम्** ॥२८॥ क्याकु छत्राकं तदभोज्यमभक्ष्यम् । ब्राह्मणग्रहणमुत्तरार्थम् ॥ २८ ॥ ***एकखुरोष्ट्रगवयग्रामसूकरशरभगवाम्** ॥ २९ ॥ मांसमित्यर्थाद्गम्यते । एकखुरा अश्वादयः । गवयो गोसदृशः पशुः । शरभोऽष्टापद आरण्यो मृगः । अन्ये प्रसिद्धाः । एतेषां मांसमभक्ष्यम् ॥२९॥ ***धेन्वनडुहोर्भक्ष्यम्** ॥३०॥ गोप्रतिषेधस्य प्रतिप्रसवः ॥३०॥ ***मेध्यमानडुहमिति वाजसनेयिकम्** ॥ ३१ ॥ अनडुहः मांसं न केवलं भक्ष्यं किं तर्हि मेध्यमपीति वाजसनेयिनः समामनन्ति ॥३१॥ ***कुक्कुटो विकिराणाम्** ॥३२॥ व्यवहितमप्यभोज्यमिति सम्बध्यते । पादाभ्यां विकीर्य कीटधान्यादि ये भक्षयन्ति मयूरादयो विकिरास्तेषां मध्ये कुक्कुटोऽभक्ष्यः । स्मृत्यन्तरवशात् ग्राम्यो नारण्यः ॥३२॥ ***प्लवः प्रतुदाम्** ॥३३॥ तुण्डेन प्रतुद्य ये भक्षयन्ति ते दार्वाघाटादयः प्रतुदः । तेषां मध्ये प्लवः एवाभक्ष्यः । प्लवः शकटबल्लाख्यो बकविशेषः ॥३३॥ ***क्रव्यादो हंसभासचक्रवाकसुपर्णाश्च क्रुञ्चक्रौञ्च वार्ध्राणसलक्ष्मणवर्जम्** ॥३४॥ क्रव्यादः क्रव्यं मांसं तदेव केवलं ये अदन्ति ते क्रव्यादः गृध्रादयः । ते अभक्ष्याः । हंसः प्रसिद्धः । भासः श्येनाकृतिः पीनतुण्डः । चक्रवाकः मिथुनचरः । सुपर्णः श्येनः एते चाभक्ष्याः । क्रुञ्चा वृन्दचाराः । क्रौञ्चा मिथुनचाराः । ते चाभक्ष्याः । सूत्रे क्रौञ्चेति विभक्तिलोपश्छान्दसः । किमविशेषेण क्रुञ्चक्रौञ्चा अभक्ष्याः । नेत्याह—वार्ध्राणसलक्ष्मणवर्जम् । श्वेतो लोहितो वा येषां मूर्धा ते लक्ष्मणाः त एव विशिष्यन्ते वार्ध्राणसा इति । वार्ध्रं चर्म तदाकारा नासिका

येषां ते वार्ध्राणसाः। एवंभूतान् लक्ष्मणान् वर्जयित्वा क्रुञ्चक्रौञ्चा न भक्ष्या इति। अन्ये त्वाहुः—क्रव्याद इति प्राप्तस्य प्रतिषेधस्य क्रुञ्चादिषु चतुर्षु प्रतिषेध इति। तत्र लक्ष्मणा सारसी लक्ष्मणवर्जमिति 'ङ्याप़ोस्संज्ञाच्छन्दसो'रिति ह्रस्वः। एवं क्रुञ्चादिशब्दस्याप्यजादिटाबन्तस्य ॥३४॥ ***पञ्चनखानां गोधाकच्छपश्वाविट्छ्यर्यकखड्गशशपूतिखषवर्जम्** ॥३५॥ पञ्चनखा नरमार्जारादयः। तेषां मध्ये गोधादीन् सप्त वर्जयित्वा अन्ये अभक्ष्याः। गोधा कृकलासाकृतिर्महाकायः। कच्छपः कूर्मः। श्वाविट् वराहविशेषः। यस्य नाराचाकाराणि लोमानि। शर्यकः शल्यकः। यस्य चर्मणः तनुत्राणं क्रियते। श्वाविट्शल्यक इति युक्तः पाठः। एके तु छकारं पठन्ति। छकारात्पूर्वमिकारम्। खड्गो मृगविशेषः। यस्य शृङ्गं तैलभाजनम्। पूतिखषः शशाकृतिः हिमवति प्रसिद्धः ॥३५॥ ***अभक्ष्यश्चेटो मत्स्यानाम्** ॥३६॥ मत्स्यानां मध्ये चेटाख्यो मत्स्यो न भक्ष्यः ॥३६॥ ***सर्पशीर्षी मृदुरः क्रव्यादो येचान्ये विकृता यथा मनुष्यशिरसः**॥३७॥ सर्पस्येव शिरो यस्य सोऽपि मत्स्यो न भक्ष्यः। मृदुरो मकरः। ये च क्रव्यमेवादन्ति शिशुमारादयः तेऽप्यभक्ष्याः। ये च उक्तेभ्योऽन्ये मत्स्या विकृताकाराः। तत्रोदाहरणम्—यथा मनुष्यशिरसः जलमनुष्याख्या जलहस्त्यादयश्च तेऽपि सर्वे न भक्ष्याः। अत्र मनुः—'अनुमन्ता विशसिता निहन्ता क्रयविक्रयी। संस्कर्ता चोपहर्ता च खादकश्चेति घातकाः॥ न मांसभक्षणे दोषो न मद्ये न च मैथुने। प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला॥' इति। अप्रतिषिद्धेष्वपि भक्षणान्निवृत्तिरेव ज्यायसीत्यर्थः ॥३७॥

**॥ इति सप्तदशी खण्डिका ॥ प्र० १ प० ५ ख० १७ ॥**

---

**इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्**

**उज्ज्वलायां प्रथमप्रश्ने पञ्चमः पटलः ॥५॥**

एवं तावन्निमित्तदुष्टं जातिदुष्टं कालदुष्टं चाभोज्यमुक्तम् । तत्र निमित्तदुष्टं 'यस्य कुले म्रियेते'त्यादि । जातिदुष्टं करञ्जादि । कालदुष्टं पर्युषितादि । इदानीं प्रतिग्रहात्तु शुचीनि कानिचित् अनुज्ञाय कानिचित् प्रतिषेधति —***मध्वामं मार्गं मांसं भूमि मूलफलानि रक्षा गव्यूतिर्निवेशनं युग्यघासश्चोग्रतः प्रतिग्राह्याणि** ॥ १ ॥ मधु पक्वमपक्वं वा । आम तण्डुलादि । मृगस्य विकारो मार्गं मांसम् । भूमिः शालेयादिक्षेत्रम् । विश्रमस्थानमित्यन्ये । मूलफलानि मूलकन्दादीनि । रक्षा अभयदानम् । गव्यूतिर्गोमार्गः । निवेशनं गृहम् । युगं वहतीति युग्यो बलीवर्दः । तस्य घासो भक्षणं पलालादि । एतान्युग्रतोऽपि प्रतिग्राह्याणि अदुर्भिक्षेऽपि । उग्रः पापकर्मा द्विजातिः वैश्याद्वा शूद्रायां जातः । उग्रग्रहणं तादृशानामुपलक्षणम् ॥ १ ॥ ***एतान्यपि नानन्तेवास्याहृतानीति हारीतः** ॥२॥ एतानि मध्वादीन्यपि अन्तेवास्याहृतान्येव प्रतिग्राह्याणि । न स्वयमुग्रत इति हारीत आचार्यो मन्यते ॥ २ ॥ ***आमं वा गृह्णीरन्** ॥ ३ ॥ पूर्वोक्तेष्वामं स्वयमेव वा गृह्णीरन् द्विजा इति हारीतस्य पक्षः ॥ ३ ॥***कृतान्नस्य वा विरसस्य** ॥ ४ ॥ आमस्यालाभे कृतान्नस्यापि लवणादिरसासयुक्तस्य । षष्ठीनिर्देशात् स्तोकं स्वयमन्तेवास्याहृतं वा गृह्णीरन् ॥४॥ ***न सुभिक्षाः स्युः** ॥ ५ ॥ अनन्तरोक्तविधानद्वये यद्गृहीतमन्नं तेन सुभिक्षाः सुविहिता न भवेयुरेव । यावता प्राणयात्रा भवति तावदेव गृह्णीरन् न यावता सौहित्यं तावदिति ॥ ५ ॥ ***स्वयमप्यवृत्तौ सुवर्णं दत्वा पशुं वा भुञ्जीत** ।६। यदा तु दुर्भिक्षतया आत्मनोऽपि वृत्तिर्न लभ्यते प्रागेव पोष्यवर्गस्य तदा स्वयमप्यवृत्तौ यत्रैव वृत्तिर्लभ्यते तत्रैव भुञ्जीत । तत्र गुणविधि । सुवर्णं दत्वा सकृदेवोपकल्पतमुपरिष्टात्सुवर्णेन स्पृष्ट्वा । एतेन पशु वा दत्वेत्यपि व्याख्यातम् । 'पशुरग्निः अग्निः पशुरासी'दिति मन्त्रलिङ्गात् गोसूक्तेनाग्नेरुपस्थानदर्शनात् ॥ ६ ॥ ***नात्यन्तमन्ववस्येत्** ॥७॥ न पुनरत्यन्तमन्ववसीदेत् ॥ ७ ॥***वृत्तिं प्राप्य विरमेत्** ॥ ८ ॥ यदा विहिता वृत्तिर्लभ्यते तदा निषिद्धाया विरमेत् । न पुनस्सकृत्प्रवृत्तायाः किमवकुण्ठनेनेति

न्यायेन तत्रैव रमते । अत्र छान्दोग्योपनिषत्—'मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास । स हेभ्यं कुल्माषान् खादन्तं बिभिक्षे' इत्यादि । मन्त्रश्च भवति—'अवृत्त्याशुन अन्त्राणि पेच' इति । अवृत्त्या वृत्त्यभावेन । अपर आह—स्वयमप्यवृत्तौ आ तन्निवृत्तेर्यत्र कुत्रचिन्नीचे दातरि भुञ्जानो वसेत् यां च यावतीं च स्वर्णमात्रां यं कञ्चन पशुं वा तस्मै दत्वा । न पुनरत्यन्तमन्ववस्येत् वृत्तिं प्राप्य विरमेदिति ॥८॥ एवमापदि वृत्तिमुक्त्वा सुभिक्षेऽनापदि वृत्तिमाह—*त्रयाणां वर्णानां क्षत्रियप्रभृतीनां समावृत्तेन न भोक्तव्यं प्रकृत्या ब्राह्मणस्य भोक्तव्यम् ॥९॥ समावृत्तो द्विजातिः क्षत्रियादीनां त्रयाणां वर्णानां गृहे न भुञ्जीत । पक्वभोज्यं ब्राह्मणस्यान्नं प्रकृत्या स्वभावेनैव भोक्तव्यम् ॥९॥ *कारणादभोज्यम् ॥१०॥ कारणादेव त्वभोज्यम् ॥१०॥ कारणमाह—*यत्राप्रायश्चित्तं कर्मासेवते प्रायश्चित्तवति ॥११॥ यत्र यदा अग्निहोत्रवैश्वदेवाद्यकरणे प्रायश्चित्तं मुक्त्वा तदनुरूपं नित्यमाभ्युदयिकं वा कर्मासेवते तात्पर्येण करोति न प्रायश्चित्तवत्यात्मनि चोदितं प्रायश्चित्तं, तदैतस्मात्कारणादभोज्यमिति ॥११॥ *चरितनिर्वेषस्य भोक्तव्यत् ॥१२॥ चरितो निर्वेषः प्रायश्चित्तं येन तस्यान्नं भोक्तव्यं तद्भोजने न दोषः । निष्ठया भूतकालस्याभिधानाच्चर्यमाणेऽपि निर्वेषे न भोक्तव्यम् । किं तर्हि । चरिते ॥१२॥ *सर्ववर्णानां स्वधर्मे वर्तमानानां भोक्तव्यं शूद्रवर्जमित्येके ॥१३॥ शूद्रवर्जितानां स्वधर्मे वर्तमानानां सर्वेषामेव वर्णानामन्नं भोज्यम् । न ब्राह्मणस्यैवेत्येके मन्यन्ते ॥१३॥ *तस्यापि धर्मोपनतस्य ॥१४॥ तस्यापि

१ 'मटचीहतेषु मटच्यः अशनयः ताभिर्हतेषु नाशितेषु कुरुषु सस्येष्वित्यर्थः । ततो दुर्भिक्षे जाते आटिक्या अनुपजातपयोधरादिस्त्रीव्यञ्जनया जायया उषस्तिर्ह नामतः चक्रस्यापत्यं चाक्रायण इभ हस्ती तमर्हतीतीभ्य ईश्वरः हस्त्यारोहो वा तस्य ग्राम इभ्यग्रामः तस्मिन् प्रद्राणकः अन्नालाभात् । द्रा कुत्सायां गतौ । कुत्सितां गतिं गतः अन्त्यावस्थां प्राप्त इत्यर्थः । उवास उषितवान् कस्यचिद्गृहमाश्रित्य । सोऽन्नार्थमटन्निभ्यं कुल्माषान् कुत्सितान्माषान् खादन्तं भक्षयन्तं यदृच्छयोपलभ्य बिभिक्षे याचितवान् ।'' इति शाङ्करभाष्यम् ॥ २. 'अग्निहोत्रवैश्वदेवादि अप्रायश्चित्तरूपं नित्यं' इति पाठान्तरम् ॥

शूद्रस्यान्नं भोज्यम् । यद्यसौ धर्मार्थमुपनतः आश्रितो भवति । धर्मग्रहणादर्थार्थमुपनतस्याभोज्यम् । आपत्कल्पश्चायम् ॥ १४ ॥ तत्र गुणविधिः—

***सुवर्णं दत्वा पशुं वा भुञ्जीत नात्यन्तमन्ववस्येद्वृत्तिं प्राप्य विरमेत् ॥ १५ ॥** गतम् ॥ १५ ॥ ***सङ्घान्नमभोज्यम् ॥ १६ ॥** सङ्घो गणः तस्य यत् स्वमन्नं न त्वेकस्य । तदभोज्यं यद्यपि ते सर्वे दद्युः ॥ १६ ॥ ***परिक्रुष्टं च ॥ १७ ॥** भोक्तुकाम आगच्छ इत्येवं परिक्रुश्य सर्वत आहूय यद्दीयते तत्परिक्रुष्टं तदभोज्यम् ॥ १७ ॥ ***सर्वेषां च शिल्पाजीवानाम् ॥ १८ ॥** चित्रनिर्माणादिकं शिल्पं यत् तदादिकं ये आजीवन्ति उपजीवन्ति तेन ये जीवन्ति तेषां सर्वेषामपि ब्राह्मणादीनामन्नमभोज्यम् ॥ १८ ॥ ***ये च शस्त्रमाजीवन्ति ॥ १९ ॥** ये च शस्त्रेण जीवन्ति तेषामप्यन्नमभोज्यम् । क्षत्रियवर्जम् ॥ १९ ॥ ***ये चाधिम् ॥ २० ॥** आजीवन्तीत्यपेक्षते । स्वगृहे परान्वासयित्वा तेभ्यो भृतिग्रहणमाधिः । यः स्तोम इति प्रसिद्धः । 'परभूमौ कुटिं कृत्वा स्तोमं दत्वा वसेत्तु यः ।' इति । न चाधिं ये आजीवन्ति तेषामप्यन्नमभोज्यम् । ये तु प्रसिद्धमाधिमाजीवन्ति तेषां वार्धुषिकत्वादेव सिद्धो निषेधः ॥ २० ॥ ***भिषक् ॥ २१ ॥** अभोज्यान्न इति प्रकरणाद्गम्यते । भिषक् भैषज्यवृत्तिः । धर्मार्थं तु ये सर्पदंष्ट्रादीश्चिकित्सन्ति ते भोज्यान्नाः ॥ २१ ॥ ***वार्धुषिकः ॥ २२ ॥** वृद्ध्याजीवी । सोऽप्यभोज्यान्नः ॥ २२ ॥ ***दीक्षितोऽक्रीतराजकः ॥ २३ ॥** दीक्षितो दीक्षणीयेष्ट्या संस्कृतः सोऽपि यावत् क्रीतराजको न भवति सोमक्रयं न करोति तावदभोज्यान्नः ॥ २३ ॥ *** अग्नीषोमीयसंस्थायामेव ॥ २४ ॥** भोक्तव्यमिति वक्ष्यमाणमपेक्षते । अग्नीषोमीये पशौ संस्थिते समाप्त एव भोक्तव्यम् । न प्रागिति ॥ २४ ॥ पक्षान्तरमाह—*** हुतायां वपायां दीक्षितस्य भोक्तव्यम् ॥ २५ ॥** अग्नीषोमीयस्य वपायां हुतायां वा दीक्षितस्य भोक्तव्यम् । तथा च बह्वृचब्राह्मणम्—'अशितव्यं वपायां हुतायाम्' इति ॥ २५ ॥ पक्षान्तरमाह— *** यज्ञार्थे वा निर्दिष्टे शेषाद्भुञ्जीरन्निति हि ब्राह्मणम् ॥ २६ ॥** इदं यज्ञार्थमिति व्यादेशे कृते शेषाद्भुञ्जीरन्निति ब्राह्मणं भवति । ब्राह्मणग्रहणं प्रीत्युपलब्धितः प्रवृत्ते-

रपस्मृतिता मा भूदिति प्रत्यक्षमेवात्र ब्राह्मणं भवति ॥२६॥ ***क्लीबः** ॥२७॥ षण्डकः । सोऽप्यभोज्यान्नः ॥२७॥ ***राज्ञां प्रेषकरः** ॥ २८॥ राज्ञामिति बहुवचनात् ग्रामादेर्यः प्रेषकरः तस्यापि प्रतिषेधः ॥ २८ ॥ ***अहविर्याजी** ॥ २९ ॥ यश्चाहविषा नररुधिरादिना यजेताभिचारादौ 'यथायमभिचरेत्तस्य लोहितमवदानं कृत्वे'ति सोऽप्यभोज्यान्नः ॥ २९ ॥ ***चारी** ॥३०॥ चारो गूढचारः स्पशः । सोऽप्यभोज्यान्नः ॥ ३० ॥ ***अविधिना च प्रव्रजितः** ॥३१॥ यश्चाविधिना प्रव्रजितः शाक्यादिस्सोऽप्यभोज्यान्नः ॥३१॥ ***यश्चाग्नीनपास्यति** ॥३२॥ योऽनापद्यग्नींस्त्यक्त्वा प्रायश्चित्तं न करोति सोऽप्यभोज्यान्न. । अपिच अविधिनेत्येव । यश्चाविधिना उत्सर्गेष्ट्या विनाग्नीनपास्यति सोऽप्यभोज्यान्नः ॥ ३२॥***यश्च सर्वान्वर्जयते सर्वान्नी च श्रोत्रियो निराकृतिर्वृषलीपतिः** ॥ ३३ ॥ यश्च सर्वान्वर्जयते भोजने न क्वचिद्भुङ्क्ते न कञ्चिद्भोजयति सः सर्ववर्जी । यश्च सर्वान्नी सर्वेषामन्नं भुङ्क्ते तावप्युभावभोज्यान्नौ । श्रोत्रिय श्रोत्रियोऽश्रोत्रिय इत्युभयोश्शेषः । श्रोत्रियोऽपि सन्नभोज्यान्न इति । निराकृतिः निःस्वाध्याय । निर्व्रत इत्यन्ये । सोऽप्यभोज्यान्नः । वृषलीपतिः क्रमविवाहे यस्य वृषली जीवति इतरा मृताः स वृषलीपतिः । स श्रोत्रियोऽप्यभोज्यान्न इति ॥ ३३ ॥

॥ **इति अष्टादशी खण्डिका** ॥ **प्र० १ प० ६ ख० १८** ॥

---

***मत्त उन्मत्तो बद्धोऽणिकः प्रत्युपविष्टो यश्च प्रत्युपवेशयते तावन्तं कालम्** ॥१॥ मदकरद्रव्यसेवया अप्रकृतिं गतो मत्त. । उन्मत्तो भ्रान्त. । बद्धो निगलित. । अणिक पुत्रात् श्रुतग्राही । पुत्राचार्य इति शास्त्रेषु निन्दित । प्रत्युपविष्ट ऋणादिना कारणेनाधमर्णादिकं निरुध्य तत्पार्श्वे उपविष्टः । इतरस्तस्य परिहारं कुर्वंस्तेन सहासीन प्रत्युपवेशयिता । एते मत्तादयस्तावन्तं कालमभोज्यान्नाः । यावन्मदाद्यनुवृत्तिः । अपर आह—अणिकः ऋणस्य दाता प्रत्युपवेष्टुरिदं विशेषणम् इति ॥ १ ॥***क आश्यान्नः** ॥२॥ यद्येते अभोज्यान्नाः कस्तर्हि आश्यान्नः । कस्य तर्ह्यन्न

मशनीयमिति । यद्यप्येते अभोज्यान्ना इत्युक्ते परिशिष्टा भोज्यान्ना इति गम्यते। तथाप्यनेकमतोपन्यासार्थं प्रश्नपूर्वक आरम्भः ॥२॥ ***य ईप्सेदिति कण्वः ॥ ३ ॥** य एव प्रार्थयते स एवाश्यान्न इति कण्व ऋषिर्मन्यते ॥ ॥३॥ ***पुण्य इति कौत्सः ॥४॥** सर्ववर्णानां स्वधर्मे वर्तमानानामित्युक्तत्वात् भोज्यान्नास्सर्वे पुण्या एव । इह पुनः पुण्यग्रहणमतिशयार्थम् । तपोहोमजप्यैः स्वधर्मेण च युक्तः पुण्यः । स स्वयं प्रार्थ्यमानोऽपि भोज्यान्न इति कौत्सस्य पक्षः ॥ ४ ॥ *** यः कश्चिद्दद्यादिति वार्ष्यायणिः ॥५॥** यः कश्चित्पुण्योऽपुण्यो वा सततं दानशीलः स भोज्यान्न इति वार्ष्यायणिराह । तथा च मनुः—'श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत् ।' इति ॥५॥ अत्रोपपत्तिः—***यदि हि रजः स्थावरं पुरुषे भोक्तव्यमथ चेच्चलं दानेन निर्दोषो भवति ॥६॥** रजः पापम् । तद्यदि पुरुषे कर्तरि स्थावरं स्थिरं नोपभोगमन्तरेण क्षीयते । तदा ततः प्रतिग्रहे भोक्तरि सङ्क्रमाभावात् भोक्तव्यम् । अथ चेच्चलमुपभोगमन्तरेण च क्षीयते तदा सततदानशीले न मुहूर्तमपि पापमवतिष्ठत इति कुतो भोक्तुर्दोष इति ॥ ६ ॥ ***शुद्धा भिक्षा भोक्तव्यैककुणिकौ काण्वकुत्सौ तथा पुष्करसादिः ॥७॥** धार्मिकेणोद्यता आहृता भिक्षा शुद्धा भिक्षा । सा भोज्येत्येकादीनां पञ्चानां पक्षः । पुष्करसादिराचार्यः पौष्करसादिः । आदिवृद्ध्यभावश्छान्दसः ॥ ७ ॥ ***सर्वतोपेतं वार्ष्यायणीयम् ॥८॥** सर्वत उपेतं सर्वतोपेतम् । छान्दसो गुणः । उपेतमयाचितोपपन्नम् । तत्सर्वतोऽपि भोज्यमिति वार्ष्यायणीयं मतम् ॥ ८ ॥ इदानीं स्वमतमाह— ***पुण्यस्येप्सतो भोक्तव्यम् ॥९॥** कण्वकुत्सयोः पक्षौ समुच्चितावाचार्यस्य पक्षेण ॥ ९ ॥ ***पुण्यस्याप्यनीप्सतो न भोक्तव्यम् ॥ १०॥** यः प्रार्थितोऽपि नित्यं सकृद्दुक्त्वा कथंचिद्दापादितेप्सुः सोल्पेप्सुस्सन्ननीप्सन्नित्युच्यते तस्य पुण्यस्याप्यभोज्यमिति । अपर आह— अनीप्सत इति कर्तरि षष्ठी । पुण्यस्याप्यन्नं न भोज्यम् । यदि भिक्षमाणैः पूर्ववैरादिना स्वयमीप्सन्न भवतीति ॥ १० ॥ ***यतः कुतश्चाभ्युद्यतं**

**भोक्तव्यम् ॥ ११॥** 'सर्वतोपेत' मित्युक्तमेव पुनरुच्यते विशेषविवक्षया ॥ ११ ॥ तमाह—* **नाननियोगपूर्वमिति हारीतः ॥१२॥** अद्य तुभ्यमिदमाहरिष्यामि तदत्रभवता ग्राह्यमिति निवेदन नियोगः । तदभावः अनियोगः । पुनर्नञ्समासः । द्वौ नञौ प्रकृतमर्थं गमयतः । अननियोगो नियोगः तत्पूर्वं तदभ्युपेतं न भोज्यमिति ॥१२॥ * **अथ पुराणे श्लोकावुदाहरन्ति—उद्यतामाहृतां भिक्षां पुरस्तादप्रवेदिताम् । भोज्यां मेने प्रजापतिरपि दुष्कृतकारिणः ॥ न तस्य पितरोऽश्नन्ति दश वर्षाणि पञ्च च । न च हव्यं वहत्यग्निर्यस्तामभ्यधिमन्यते ॥ इति ॥ १३ ॥** अथ अपि च । पुराणे 'सर्गश्च प्रतिसर्गश्च वंशमन्वन्तराणि च । वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥' इति । एवंलक्षणे भविष्यदादौ । उद्यता हस्ताभ्यामुद्यम्य धारिताम् । आहृता स्वयमानिताम् । पूर्वमनिवेदितां भिक्षाम् । दुष्कृतकारिणोऽपि सकाशात् भोज्यं प्रजापतिर्मनुर्मेने । 'प्रजापतिर्यम्मिन्नि'ति मानवे दर्शनात् । यस्तु तामभ्यधिमन्यते प्रत्याचष्टे तस्य पितरः कव्यं नाश्नन्ति । कियन्तं कालम् । दशवर्षाणि पञ्च च । अग्निश्च हव्यं न वहति । तावन्तमेव कालमिति प्रत्याख्यातुर्निन्दार्थवादः ॥१३ ॥ * **चिकित्सकस्य मृगयोश्शल्यकृन्तस्य पाशिनः । कुलटायाष्षण्डकस्य च तेषामन्नमनाद्यम् ।' १४ ॥** चिकित्सको भिषक् । मृगयुर्मृगघाती लुब्धकः । शल्यकृन्तः शस्त्रेण ग्रन्थ्यादीनां छेत्ता अम्बष्ठः। पाशी पाशवान् पाशजालेन मृगादीनां ग्राहकः । कुलात्कुलमटतीति कुलटा व्यभिचारिणी । षण्डकः तृतीयाप्रकृतिः । तेषां चिकित्सकादीनामन्नमनाद्यम्। चिकित्सकषण्डकयोः पुनर्वचनमुद्यतस्यापि प्रतिषेधार्थम् । पूर्वत्र तर्हि ग्रहणं शक्यमकर्तुम् । एवं तर्हि सूत्रकारस्य स प्रतिषेधः । अयं तु पुराणश्लोक इत्यपौनरुक्त्यम् ॥१४॥ * **अथाप्युदाहरन्ति—अन्नादे भ्रूणहा मार्ष्टि अनेना अभिशंसति । स्तेनः प्रमुक्तो राजनि याचन्ननृतसङ्करे ॥ इति ॥१५॥** षडङ्गस्य वेदस्याध्येता भ्रूणः । तं यो हतवान् स भ्रूणहा । सोऽन्नादे मार्ष्टि लिम्पति। किम्। प्रकरणादेन इति गम्यते । भ्रूणघ्नो योऽन्नमत्ति तस्मिंस्तदेनः

संक्रामति । तस्मात्तस्योद्यतमप्यभोज्यमिति प्रकरणसङ्गतः पादः । इतरत पुराणश्लोके पठ्यमानेऽपि पठितम् । अनेनसं योऽभिशंसति मिथ्यैव ब्रूते इदं त्वया कृतमिति । स तस्मिन्नभिशंसति तदेनो मार्ष्टि । मनुस्तु—'पतितं पतितेत्युक्त्वा चोरं चोरेति वा पुनः । वचनात्तुल्यदोषस्स्यान्मिथ्या द्विर्दोषभाग्भवेत् ॥' इति द्वैगुण्यमाह । तदभ्यासे द्रष्टव्यम् । 'स्तेनः प्रकीर्णकेश' इति वक्ष्यति । स एव तृतीयस्य पादस्यार्थः । कर्तृभेदादपौनरुक्त्यम् । सङ्करः प्रतिज्ञा प्रतिश्रवः । सत्यसङ्कर इति यथा । यः प्रतिश्रुत्य न ददाति सोऽनृतसङ्कर इति । ककारस्तु छान्दसः । तस्मिन् याचकः स्वयमेनो मार्ष्टि । तस्मात्प्रतिश्रुत देयमिति ॥ १९ ॥

॥ इति एकोनविंशतितमी खण्डिका ॥ प्र०१ प०६ ख०१९ ॥

---

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां प्रथमप्रश्ने षष्ठः पटलः ॥ ६ ॥

---

***नेमं लौकिकमर्थं पुरस्कृत्य धर्मांश्चरेत्** ॥ १ ॥ इम लौकिकं लोके विदितं ख्यातिलाभपूजात्मकम् । अर्थं प्रयोजनम् । पुरस्कृत्य अभिसन्धाय । धर्मान्न चरेत् ॥ १ ॥ किं कारणम्—***निष्फला ह्यभ्युदये भवन्ति** ॥ २ ॥ हि यस्मादेवं क्रियमाणा धर्मा अभ्युदये फलकाले निष्फला भवन्ति । लोकभक्त्या स ह्यसौ धर्मं चरति । न कर्तव्यमिति श्रद्धया । न च श्रद्धया विना धर्मः फलं साधयति । 'यो वै श्रद्धामनारभ्ये'ति श्रुतेः ॥२॥ किमत्रेदानीं दृष्टं फल त्याज्यमेव नेत्याह—***तद्यथाम्रे फलार्थे निमित्ते छाया गन्ध इत्यनूत्पद्येते । एवं धर्मंमपि चर्यमाणमर्था अनूत्पद्यन्ते** ॥ ३ ॥ तदिति वाक्योपन्यासे । फलार्थं ह्याम्रवृक्षो निर्मीयते आरोप्यते । तस्मिन् फलार्थे निमित्ते छाया गन्धश्चानूत्पद्येते । एव धर्ममपि चर्यमाणमर्थाः ख्यात्यादयोऽनूत्पद्यन्ते अनुनिष्पद्यन्ते । तथैव स्वीकार्याः तथा चाह—'यथेक्षुहेतोः सलिलं प्रसचयंस्तृणानि वल्लीरपि च प्रसिञ्चति । तथा नरो धर्मप-

थेन वर्तयन् यशश्च कामांश्च वसूनि चाश्नुते ॥' इति ॥३॥ *नो चेदनूत्पद्यन्ते न धर्महानिर्भवति ॥४॥ यद्यपि दैवादर्था नानूत्पद्यन्ते तथापि धर्मस्तावद्भवति । स च स्वतन्त्रः पुरुषार्थः । किमन्यैरर्थैरिति ॥४॥ *अनसूयुर्दुष्प्रलम्भः स्यात्कुहकशठनास्तिकबालवादेषु ॥५॥ कुहकः प्रकाशे शुचिरेकान्ते यथेष्टचारी । शठः वक्रचित्तः । नास्तिकः प्रेत्याभाववादी । बालः श्रुतिरहितः । एतेषां वादेषु अनसूयुः स्यात् । असूयया द्वेषो लक्ष्यते । द्वेष्टा न स्यात् । तान्विपर्यीकृत्य द्वेषमपि न कुर्यात् । तथा दुष्प्रलम्भश्च स्यात् । प्रलम्भनं विसंवादनं मिथ्याफलाख्यानम् । ग्रथिनञ्चयोः प्रलम्भन' इति दर्शनात् । दुष्प्रलम्भो विसंवादयितुं मिथ्याफलाख्यानेन प्रवर्तयितुमशक्यः । कुहकादिवादेषु वञ्चितो न स्यात् । तद्वशो न स्यादित्यर्थः ॥५॥ वञ्चनस्य सम्भवमाह—*न धर्माधर्मौ चरत आवं स्व इति न देवगन्धर्वा न पितर इत्याचक्षतेऽयं धर्मोऽयमधर्म इति ॥६॥ आवमिति छान्दसं रूपम् । भाषायां तु, 'प्रथमायाश्च द्विवचने भाषाया'मित्यात्व प्राप्नोति । यदि हि धर्माधर्मौ विग्रहवन्तौ गोव्याघ्रवच्चरेतामाव स्व इति ब्रुवाणौ यदि वा देवादयः प्रकृष्टज्ञाना ब्रूयुरिमौ धर्माधर्माविति ततः कुहकादिवादेषु न स्याद्वञ्चना । तदभावात्तु वञ्चनासम्भव इति । इदं चात्र द्रष्टव्यम् । प्रत्यक्षादेरगोचरौ धर्माधर्मौ । किंतु नित्यनिर्दोषवेदगम्यौ । तदभावे तन्मूलशास्त्रगम्याविति ॥६॥ यत्र तु प्रायश्चित्तादौ विषयव्यवस्था दुष्करा तत्र निर्णयमाह--*यं त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मो यं गर्हन्ते सोऽधर्मः ॥७॥ आर्याः शिष्टास्त्रैवर्णिकाः । बहुवचनाच्चत्वारस्त्रयो वा । यथाह याज्ञवल्क्यः—'चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा । सा ब्रूते य स धर्मस्स्यादेको वाध्यात्मवित्तमः ॥' इति ॥ ७ ॥ इदानीं श्रुतिस्मृत्योः प्रत्यक्षयोरदर्शने शिष्टाचारादप्यवगम्य धर्मः कार्य इत्याह— *सर्वजनपदेष्वेकान्तसमाहितमार्याणां वृत्तं सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामदाम्भिकानां वृत्तसादृश्यं भजेत ॥८॥ सम्यग्विनीताः 'आचार्याधीनः स्या' दित्यादिना विनयेन सम्प-

न्नाः । वृद्धाः परिणतवयसः । यौवने विषयवश्यतापि स्यादितीदमुक्तम् । आत्मवन्तो जितेन्द्रियाः । अलोलुपा अकृपणाः । अदाम्भिका अधर्मध्वजाः । एवंभूतानामार्याणां सर्वजनपदेषु यदेकान्तेनाव्यभिचारेण समाहितमनुमतं वृत्तमनुष्ठानम् । न मातुलसुतापरिणयनवत्कतिपयविषयम् । तद्वृत्तसादृश्यं भजेत । तदनुरूपं चेष्टेत । न तेषामनुष्ठानं च निर्मूलम् । सम्भवति च वैदिकानामुत्सन्नपाठब्राह्मणानुभव इति ॥ ८ ॥ ***एवमुभौ लोकावभिजयति** ॥ ९ ॥ एवं श्रुतिस्मृतिमूलसदाचारमनुष्ठानं कुर्वन् उभौ लोकावभिजयति इमं चामुं च ॥ ९ ॥ ***अविहिता ब्राह्मणस्य वणिज्या** ॥ १० ॥ क्रयविक्रयव्यवहारो वणिज्या । सा स्वयं कृता ब्राह्मणस्य वृत्तिर्न विहिता । प्राप्तानुवादोऽयम् । नापदि विधानार्थः ॥ १० ॥ ***आपदि व्यवहरेत पण्यानामपण्यानि व्युदस्यन्** ॥ ११ ॥ ब्राह्मणवृत्तेरभाव आपत् । तस्यां सत्याम् । पण्यानाम् । 'व्यवहृतिपणोः समर्थयो'रिति कर्मणि षष्ठी । व्यवहरेत । क्रयश्च विक्रयश्च व्यवहारः । पण्यानि क्रीणीयात् विक्रीणीत चेत्यर्थः । अपण्यानि वक्ष्यमाणानि व्युदस्यन् वर्जयन् । कृत्स्नाया वैश्यवृत्तेरुपलक्षणमिदम् । क्षत्रियवृत्तिश्च दण्डापूपिकया सिद्धा । तथा च गौतमः—'तदलाभे क्षत्रियवृत्तिस्तदलाभे वैश्यवृत्ति'रिति ॥ ११ ॥ अपण्यान्याह—***मनुष्यान्रसान्रागान्गन्धानन्नं चर्म गवां वशां श्लेष्मोदके तोक्मकिण्वे पिप्पलीमरीचे धान्यं मांसमायुधं सुकृताशां च** ॥ १२ ॥ मनुष्या दारदासादयः । रसा गुडलवणादयः । क्षीरादयो वा । रागाः कुसुम्भादयः । रज्यन्तेऽनेनेति रज्यन्त इति वा रागा वस्त्रादयः । गन्धाश्चन्दनादयः । गवां मध्ये वशा वन्ध्या गौः । श्लेष्म जतुवज्रादिः । येन विश्लिष्टं चर्मादि सन्धीयते । यथा 'श्लेष्मणा चर्मण्यं वान्यद्वा विश्लिष्टं संश्लेषये'दिति बह्वृचब्राह्मणे दर्शनात् । उदकं कुम्भजलम् । तोक्मानि ईषदङ्कुरितानि व्रीह्यादीनि । किण्वं सुराप्रकृतिद्रव्यम् । सुकृतं पुण्यं तस्य फलं सुकृताशा । शिष्टानि प्रसिद्धानि । एतान्यापणीयानि वर्जयित्वा अन्येषां पण्यानां व्यवहरेत । मनुष्यादीन्वर्जयित्वेत्येव सिद्धे 'अपण्यानी'ति वचनमन्येषामप्यपण्यानां व्युदासार्थम् । तत्र मनुः—'सर्वान् रसा-

नपोहेत कृतान्नं च तिलैस्सह । अश्मनो लवणं चैव पशवो ये च मानुषाः ॥ सर्वं च तान्तवं रक्तं शाणक्षौमाविकानि च । अपि चेत्स्युररिक्तानि फलमूले तथौषधीः ॥ अपः शस्त्रं विषं मांसं सोमं गन्धांश्च सर्वशः । क्षीरं क्षौद्रं दधि घृतं तैलं मधु गुडं कुशान् ॥ आरण्यांश्च पशून् सर्वान् दंष्ट्रिणश्च वयांसि च मद्यं नीलीं च लाक्षां च सर्वांश्चैकशफान् पशून् ॥' इति ॥ १२ ॥ ***तिलतण्डुलांस्त्वेव धान्यस्य विशेषेण न विक्रीणीयात् ॥१३॥** धान्यानां मध्ये तिलतण्डुलादेर्विशेषतोऽतिशयेन न विक्रीणीयात् न विक्रीणीत अन्येषां विकल्पः । स्वयमुत्पादितेषु नाय प्रतिषेधः । मानवे हि श्रुतम्—'काममुत्पाद्य कृष्यां तु स्वयमेव कृषीवलः । विक्रीणीत तिलाञ्छुद्धान् धर्मार्थमचिरस्थितान् ॥' इति ॥ १३ ॥ *** अविहितश्चैतेषां मिथो विनिमयः ॥१४॥** विनिमयः परिवर्तनम् । येषां विक्रयः प्रतिषिद्धः तेषां परस्परेण विनिमयोऽप्यविहितः प्रतिषिद्धः न कर्तव्य इत्यर्थः ॥ १४ ॥ तेष्वेव केषुचिद्विनिमयोऽनुज्ञायते—***अन्नेन चान्नस्य मनुष्याणां च मनुष्यै रसानां च रसैर्गन्धानां च गन्धैर्विद्यया च विद्यानाम् ॥ १५ ॥** अन्नादीनां विद्यान्तानां विनिमयो भवत्येवेत्यर्थः । तथा च वसिष्ठः—'रसा रसैस्समतो हीनतो वा तिलतण्डुलपक्वान्नविद्यामनुष्याश्च विहिताः परिवर्तिने' इति । मानवे तु विशेषः—'रसा रसैर्निमातव्या न त्वेव लवणं रसैः । कृतान्नं च कृतान्नेन तिला धान्येन तत्समाः ॥' इति । गौतमीये तु—'नियमस्तु रसानां रसैः पशूनां च न लवणकृतान्नयोस्तिलानां च समानेन तु पक्वस्यासम्प्रतिपत्त्यर्थे' इति । तस्मादत्र प्रतिषेधानुवृत्तिर्न शङ्कनीया । पूर्वत्र चोक्तं 'ब्रह्माणि मिथोविनियोगे न गतिर्विद्यते' इति । नियमाभ्यनुज्ञानादेव विद्यादीनां विक्रयोऽपि प्रतिषिद्धो वेदितव्यः ॥ १५ ॥ ***अक्रीतपण्यैर्व्यवहरेत ॥ १६ ॥** अक्रीतानि स्वयमुत्पादितानि अरण्यादाहृतानि वा यानि पण्यानि तैर्व्यवहरेत ॥ १६ ॥

**॥ इति विंशतितमी खण्डिका ॥ प्र० १ प० ७ ख० २० ॥**

---

* **मुञ्जबल्बजैर्मूलफलैः** ॥ १ ॥ मुञ्जादिभिः । मुञ्जबल्बजास्तृणविशेषाः ॥ १ ॥ ***तृणकाष्ठैरविकृतैः** ॥ २ ॥ तृणानां विकारो रज्ज्वादिभावः काष्ठानां विकारः स्थूणादिभावः । तृणत्वादेव सिद्धे मुञ्जबल्बजग्रहणं विकारार्थम् ॥ २ ॥***नात्यन्तमन्ववस्येत्** ॥ ३ ॥ प्रतिषिद्धानामपि विक्रयविनियमाभ्यां जीवेत् । न पुनरत्यन्तमन्ववस्येत् । तथा च गौतमः—'सर्व धातुवृत्तिरशक्तावशूद्रेणेति तदप्येके प्राणसंशये' इति । मनुरपि—'जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । आकाशमिव पङ्केन स दोषेण न लिप्यते '॥ इति ॥ ३ ॥ * **वृत्तिं प्राप्य विरमेत्** ॥ ४ ॥ गतम् ॥ ४ ॥ * **न पतितैस्संव्यवहारो विद्यते** ॥ ५ ॥ पतिताः स्तेनादयो वक्ष्यमाणास्तैः सह न कश्चिदपि व्यवहारः कर्तव्य । तत्र मनुः--'संवत्सरेण पतति पतितेन सहाचरन् । याजनाध्यापनाद्यौनान्न तु यानासनाशनात् ॥ ' इति । यानादिभिस्संवत्सरेण पतति । याजनादिभिस्तु सद्य एव ॥ ५ ॥ * **तथापपात्रैः** ॥ ६ ॥ अपपात्राश्चण्डालादयः । तैश्च संव्यवहारो न कर्तव्य ॥ ६ ॥ * **अथ पतनीयानि** ॥ ७ ॥ द्विजातिकर्मभ्यो हानिः पतन तस्य निमित्तानि कर्माणि वक्ष्यन्ते ॥ ७ ॥ ***स्तेयमाभिशस्त्यं पुरुषवधो ब्रह्मोज्झं गर्भशातनं मातुःपितुरिति योनिसम्बन्धे सहापत्ये स्त्रीगमनं सुरापानमसंयोगसंयोगः** ॥८॥ स्तेयं सुवर्णचौर्यम् । आभिशस्त्य ब्रह्महत्या । 'ब्राह्मणमात्रं च हत्वाभिशस्त' इति वक्ष्यमाणत्वात् । पुरुषवधो मनुष्यजातिवधः । तेन स्त्रीवधोऽपि गृह्यते । ब्रह्मोज्झ उज्झ उत्सर्गे । भावे घञ् । छान्दसो लिङ्गव्यत्ययः । ब्रह्म वेद तस्याधीतस्य नाशन ब्रह्मोज्झम् । औषधादिप्रयोगेण गर्भस्य वधो गर्भशातनम् । मातृयोनिसम्बन्धे मातृष्वस्रादौ मातुलादौ । पितृयोनिसम्बन्धे पितृष्वस्रादौ सहापत्ये अपत्येन सहिते स्त्रीगमन मातृष्वसृगमन तत्सुतागमन मातुलसुतागमन चेत्यर्थः। 'गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा।' तस्याः पान सुरापानम् । असंयोगाः संयोगानर्हाः प्रतिलोमादयः । तैः संयोग एकगृहवासादिः असंयोगसंयोगः । एतानि पतनीयानि ।

॥८॥ ***गुर्वीसखिं गुरुसखिं च गत्वान्यांश्च परतल्पान्** ॥९॥ सखीशब्दस्य छान्दसो ह्रस्वः । गुर्वीसखी मात्रादीनां सखी । गुरुसखी पित्रादीनां सखी । तां गत्वा । किं ? पततीत्युत्तरत्र श्रुतमपेक्ष्यते । अन्यांश्च परतल्पान् गत्वा पतति । तल्पशब्देन शयनवाचिना दारा लक्ष्यन्ते ॥९॥ ***नागुरुतल्पे पततीत्येके** ॥१०॥ गुरुदारव्यतिरेकेण परतल्पगमने पातित्यं नास्तीत्येके मन्यन्ते । यद्यपि सामान्येन पतनीयानीत्युक्तम् । प्रायश्चित्ते तु गुरुलघुभावो द्रष्टव्यः ॥१०॥ ***अधर्माणां तु सततमाचारः** ॥११॥ तुश्चार्थे । उक्तव्यतिरिक्तानामप्यधर्माणां सततमाचारः पतनहेतुः ॥११॥ ***अथाशुचिकराणि** ॥१२॥ अशुचिं पुरुषं कुर्वन्तीत्यशुचिकराणि तानि वक्ष्यन्ते ॥१२॥ ***शूद्रगमनमार्यस्त्रीणाम्** ॥१३॥ त्रैवर्णिकस्त्रीणां शूद्रगमनमशुचिकरम् ॥१३॥ **प्रतिषिद्धानां मांसभक्षणम्** ॥१४॥ येषां मांसं प्रतिषिद्धं तेषां मांसस्य भक्षणमशुचिकरम् ॥१४॥ तत्रोदाहरणम्—
***शुनो मनुष्यस्य च कुक्कुटसूकराणां ग्राम्याणां क्रव्यादसाम्** ॥१५॥ 'ग्राम्याणा'मिति वचनादारण्यानामप्रतिषेधः । अदनमदः । भावेऽसुन्प्रत्ययः। क्रव्यविषयमदनं येषां ते क्रव्यादसः केवलं मांसवृत्तयो गृध्रादयः ॥१५॥ ***मनुष्याणां मूत्रपुरीषप्राशनम्** ॥१६॥ मूत्रपुरीषग्रहणात्तादृशस्य रेतसोऽप्युपलक्षणम् ॥१६॥ ***शूद्रोच्छिष्टमपपात्रगमनं चार्याणाम्** ॥१७॥ शूद्रोच्छिष्टं भुक्तमार्याणां त्रैवर्णिकानामशुचिकरम् । अपपात्राः प्रतिलोमस्त्रियः तासां च गमनम् ॥१७॥ ***एतान्यपि पतनीयानीत्येके** ॥१८॥ यान्येतान्यशुचिकराण्यनुक्रान्तानि एतान्यपि पतनीयान्येवेत्येके मन्यन्ते ॥१८॥ ***अतोऽन्यानि दोषवन्त्यशुचिकराणि भवन्ति** ॥१९॥ उक्तव्यतिरिक्तानि दोषवन्ति कर्माणि दुष्प्रतिग्रहहिंसादीनि तान्यशुचिकराणि भवन्ति ॥१९॥ ***दोषं बुध्वा न पूर्वः परेभ्यः पतितस्य समाख्याने स्याद्वर्जयेत्त्वेनं धर्मेषु** ॥२०॥ पतितस्य दोषं परैरविदितं बुध्वा परस्य समाख्याने पूर्वो न स्यात् । परैरविदितमपि स्वयं विद्वानपि न परेभ्यः पूर्वमाचक्षीत । किं तु स्वयं धर्मकृत्येष्वेनं वर्जयेत् । यथा परे न जानन्ति । अ

न्यथा दोषवान् स्यात् ॥ २० ॥

॥ इति एकविंशतितमी खण्डिका ॥ प्र०१ प०७ ख०२१ ॥

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां प्रथमप्रश्ने सप्तमः पटलः ॥ ७ ॥

* ॐ **अध्यात्मिकान्योगाननुतिष्ठेन्न्यायसंहितानानैश्चारिकान्** ॥१॥ उक्तानि पतनीयान्यशुचिकराणि च कर्माणि । तेषां प्रायश्चित्तानि वक्ष्यन्नादित आत्मज्ञानं तदुपयोगिनश्च योगानधिकुरुते । तस्यापि सर्वपापहरत्वेन मुख्यप्रायश्चित्तत्वात् । श्रूयते हि—'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥' इति । 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्त' इति च । याज्ञवल्क्योऽप्याह—'सत्याचारदमाहिंसादानस्वाध्यायकर्मणाम् । अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥' इति । अध्यात्मनि भवानध्यात्मिकान् । छान्दसो वृद्ध्यभावः । आत्मलम्भयितॄन् । योगान् चित्तसमाधानहेतून् वक्ष्यमाणानक्रोधादीनुपायान् । अनुतिष्ठेत् सेवेत न्यायसंहितान् उपपद्यन्ते हि ते न्यायतः क्रोधादीनां दोषाणां निर्घाते । अनैश्चारिकान् निश्चारश्चित्तस्य बहिर्विक्षेपः तस्मै ये प्रभवन्ति क्रोधादयो वक्ष्यमाणाः ते नैश्चारिकाः तत्प्रतिपक्षभूतान् । अक्रोधादिषु सत्सु चित्तमनिश्चरणशीलमात्मावलम्बं निश्चलं तिष्ठति तस्मात्ताननुतिष्ठेत् । आत्मानं लब्धुमक्रोधादिलक्षणं चित्तसमाधानं कुर्यादिति ॥ १ ॥ किंपुनरात्मा प्रयत्नेन लब्धव्यः । ओमित्याह— * **आत्मलाभान्न परं विद्यते** ॥ २ ॥ आत्मलाभात्परमुत्कृष्टं लाभान्तरं नास्ति । तस्मात्तस्य लाभाय यत्न आस्थेय इति । कः पुनरसावात्मा ॥ नन्वसौ नित्यलब्धः । न हि स्वयमेव स्वस्यालब्धो भवति । सत्यम् । प्रकृतिमेलनात्तद्धर्मतामुपगतो विनष्टस्वरूप इव भवति । प्रकृत्या हि नित्यसम्बद्धः पुरुषः । तथा च यश्च तत्सम्बद्धः यथा परस्परं विवेको न ज्ञायते । अन्योन्यधर्माश्चान्योऽन्यत्राध्यास्य-

न्ते । यथा क्षीरोदके सम्पृक्ते न ज्ञायते विवेकः इयत् क्षीरमियदुदकमित्य-मुष्मिन्नवकाशे उदकमिति । यथा वा अग्न्ययोगोलकयोरभिसम्बद्धयोर्ये अग्निधर्मा उष्णत्वभास्वरत्वादयः ते अयोगोलके अध्यस्यन्ते । ये वा अयो-गोलकधर्माः काठिन्यदैर्घ्यादयः ते अग्नावध्यस्यन्ते । एवं हि तत्र प्रति-पत्तिः । एकं वस्तु उष्णं दीर्घं भास्वरं कठिनमिति तद्वदिहापि पुरुषधर्मा-श्चैतन्यादयः प्रकृतावध्यस्यन्ते प्रकृतिधर्माश्च सुखदुःखमोहपरिणामादयः पुरुषे । ततश्च एकं वस्तु चेतनं सुखादिकलिलं परिणामीति व्यवहारः । व-स्तुतस्तु तस्मिन् सङ्घाते अचेतनांशः परिणामी । चेतनांशस्तु तमनुधावति । येनयेन रूपेण परिणमते तेनतेनाभेदाध्यासमापद्यते । यथा क्षीरावस्थागतं घृ-तं क्षीरे दध्यात्मना परिणमते तामप्यवस्थामनुप्रविशति । तद्वदिदमुच्यते 'तत्सृष्ट्वा तदेवानुप्राविश'दिति । सर्गेऽप्यात्मनः कर्तृत्वमिदमेव । यदुत भो-क्तृतया निमित्तत्वम् । तदेव स्वभावतः स्वच्छोऽप्यात्मा प्रकृत्यादावभेद-मापन्नः तद्धर्मा भवति । एवं तद्विकारेण महता तद्विकारेणाहङ्कारेण । इत्या-शरीराद्द्रष्टव्यम् । स्थूलोऽहं कृशोऽहं देवोऽहं मनुष्योऽहं तिर्यगहमिति । तस्यैवगतस्यापेक्षितव्यस्स्वरूपलाभः नीचैरिव वर्धितस्य राजपुत्रस्य । तद्यथा शबरादिभिर्बाल्यात्प्रभृति स्वमुतैस्सह सवर्धितो राजपुत्रस्तज्जातीयमात्मान-मवलोकयन्मात्रा स्वरूपे कथिते लब्धस्वरूप इव भवति । तथा प्रकृत्या वेश्ययेव स्वरूपान्तरं नीत आत्मा मातृस्थानीयया 'तत्त्वमसी'ति श्रुत्या स्वभावं नीयते । यदेवंविधं परिशुद्धं वस्तु तदेव त्वमसि । यथा मन्यसे 'मनुष्योऽहं दुःख्यह'मित्यादि न तथेति । यथा य एवंभूतो राजा स त्वमसीति राजपुत्रः । ननु तत्त्वमसीति ब्रह्मणा तादात्म्यमुच्यते । को ब्रूते नेति । ब्रह्मापि नान्यदात्मनः । किं पुनरयमात्मा एकः आहो स्विन्नाना । किमनेन ज्ञानेन, त्वं तावदेवंविधश्चिदेकरसो नित्यनिर्मलः कलुषवस्तुसंसर्गात्क-लुषतामिव गतः । तद्वियोगश्च ते मोक्षः । त्वयि मुक्ते यद्यन्ये सन्ति ते सस-रिष्यन्ति । का ते क्षतिः । अथ न सन्ति तथापि कस्ते लाभ इत्यलमियता । महत्येषा कथा ॥ तदप्येते श्लोका भवन्ति—

नीचानां वसतौ तदीयतनयैः सार्धं चिरं वर्धित-
स्तज्जातीयमवैति राजतनयः स्वात्मानमप्यञ्जसा ।
संघाते महदादिभिस्सहवसंस्तद्वत्परः पूरुषः
स्वात्मानं सुखदुःखमोहकलिलं मिथ्यैव धिङ्मन्यते ॥ १ ॥
दाता भोगपरः समग्रविभवो यः शासिता दुष्कृतां
राजा स त्वमसीति मातृमुखतः श्रुत्वा यथावत्स तु ।
राजीभूय जयार्थमेव यतते तद्वत्पुमान् बोधितः
श्रुत्या तत्त्वमसीत्यपास्य दुरितं ब्रह्मैव सम्पद्यते ॥ २ ॥
इत्येवं बहवोऽपि राजतनयाः प्राप्ता दशामीदृशीं
नैवान्योन्यभिदामुपेत्य सहसा सर्वे भजन्त्यैकताम् ।
किं तु स्वे परमे पदे पृथगमी तिष्ठन्ति भिन्नास्तथा
क्षेत्रज्ञा इति तत्त्वमादिवचसः का भेदवादे क्षतिः॥ ३ ॥
तेष्वेको यदि जातु मातृवचनात् प्राप्तो निजं वैभवं
नान्येन क्षतिरस्य यत्किल परे सन्त्यन्यथा च स्थिताः ।
यद्वान्ये न भवेयुरेवमपि को लाभोऽस्य तद्वद्गतिः
पुंसामित्यभिदां भिदां च न वयं निर्बध्य निश्चिन्महे ॥४॥ इति ॥२॥

तदिहापेक्षितमात्मज्ञानमुपदिश्यते। तच्च त्रिविधम्। श्रुतं मनन निदिध्यासनमिति। 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति श्रवणात् । तत्र श्रुतमुपनिषदादिशब्दजन्यज्ञानम् । मननमुपपत्तिभिर्निरूपणम् । एवं श्रुते मते चात्मनि साक्षात्कारहेतुरविक्षिप्तेन चेतसा निरन्तरं भावना निदिध्यासनम्। तत्रात्मसिद्धये श्रौतं ज्ञानं तावदाह—* **तत्रात्मलाभीयाञ्छ्लोकानुदाहरिष्यामः** ॥३॥ तत्रेति वाक्योपन्यासे। आत्मलाभीयानात्मलाभप्रयोजनान्। अनुप्रवचनादिषु दर्शनाच्छप्रत्ययः। श्लोकान् पादबद्धानौपनिषदान्।उदाहरिष्यामः उद्धृत्याहरिष्यामः ग्रन्थे निवेशयिष्याम ॥३॥ ***पूः प्राणिनः सर्व एव गुहाशयस्याहन्यमानस्य विकल्मषस्याचलं चलनिकेतं येऽनुतिष्ठन्ति तेऽमृताः॥ ४ ॥** गुहेति प्रकृतिनाम। 'यत्तत्स्मृतं कारणमप्रमेय ब्रह्म प्रधानं प्रकृति-

प्रसूतिः। आत्मा गुहायां निरनाद्यनन्तः क्षेत्रं तथैवामृतमक्षरं च॥' इति पुराणे दर्शनात्। पूः प्राणिनस्सर्व एव। तस्यां शेते तया सहाविभागमापन्नस्तिष्ठतीति गुहाशय आत्मा। 'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्। अजो ह्येको जुषमाणोऽनुशेते' इति च मन्त्रान्तरम्। अहन्यमानस्य न ह्यसौ शरीरे हन्यमाने हन्यते। विकल्मषस्य निर्लेपस्य। सर्व एव हि धर्माधर्मादिरन्तःकरणस्य धर्मः, आत्मनि त्वध्यस्त.। एवंभूतस्यात्मनः सर्व एव प्राणिनः ब्रह्माद्यास्तिर्यगन्ता' प्र।णादिमन्तः संघाताः। पूः पुरम् उपभोगस्थानम्। यथा राजा पुरमधिवसन् सचिवैरानीतान् भोगानुपभुङ्क्ते, तथायं देहादिशरीरमधिवसन् करणैरुपस्थापितान् भोगानुपभुङ्क्ते। तमेवंभूतमचलं सर्वगतत्वेन निश्चलम्। चलनिकेतं निकेत स्वस्थानं शरीरं तदस्य चल तं येऽनुतिष्ठन्ति उपासते एवभूतोऽहमिति प्रतिपद्यन्ते। तेऽमृताः मुक्ता भवन्तीति॥ ४॥ विषयसङ्गत्यागेनायमुपास्य इत्याह—***यादिदमिदिहेदिह लोके विषयमुच्यते विधूय कविरेतदनुतिष्ठेद्गुहाशयम्॥ ५॥** यदिदं विषयमेतदिति सर्वत्र लिङ्गव्यत्ययश्छान्दसः। एवमितिशब्दे तकारस्य दकारः। हशब्द आश्चर्ये। इतिशब्देनावृत्तेन शब्दादिषु विषयेष्ववान्तरप्रकारभेदः प्रतिपाद्यते। विषयापहृतचेतसो हि वदन्ति'इति ह तस्या गीत,मिति ह तस्याः सुखस्पर्शः, इति ह तस्या रूप निष्टप्तमिव कनक, इति ह तस्याः स्वादिष्ठोऽधरमणिः, इति ह तस्या गन्धो घ्राणतर्पण इति। एव दिव्यमानुषभेदोऽपि द्रष्टव्यः। इति ह इति ह। अत्रानन्तरमपर इतिशब्दोऽध्याहार्यः। इति ह इति हेति योऽग लोके विषय उच्यते। सामान्यापेक्षमेकवचनम्। एतद्विधूय गुहाशयमनुतिष्ठेत्। कविर्मेधावी॥ ५॥ विषयत्यागहेतुमाह—

***आत्मन्नेवाहमलब्ध्वैतद्धितं सेवस्व नाहितम्। अथान्येषु प्रतीच्छामि साधुष्ठानमनपेक्षया। महान्तं तेजस्कायं सर्वत्र निहितं प्रभुम्॥६॥**

शिष्यं प्रत्याचार्यस्य वचनमेतत्। द्वौ चात्र हेतू। विषयाणां पराधीनत्वम-(नभिमत) हितत्वं च। महान्तं गुण(वन्तं)तः। तेजस्कायं तेजश्शरीर तेजोराशिं स्वयंप्रकाशम्। 'आत्मज्योतिः सम्राडिति होवाचे'ति बृहदारण्यकम्। सर्वत्र निहितं सर्वत्र गतम्। प्रभुं स्वतन्त्रम्। एवंभूतं गुहाशयं एतावन्तं का-

लं अहमात्मन् सप्तम्येकवचनस्य लुक् । आत्मनि । अस्मिन् मदीये संघाते अन्यानपेक्ष्यैव लब्धुं योग्यमलब्ध्वा अथान्येषु इन्द्रियादिषु तं तं विषयं प्रतीच्छामि । लङर्थे लट् । प्रत्यैच्छम् । इदानीं तु तं लब्ध्वा न तथाविधोऽस्मि । त्वमप्येतदेव हितं साधुष्ठान साधुमार्गं सेवस्व नाहितं विषयानुधावनमिति ॥ ६ ॥ पुनरप्यसौ कीदृश इत्याह—***सर्वभूतेषु यो नित्यो विपश्चिदमृतो ध्रुवः । अनङ्गोऽशब्दोऽशरीरोऽस्पर्शश्च महाञ्छुचिः । स सर्वं परमा काष्ठा स वैषुवतं स वै वैभाजनं पुरम्** ॥ ७ ॥ सर्वेषु भूतेषु मनुष्यादिषु संघातेषु यो नित्यः विनश्यत्स्वपि न नश्यति । विपश्चित् मेधावी चित्स्वरूपः । अमृतः नित्यत्वादेवामरणधर्मा । अतः ध्रुवः एकरूपः विकाररहितः । न प्रधानवद्विकारिणस्सतो धर्मिरूपेणास्य नित्यत्वमित्यर्थः । अनङ्गः करचरणाद्यङ्गरहितः । अशब्दोऽस्पर्श इति भूतगुणानामुपलक्षणम् । शब्दादिगुणरहितः अशरीरः सूक्ष्मशरीरेणापि वर्जितः । महाञ्छुचिः महत्त्वं शौचस्य विशेषणम् ; परमार्थतोऽत्यन्तशुद्धः । स सर्वं प्रकृत्यभेदद्वारेण । स एव परमा काष्ठा । ततः परं गन्तव्याभावात् । स वैषुवत विषुवान्नाम गवामयनस्य मध्ये भवमहः । 'एकविंशमेतदहरुपयन्ति विषुवन्तं मध्ये संवत्सरस्ये'ति दर्शनात् । विषुवानेव वैषुवतम् । तद्यथा संवत्सरस्य मध्ये भवति एवमङ्गानामेष मध्ये । 'मध्यं ह्येषामङ्गानामात्मे'ति बह्वृचब्राह्मणम् । स एव च वैभाजनं पुरं विविधैर्मार्गैर्भजनीयं विभजनम् । तदेव वैभाजनं प्रज्ञादिरनुशातिकादिश्च । यथा समृद्धं पुरं सर्वैरर्थिभिः प्राप्यमेवमयमपीति ॥ ७ ॥ ***तं योऽनुतिष्ठेत्सर्वत्र प्राध्वं चास्य सदाचरेत् । दुर्दर्शं निपुणं युक्तो यः पश्येत्स मोदेत विष्टपे** । इति ॥ ८ ॥ तमेवभूतमात्मानं योऽनुतिष्ठेदुपासीत यश्चास्य सर्वत्र सर्वास्ववस्थासु सदा प्राध्वमानुकूल्यमाचरेत् । आनुकूल्यं प्रतिषिद्धवर्जनं नित्यनैमित्तिककर्मानुष्ठानं च । यश्च दुर्दर्शं निपुणं सूक्ष्ममेतं युक्तः समाहितो भूत्वा पश्येत् साक्षात्कुर्यात् । सः विष्टपे विगततापे स्वे महिम्नि स्थितो मोदेत सर्वदुःखवर्जितो भवति । संसारदशायां वा तिरोहितं निरतिशयं स्वमानन्दमनुभवतीति ॥ ८ ॥

॥ इति द्वात्रिंशतितमी खण्डिका ॥ प्र० १ प० ८ ख० २२ ॥

*** आत्मन् पश्यन् सर्वभूतानि न मुह्येच्चिन्तयन्कविः । आत्मानं चैव सर्वत्र यः पश्येत्स वै ब्रह्मा नाकपृष्ठे विराजति ॥ १ ॥** सर्वाणि भूतानि आत्मन् आत्मनि शेषत्वेन स्थितानि पश्यन् उपनिषदादिभिर्जानन् । पश्चाच्चिन्तयन् युक्तिभिः निरूपयन् यो न मुह्येत् मध्ये मोहं न गच्छेत् । कविर्मेधावी । पश्चाच्च सर्वत्रैव शेषत्वेन स्थितमात्मनं पश्येत् साक्षात्कुर्यात् । स वै ब्रह्मा ब्राह्मणः नाकपृष्ठे तत्सदृशे स्वे महिम्नि स्थितो विराजति स्वयं प्रकाशते ॥ १ ॥ *** निपुणोऽणीयान् बिसोर्णाया यस्सर्वमावृत्य तिष्ठति । वर्षीयांश्च पृथिव्या ध्रुवः सर्वमारभ्य तिष्ठति । स इन्द्रियैर्जगतोऽस्य ज्ञानादन्योऽनन्यस्य ज्ञेयात्परमेष्ठी विभाजः । तस्मात्कायाः प्रभवन्ति सर्वे समूलं शाश्वतिकः स नित्यः ॥ २ ॥** निपुणो मेधावी चित्स्वरूपः । बिसोर्णायाः बिसतन्तोरप्यणीयान् सूक्ष्मः । यः सर्वमावृत्य व्याप्य तिष्ठति । यश्च पृथिव्या अपि वर्षीयान् प्रवृद्धतर. सर्वगत्वादेव सर्वमारभ्य विष्टभ्य शेषित्वेनाधिष्ठाय तिष्ठति । ध्रुवः एकरूपः । सः इन्द्रियैरस्य जगतो यदिन्द्रियैर्ज्ञानं इन्द्रियजन्यं ज्ञानं तस्मात् । कीदृशात् । अनन्यस्य ज्ञेयात् । पञ्चम्यर्थे षष्ठी ज्ञेया । ज्ञेयात् नीलपीतादेराकारादनन्यभूत नीलपीताद्याकार, तस्माद्विषयज्ञानादन्य इत्यर्थ । श्रूयते च 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमय' इति । 'ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थत । तमेवार्थस्वरूपेण भ्रान्तिदर्शनतस्स्थितम् ॥' इति पुराणम् । स्वभावस्वच्छस्य चिद्रूपस्यात्मनो नीलपीताद्याकारकालुष्यं तद्रूपाया बुद्धेरनुरागकृतं भ्रान्तमित्यर्थ । वैषयिकज्ञानादन्य इति विशेषणेन ज्ञानात्मक इत्यपि सिद्धम् । 'सत्य ज्ञानमनन्तं ब्रह्मे'ति श्रुति । एवंभूत आत्मा परमेष्ठी परमे(श्वर )स्वरूपे तिष्ठति । विभाज इत्यस्य परेण सम्बन्ध । विभजत्यात्मानं देवमनुष्यादिरूपेण नानाशरीरानुप्रवेशेनेति विभाक् । तस्माद्विभाजो निमित्तभूतात् सर्वे काया देवमनुष्यशरीराणि भवन्ति उत्पद्यन्ते । स मूल प्रपञ्चसृष्टेर्भोक्तृतया मूल कारणम् । स नित्य अविनाशी । शाश्वतिक एकरूप अविकार ॥ २ ॥ *** दोषाणां तु निर्घातो योगमूल इह जीविते । निर्हृत्य भूतदाहीयान् क्षेमं गच्छति पण्डितः ॥ ३ ॥** दोषाणां वक्ष्यमा-

णानां क्रोधादीनां निर्घातः निर्मूलनाशः । इह जीविते योगमूलः योगा वक्ष्यमाणा अक्रोधादयः तन्मूलकः । अतश्च तान् भूतदाहीयान् भूतानि दहतः क्रोधादीन्दोषान् निर्हृत्य क्षेमं गच्छति आत्मध्यानद्वारेण । पण्डितो लब्धज्ञानः आत्मसाक्षात्कारी । क्षेमं अभयं मोक्षम् । 'अभयं वै जनक प्राप्तोसी'ति बृहदारण्यकम् ॥ समाप्ताः श्लोकाः ॥ ३ ॥ * **अथ भूतदाहीयान्दोषानुदाहरिष्यामः** ॥ ४ ॥ भूतानां दाहो भूतदाहः तस्मै हिता भूतदाहीयाः ॥ ४ ॥ * **क्रोधो हर्षो रोषो लोभो मोहो दम्भो द्रोहो मृषोद्यमत्याशपरीवादावसूया काममन्यू अनात्म्यमयोगस्तेषां योगमूलो निर्घातः** ॥५॥ ताडनादिहेतुकोऽन्तःकरणविक्षोभः स्वेदकम्पादिलिङ्गः क्रोधः । हर्षः इष्टलाभाच्चेतस उद्रेको रोमाञ्चादिलिङ्गः । रोषः क्रोधस्यैव कियानपि भेदः मात्रादिषु प्रतिकूलेषु मनसो वैलोम्यमात्रकार्यकरः । लोभो द्रव्यसङ्गमः । मोहः कार्याकार्ययोरविवेकः । स च प्रायेण क्रोधादिजन्योऽपि पृथगुपदिश्यते कदाचित्तदभावेऽपि सम्भवेदिति । दम्भो धार्मिकत्वप्रदर्शनेन लोकवञ्चनम् । द्रोहोऽपकारः । मृषोद्यमनृतवादः । अत्याशोऽत्यशनम् । परीवादः परदोषाभिधानम् । असूया परगुणेष्वक्षमता । कामः स्त्रीसंसर्गः । मन्युः गूढो[1] द्वेषः । अनात्म्यं अजितेन्द्रियत्वं जिह्वाचापल्यादि । अयोगो विक्षिप्तचित्तता । एते भूतदाहीया दोषाः । तेषां योगमूलो निर्घातः ॥ ५॥ के पुनस्ते योगास्तानाह—* **अक्रोधोऽहर्षोऽरोषोऽलोभोऽमोहोऽदम्भोऽद्रोहः सत्यवचनमनत्याशोऽपैशुनमनसूया संविभागस्त्याग आर्जवं मार्दवं शमो दमः सर्वभूतैरविरोधो योग आर्यमानृशंस्यं तुष्टिरिति सर्वाश्रमाणां समयपदानि तान्यनुतिष्ठन्विधिना सार्वगामी भवति** ॥ ६ ॥ एते चाक्रोधादयोऽपि भावरूपाः । न क्रोधाद्यभावमात्रम् । क्रोधादीनां निर्घातहेतुतयोपदेशात् । के पुनस्ते—अलोभः सन्तोषोऽलंबुद्धिः ; अमोहोऽवधानम् । अदम्भो धर्मानुष्ठानम् । अनसूया परगुणेष्वभिमोदनम् । अद्रोहः पुनः प्रसक्तेष्वपि क्रोधादिषु माकार्षमिति सङ्कल्पः । सत्यवचनं

१ 'श्रद्धा द्वेष' इति पाठान्तरम् ।

यथादृष्टार्थवादित्वम् । संविभागः आत्मानमवरुध्यापि दानम् । त्यागोऽपरिग्रहः । आर्जवं मनोवाक्कायानामेकरूपत्वम् । मार्दवं सूपगम्यता । शमः काममन्युपरित्यागः । दमः इन्द्रियजयः । एताभ्यामेव गतत्वात् अस्मिन् क्रमे अकामः अमन्युः आत्मवत्त्वमिति नोपदिष्टम् । सर्वभूतैरविरोधः । सर्वग्रहणं क्षुद्रैरविरोधार्थम् । योग ऐकात्म्यम् । आर्याणां भावः आर्यं शिष्टाचारानुपालनम् । आनृशंस्यं व्यवहारवचनादौ प्रसक्तस्यापि नैष्ठुर्यवर्जनम् । तुष्टिरनिर्वेदः । समयो व्यवस्था । सा च प्रकरणाद्धर्मज्ञानाम् । पदं विषयः । एते अक्रोधादयः सर्वेषामाश्रमाणां सेव्याः । न केवलं योगिनामेवेति धर्मज्ञानां समय इत्यर्थः । एते हि भाव्यमानाः क्रोधादीन् समूलघातं घ्नन्ति । अतश्च तान्यनुतिष्ठन् विधिना सार्वगामी भवति । तान्यक्रोधादीनि तुष्टयन्तानि । विधिना यथाशास्त्रम् । अनुतिष्ठन् सार्वगामी सर्वस्मै हितः आत्मानं गच्छति । 'विधिने'ति वचनात् 'प्राणिना तु वधो यत्र तत्र साक्ष्यनृतं वदेत् ।' इत्यादिके विषये अनृतवचनादावपि न दोष इति ॥ ६ ॥

**इति त्रयोविंशतितमी खण्डिका ॥ प्र०१ प०८ ख०२३ ॥**

---

**इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्**
**उज्ज्वलायां प्रथमप्रश्ने अष्टमः पटलः ॥ ८ ॥**

---

***क्षत्रियं हत्वा गवां सहस्रं वैरयातनार्थं दद्यात्** ॥ १ ॥ क्षत्रियं हत्वा गवां सहस्रं ब्राह्मणेभ्यो दद्यात् । किमर्थं वैरयातनार्थं वैरं पापं तस्य यातनं निर्हरणं तदर्थम् । ऋषभश्चात्राधिकः सर्वत्र प्रायश्चित्तार्थ इति । तेन प्रायश्चित्तरूपमिदं दानम् । प्रायश्चित्तं च पापक्षयार्थं तत्किमर्थं वैरयातनार्थमित्युच्यते । केचिन्मन्यन्ते—नाभुक्तं क्षीयते पुण्यमपुण्यं च । प्रायश्चित्तं तु नैमित्तिकं कर्मान्तरं यथा गृहदाहादौ क्षामवत्यादय इति तन्निराकर्तुमिदमुक्तम् । अपर आह—यो येन हन्यते, स हतो म्रियमाणस्तस्मिन्वैरं करोति अपि नामाहमेनं जन्मान्तरेऽपि वध्यासमिति तस्य वैरस्य यातनार्थमिदमिति प्रायश्चित्तार्थत्वमपि वक्ष्यमाणेन सिद्धमिति ॥ १ ॥ ***शतं वैश्ये** ॥ २ ॥

वैश्ये हते गवां शतं दद्यात् ॥ २॥ ***दश शूद्रे ॥ ३ ॥** शूद्रे हते दश दद्यात् । गा इति प्रकरणाद्गम्यते ॥ ३ ॥ ***ऋषभश्चात्राधिकः सर्वत्र प्रायश्चित्तार्थः** ॥ ४ ॥ सर्वेष्वेतेषु निमित्तेषु ऋषभोऽप्यधिको देयः । न केवलं गा एव । इदं प्रायश्चित्तत्रयं मानवेन समानविषयम् । यथाह—'अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः । ऋषभैकसहस्त्रां गां दद्याच्छुद्ध्यर्थमात्मनः ॥ त्र्यब्दं चरेद्वा नियतो जटी ब्रह्महणो व्रतम् । वसन् दूरतरे ग्रामाद्वृक्षमूलनिकेतनः ॥ एतदेव चरेदब्दं प्रायश्चित्तं द्विजोत्तमः । प्रमाप्य वैश्यं वृत्तस्थं दद्याद्वैकशतं गवाम् ॥ एतदेव व्रतं कृत्स्नं षण्मासांश्छूद्रहा चरेत् । ऋषभैकादशा वापि दद्याद्विप्राय गाः सिताः ॥' इति ॥ ४ ॥ ***स्त्रीषु चैतेषामेवम् ॥ ५ ॥** एतेषां क्षत्रियादीनां स्त्रीषु च हतासु एवमेव प्रायश्चित्तं यथा पुरुषेषु ॥५॥ ***पूर्वयोर्वर्णयोर्वेदाध्यायं हत्वा सवनगतं वाभिशस्तः ॥ ६ ॥** प्रकृतेषु यौ पूर्वौ वर्णौ क्षत्रियवैश्यौ तयोर्यो वेदाध्यायः अधीतवेदः तं हत्वा अभिशस्तो भवति । अभिशस्त इति ब्रह्मघ्नोऽभिधानम् सवनगतं वा । तयोरेव वर्णयोः यः सवनगतः सवनशब्देन प्रातस्सवनादीन्युच्यन्ते । नापि यागमात्रम् । किं तर्हि सोमयागः । तत्र यो दीक्षितः सवनगतः । 'ब्राह्मणो वा एष जायते यो दीक्षित' इति दर्शनात् । तं च हत्वाभिशस्तो भवति । पूर्वयोर्वर्णयोरिति किम् । ब्राह्मणे माभूत् । इष्यते ब्राह्मणे वक्ष्यति च ब्राह्मणमात्रं चेति । एवं तर्हि शूद्रे माभूत् । न शूद्रो वेदाध्यायः सवनगतो वा भवति । इदं तर्हि प्रयोजनं पूर्वयोर्वर्णयोरेव यथा स्यात्तयोरेव यावनुलोमौ सवर्णाम्बष्ठौ तयोर्माभूदिति । तेनान्ये वर्णधर्मा अनुलोमानामपि भवन्ति ॥ ६ ॥ ***ब्राह्मणमात्रं च ॥ ७ ॥** हत्वाभिशस्तो भवति । मात्रग्रहणान्नाभिजनविद्यासंस्काराद्यपेक्षा ॥ ७ ॥ ***गर्भं च तस्याविज्ञातम् ॥ ८ ॥** तस्य ब्राह्मणमात्रस्य । गर्भं च स्त्रीपुन्नपुंसकभेदेनाविज्ञातम् । हत्वाभिशस्तो भवति ॥ ८ ॥ ***आत्रेयीं च स्त्रियम् ॥ ९ ॥** ऋतुस्नातामात्रेयीमाहुरिति वसिष्ठः । तस्येति वर्तते । आत्रेयीं च ब्राह्मणस्त्रियं हत्वा ब्रह्महा भवति । सम्भवत्यस्यां ब्राह्मणगर्भ इति । अत्रिगोत्रजा आत्रेयीत्यन्ये ॥ ९ ॥ *** तस्य निर्वेषः ॥ १० ॥** तस्य सर्वप्रकारस्याभिशस्तस्य नि-

र्वेषः प्रायश्चित्तं वक्ष्यते ॥ १० ॥ *आरण्यके कुटिं कृत्वा वाग्यतः शवशिरध्वजोऽर्धशाणीपक्षमधोनाभ्युपरिजान्वाच्छाद्य ॥ ११ ॥ कृत्वेति वचनान्न परकृता कुटी ग्राह्या। वाग्यता नियता येन स वाग्यतः वाचंयमः। आहिताग्न्यादिषु दर्शनात् निष्ठान्तस्य परनिपातः। शवशिरः ध्वजो यस्य स शवशिरोध्वजः। सकारलोपश्छान्दसः। स्वव्यापादितस्य शिरो ध्वजदण्डाग्रे प्रोतं कृत्वेत्यर्थः। यस्यकस्यचिच्छवस्येत्यन्ये। शणस्य विकारः शाणी पटी तस्या अर्धमर्धशाणी तस्याः पक्षमर्धशाणीपक्षं आयामविस्तारयोरुभयोरप्यर्धम्। अधोनाभि उपरिजानु च यथा भवति तथा तावन्तं प्रदेशमाच्छाद्य। सापेक्षत्वात् 'ग्रामे प्रतिष्ठेते'ति वक्ष्यमाणेन सम्बन्धः। मध्ये क्रियान्तरविधिः ॥ ११ ॥ *तस्य पन्था अन्तरा वर्त्मनि ॥ १२ ॥ तस्य ग्राम प्रविशतः वर्त्मनी अन्तरा शकटादेर्वर्त्मनोर्मध्ये पन्था वेदितव्यः। अपर आह—यत्र रथ्यादौ उभयोः पार्श्वयोर्वर्त्मनी भवतः तत्र तयोर्मध्ये सूकरादिपथेन सञ्चरेतेति ॥ १२ ॥ *दृष्ट्वा चान्यमुत्क्रामेत् ॥ १३ ॥ अन्यमार्यं दृष्ट्वा पथ उत्क्रामेत्। तत्र कौटिल्यः 'पञ्चारत्नी रथपथश्चत्वारो हस्तिपथः द्वौ क्षुद्रपशुमनुष्याणा'मिति। तेन मनुष्येषु द्वौ हस्तावुत्क्रामेदिति ॥ १३ ॥ *खण्डेन लोहितकेन शरावेण ग्रामे प्रतिष्ठेत ॥ १४ ॥ खर्परमात्रं खण्डम्। लोहितं मनाक्ताम्रम्। एवम्भूतं शरावं भिक्षापात्रं गृहीत्वा ग्रामे प्रतिष्ठेत ग्रामं गच्छेत् ॥ १४ ॥ *कोऽभिशस्ताय भिक्षामिति सप्तागाराणि चरेत् ॥ १५ ॥ अभिशस्तो ब्रह्महा। तस्मै मह्यं को धार्मिको भिक्षां ददातीति उच्चैर्ब्रुवाणः सप्तागाराणि चरेत्। सप्तग्रहणमधिकनिवृत्त्यर्थम्। द्वित्रेष्वेवागारेषु यदि पर्याप्तं लभ्यते तदा तावत्येव ॥ १५ ॥ *सा वृत्तिः ॥ १६ ॥ सप्तस्वगारेषु या च यावती लभ्यते सैव वृत्तिः अपर्याप्तापि ॥ १६ ॥ *अलब्ध्वोपवासः ॥ १७ ॥ यदि सप्तागारेषु न किञ्चिल्लभ्यते तदोपवास एव तस्मिन्नहनि ॥ १७ ॥ *गाश्च रक्षेत् ॥ १८ ॥ एवं प्रायश्चित्तं कुर्वन्नहरहर्गाश्च रक्षेत् ॥ १८ ॥ *तासां निष्क्रमणप्रवेशने द्वितीयो ग्रामेऽर्थः ॥ १९ ॥ तासां गवां निष्क्रमणसमये प्रवेशनसमये च द्वितीयो ग्रामेऽर्थः। अर्थः प्रयोजनम्। भिक्षार्थं प्रथममुक्तम्। नान्यदा

ग्रामं प्रविशेदित्युक्तं भवति ॥१९॥ * **द्वादशवर्षाणि व्रतमेतच्चरित्वा सिद्धः सद्भिः सम्प्रयोगः** ॥ २० ॥ एवं द्वादशवर्षाणि व्रतमेतच्चरित्वा सद्भिः सम्प्रयोगः कर्तव्यः । सद्भिः सम्प्रयुज्यते येन विधिना स कर्तव्यः। स शिष्टाचारे शास्त्रान्तरे च सिद्धः उच्यते— कृतप्रायश्चित्तः स्वहस्ते यवस गृहीत्वा गामाह्वयेत् । सा यद्यागत्य श्रद्दधाना भक्षयति तदा सम्यगनेन व्रतं चरितमिति जानीयात् । अन्यथा नेति ॥२०॥ * **आजिपथे वा कुटिं कृत्वा ब्राह्मणगव्योऽपजिगीषमाणो वसेत्त्रिः प्रतिराद्धोऽपजित्य वा मुक्तः** ॥ २१ ॥ सङ्ग्रामेण जेतव्या दस्यवो येन पथा ग्रामं प्रविश्य गवादिकमपहृत्यापसरन्ति स आजिपथः । तस्मिन्वा कुटिं कृत्वा वसेत् । किं चिकीर्षन्। ब्राह्मणगव्यः 'वा छन्दसी' ति पूर्वसवर्णाभावे यणादेशः ब्राह्मणगवीः । अपजिगीषमाणः दस्यूनपजित्य प्रत्याहर्तुमिच्छन्। एवं वसन् दस्युभिर्ह्रियमाणं गवादिकमुद्दिश्य तैर्युद्धं कुर्वन् त्रिः प्रतिराद्धः तैरपजितः अपजित्य वा तान् गवादिकं प्रत्याहृत्य ब्राह्मणेभ्यो दत्वा मुक्तो भवति तस्मादेनसः । द्वादशवार्षिके प्रवृत्तस्येदम् । एवमुत्तरमपि ॥२१॥ * **आश्वमेधिकं वावभृथमवेत्य मुच्यते** ॥ २२ ॥ अथ वाश्वमेधावभृथे स्नात्वा मुच्यते ॥ २२ ॥ * **धर्मार्थसन्निपातेऽर्थग्राहिण एतदेव** ॥ २३ ॥ धर्मस्याग्निहोत्रादेरर्थस्य च युगपद्यत्र सन्निपातः तत्रोभयानुग्रहासम्भवे धर्मलोपेन योऽर्थं गृह्णाति तस्याप्येतदेव प्रायश्चित्तम् । अथवा धर्मं हित्वार्थहेतोः कौटसाक्ष्यादि करोति तद्विषयमेतत् । अत्र गौतमः—'कौटसाक्ष्यं राजगामि पैशुनं गुरोरनृताभिशंसनं महापातकसमानी'ति । मनुरपि—'अनृतं च समुत्कर्षे राजगामि च पैशुनम् । गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया' ॥ इति ॥ २३ ॥ * **गुरुं हत्वा श्रोत्रियं वा कर्मसमाप्तमेतेनैव विधिनोत्तमादुच्छ्वासाच्चरेत्** ॥ २४ ॥ गुरुः पित्राचार्यादिः । श्रोत्रियोऽधीतवेदः । स यदि कर्मसमाप्तो भवति सोमान्तानि कर्माणि समाप्तानि यस्य स कर्मसमाप्तः । तौ हत्वा एतेनैवानन्तरोक्तविधिना आोत्तमादुच्छ्वासात् उत्तम उच्छ्वासः प्राणवियोगः । आ तस्माच्चरेत् ॥ २४ ॥ * **नास्यास्मिँल्लोके प्रत्यापत्तिर्विद्यते कल्मषं तु निर्हण्यते** ॥ २५ ॥ अश्वमेधावभृथादिषु सम्भवत्स्वपि अस्या-

स्मिँल्लोके जीविते प्रत्यापत्तिः शुद्धिर्नास्तीत्यर्थः । कल्मषं तु निर्हण्यते । तस्य पुत्रादिभिः संस्कारादिः कर्तव्य इति भावः । अन्ये तु पूर्वं सूत्रं तन्निवृत्त्यर्थं मन्यन्ते । प्रत्यापत्तिः पुत्रादिभिः पित्रादिभावेन सम्बन्ध इति ।२९।

॥ इति चतुर्विंशतितमी खण्डिका ॥ प्र०१ प० ९ ख० २४ ॥

---

* **गुरुतल्पगामी सवृषणं शिश्नं परिवास्याञ्जलावाधाय दक्षिणां दिशमनावृत्तिं व्रजेत्** ॥ १ ॥ गुरुरत्र पिता । नाचार्यादिः । तल्पशब्देन शयनवाचिना भार्या लक्ष्यते । सा च साक्षाज्जननी । न तत्पत्नी । तां गत्वा सवृषणं साण्डं शिश्नं परिवास्य क्षुरादिना छित्त्वाञ्जलावाधाय दक्षिणां दिशं व्रजेत् । अनावृत्तिम् आवृत्तिर्न क्रियते यस्यां तां दिशमनावर्तमानो गच्छेदिति । अथ ये दक्षिणस्योदधेस्तीरे वसन्ति तेऽपि यावद्देशं गत्वा उदधिमेव प्रवेक्ष्यन्ति । मरणं ह्यत्र विवक्षितम् । अत्र संवर्तः—' पितृदारं समारुह्य मातृवर्जं नराधमः । भगिनीं मातुराप्तां वा स्वसारं वान्यमातृजाम् ॥ एता गत्वा स्त्रियो मोहात् तप्तकृच्छ्रान् समाचरेत् । ' इति । नारदस्तु—' माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा । पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा ॥ दुहिताचार्यभार्या च सगोत्रा शरणागता । राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या ॥ आसामन्यतमां गत्वा गुरुतल्पग उच्यते । शिश्नस्योत्कर्तनं तत्र नान्यो दण्डो विधीयते ॥ ' इति ॥ १ ॥

* **ज्वलितां वा सूर्मिं परिष्वज्य समाप्नुयात्** ॥ २ ॥ आयसी ताम्रमयी वा अन्तस्सुषिरा स्त्रीप्रतिकृतिरत्र सूर्मिः । तां ज्वलितामग्नौ तप्ताम् । परिष्वज्य । समाप्नुयात् समाप्तिं गच्छेत् म्रियेत ॥ २ ॥ * **सुरापोऽग्निस्पर्शां सुरां पिबेत्** ॥ ३ ॥ 'गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ।' तस्याः पाता सुरापः । अग्निस्पर्शाम् अग्निक्वथितां सुरां पिबेत् । तया दग्धकायः शुद्ध्यति ॥ ३ ॥ * **स्तेनः प्रकीर्णकेशोंऽसे मुसलमाधाय राजानं गत्वा कर्माचक्षीत । तेनैनं हन्याद्वधे मोक्षः** ॥ ४ ॥ स्तेनो ब्राह्मणः स्वर्णहारी । अंसे स्वे स्कन्धे । मुसलमाधाय आयसं खादिरं वाधाय । राजानं गत्वा कर्माचक्षीत एवंकर्मास्मि शाधि मामिति । स तेन मु-

सलेन एनं स्तेनं हन्यात् । यथा मृतो भवति । वधे सति स्तेनस्य मोक्षो मुक्तिर्भवत्येनसो नान्यथेति ॥४॥ * **अनुज्ञातेऽनुज्ञातारमेनः स्पृशति** ॥५॥ यदि राजा दयादिना तमनुजानीयात् गच्छेति, तदा तमनुज्ञातारं राजानमेव तदेनः स्पृशति ॥५॥* **अग्निं वा प्रविशेत्** ॥६॥ गतम् ॥६॥ * **तीक्ष्णं वा तप आयच्छेत्** ॥७॥ तीक्ष्णं तपः महापराकादि । तद्वा आयच्छेत् आवर्तयेत् ॥७॥ * **भक्तापचयेन वात्मानं समाप्नुयात्** ॥८॥ भक्तमन्नम् । तस्यापचयो ह्रासः । प्रथमे दिने यावन्तो ग्रासाः ते एकेन न्यूना द्वितीये । एवं तृतीयादिष्वपि । आ एकस्माद्ग्रासात् । तत्रापि यदि न समाप्तिः ततस्तत्रैव परिमाणापचयः कर्तव्यः । एवं भक्तापचयेनात्मानं समाप्नुयात् समापयेत् ॥८॥ * **कृच्छ्रसंवत्सरं वा चरेत्** ॥९॥ अथवा संवत्सरमेकं नैरन्तर्येण कृच्छ्रांश्चरेत् । एषामेनस्सु गुरुषु गुरूणि लघुषु लघूनीति व्यवस्था ॥९॥ * **अथाप्युदाहरन्ति** ॥१०॥ अस्मिन्नेव विषये पुराणश्लोकमप्युदाहरन्तीत्यर्थः ॥१०॥ * **स्तेयं कृत्वा सुरां पीत्वा गुरुदारं च गत्वा ब्रह्महत्यामकृत्वा । चतुर्थकाला मितभोजिनः स्युरपोऽभ्युपेयुः सवनानुकल्पम् । स्थानासनाभ्यां विहरन्त एते त्रिभिर्वर्षैरपपापं नुदन्ते** ॥११॥ ब्रह्महत्याव्यतिरिक्तानि स्तेयादीनि कृत्वा चतुर्थकालाश्चतुर्थो भोजनकालो येषाम् । यथा अद्य दिवा भुङ्क्ते श्वो नक्तमिति ते तथोक्ताः । तथापि मितभोजिनः न मिष्टाशिनः । अपोऽभ्युपेयुः भूमिगतास्वप्सु स्नानं कुर्युः । सवनानुकल्पं यथा सवनानि प्रातस्सवनादीन्यनुक्लृप्तानि अनुसृतानि भवन्ति तथा त्रिषवणमित्यर्थः । तिष्ठेयुरहनि रात्रावासीरन् । एवं स्थानासनाभ्यां विहरन्तः कालं क्षपयन्तः कुर्वन्तः । एते त्रिभिर्वर्षैस्तत्पापमपनुदन्ते ॥११॥ * **प्रथमं वर्णं परिहाप्य प्रथमं वर्णं हत्वा सङ्ग्रामं गत्वावतिष्ठेत तत्रैनं हन्युः** ॥१२॥ प्रथमो वर्णो ब्राह्मणः । तं हत्वा सङ्ग्रामं गत्वा सेनयोर्मध्येऽवतिष्ठेत । किं सर्वे नेत्याह—प्रथमं वर्णं परिहाप्य ब्राह्मणवर्जमितरो वर्णः क्षत्रियादिरित्यर्थः । तत्र स्थितमेनं ते सैनिका हन्युः तं एनं हतं विदध्युः । अघ्नन्तः एनस्विनः स्युः । यथा राजा स्तेनम् । स मृतः शुद्ध्यति ॥१२॥ * **अपि वा लोमानि त्वचं मांसमिति हाव**

यश्चित्तं स एव जायते स्वकर्मच्युतो ब्राह्मण इति ॥ ९ ॥

॥ इति द्वितीया खण्डिका ॥ प्र ० २ प ० १ ख ० २ ॥

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां द्वितीयप्रश्ने प्रथमः पटलः ॥ १ ॥

**आर्याः प्रयता वैश्वदेवेऽन्नसंस्कर्तारः स्युः** ॥ १ ॥ आर्यास्त्रैवर्णिकाः । 'आर्याधिष्ठिता वा शूद्राः' इत्युत्तरत्र दर्शनात् । प्रयताः स्नानादिना शुद्धाः । वैश्वदेवे गृहमेधिनोर्भोजनार्थे पाके । 'गृहमेधिनो यदशनीयस्ये'ति दर्शनात् । अन्नसंस्कर्तारः स्युः । अन्नं भक्ष्यभोज्यपेयादिकं संस्कुर्युः । न स्वयं नापि स्त्रियः ॥ १ ॥ ***भाषां कासं क्षवथुमित्यभिमुखोऽन्नं वर्जयेत्** ॥ २ ॥ भाषा शब्दोच्चारणम् । कासः कण्ठ घुरुघुराशब्दः । क्षवथुः क्षुतम् । एतत्त्रितयमन्नाभिमुखो न कुर्यात् । 'संस्कर्तारः स्यु'रिति बहुवचनं प्रकृते 'वर्जये'दित्येकवचनं प्रत्येकमुपदेशार्थम् ॥२॥ ***केशानङ्गं वासश्चालभ्याप उपस्पृशेत्** ॥ ३ ॥ केशादीनात्मीयानन्यदीयान्वा । अलभ्य स्पृष्ट्वा । अप उपस्पृशेत् । नेद स्नानम् । किं तर्हि । स्पर्शनमात्रम् । केशालम्भे पूर्वमप्युपस्पर्शनं विहितम् । इदं तु तत्रोक्तं वैकल्पिकं शकृदाद्युपस्पर्शनं मा भूदिति ॥ ३ ॥ ***आर्याधिष्ठता वा शूद्रास्संकर्तारः स्युः** ॥ ४॥ त्रैवर्णिकैराधिष्ठिता वा शूद्रास्संस्कर्तारः स्युः । प्रकरणादन्नस्येति गम्यते ॥ ४ ॥ ***तेषां स एवाचमनकल्पः** ॥५॥ तेषां शूद्राणामन्नसंस्कारेऽधिकृतानां स एवाचमनकल्पो वेदितव्यः यस्यान्नं पचन्ति । यदि ब्राह्मणस्य हृदयङ्गमाभिरद्भिः, यदि क्षत्रियस्य कण्ठगाभिरद्भिः, यदि वैश्यस्य तालुगाभिरिन्द्रियोपस्पर्शनं भवति ॥५॥ ***अधिकमहरहः केशश्मश्रुलोमनखवापनम्** शूद्राः पचन्तः प्रत्यहं केशादि वापयेयुः । इदमेषामधिकमार्येभ्यः ॥ ६ ॥ ***उदकोपस्पर्शनं च सह वाससा** ॥ ७ ॥ सहैव वाससा स्नानं कुर्युः । आर्याणां तु परिहितं वासो निधाय कौपीनाच्छादनमात्रेणापि स्नानं भवति । शूद्राणामपि पाकादन्यत्र । तथा च मनुः—'न वासोभिस्सहाजस्रं नाविज्ञाते जलाशये ।' इति ॥ ७ ॥ ***अपि वाष्टमीष्वेव पर्वसु वा**

**वपेरन्** ॥ ८ ॥ यदि वाष्टमीष्वेव वपेरन् केशादीन् पर्वस्वेव वा । न प्रत्यहम् । 'वपेर'न्निति अन्तर्भावितण्यर्थः । वापयेरन्नित्यर्थः । तथा च लोमनखवापनमिति पूर्वत्र णिचप्रयुक्तम् ॥८॥ ***परोक्षमन्नं संस्कृतमग्नावधिश्रित्याद्भिः प्रोक्षेत्तद्देवपवित्रमित्याचक्षते** ॥ ९ ॥ यदि शूद्राः परोक्षमन्नं संस्कुर्युः आर्यैरधिष्ठिताः । तदा तत्परोक्षमन्नं संस्कृतं स्वयमग्नावधिश्रयेत् । अधिश्रित्याद्भिः प्रोक्षेत् । तदेवंभूतमन्नं देवपवित्रमित्याचक्षते । देवानामपि तत्पवित्रं किं पुनर्मनुष्याणामिति ॥ ९ ॥ ***सिद्धेऽन्ने तिष्ठन् भूतमिति स्वामिने प्रब्रूयात्** ॥ १० ॥ सिद्धे पक्वेऽन्ने तिष्ठन् पाचकोऽधिष्ठाता वा भूतमिति प्रब्रूयात् । यस्य तदन्नं तस्मै स्वामिने भूतं निष्पन्नमित्यर्थः ॥ १० ॥ ***तत्सुभूतं विराडन्नं तन्मा क्षायीति प्रतिवचनः** ॥ ११ ॥ तत्सुभूतमित्यादिप्रतिवचनो मन्त्रः । तदन्नं सुभूतं सुनिष्पन्नम् । विराट् विराजनसाधनम् । अन्नमशनम् । तच्च मा क्षायि क्षीणं मा भूदित्यर्थः ॥ ११ ॥ ***गृहमेधिनो यदशनीयस्य होमा बलयश्च स्वर्गपुष्टिसंयुक्ताः** ॥ १२ ॥ गृहमेधिनो यदशनीयं पक्वमपक्वं वा उपस्थितं तस्यैकदेशेन होमा बलयश्च वक्ष्यमाणाः कर्तव्याः । स्वर्गः पुष्टिश्च तेषां फलमिति ॥ १२ ॥ ***तेषां मन्त्राणामुपयोगे द्वादशाहमधश्शय्या ब्रह्मचर्यं क्षारलवणवर्जनं च** ॥ १३ ॥ तेषां होमानां बलीनां च ये मन्त्रास्तेषामुपयोगे । उपयोगो नियमपूर्वकं विद्याग्रहणम् । तत्र द्वादशाहमधश्शय्या स्थण्डिलशायित्वम् । ब्रह्मचर्यं मैथुनवर्जनम् । क्षारलवणवर्जनं च भवति । उपयोक्तुरेव व्रतम् । अध्ययनाङ्गत्वात् । अन्ये तु, पत्न्या अपीच्छन्ति उपयोगं प्रथमप्रयोगं तत्र च पत्न्या अपि सहाधिकार इति वदन्तः ॥ १३ ॥ ***उत्तमस्यैकरात्रमुपवासः** ॥ १४ ॥ उत्तमस्य 'उत्तमेन वैहायस'मिति वक्ष्यमाणस्य 'ये भूताः प्रचरन्ती'त्यस्य एकरात्रमुपवासः कर्तव्यः ॥ १४ ॥ ***बलीनां तस्यतस्य देशे संस्कारो हस्तेन परिमृज्यावोक्ष्य न्युप्य पश्चात्परिषेचनम्** ॥ १५ ॥ बलीनां मध्ये तस्यतस्य बलेर्देशसंस्कारः कर्तव्यः । कः पुनरसौ । हस्तेन परिमार्जनमवोक्षणं च । तं कृत्वा बलिं निवपति । न्युप्य पश्चात् परिषेचनं कर्तव्यम् । उपदेशक्रमादेव सिद्धे पश्चाद्ग्रहणं मध्ये गन्धमाल्यादिदानार्थमित्याहुः । 'तस्यतस्ये'ति वचनं सत्य-

पि सम्भवे सकृदेव परिमार्जनमवोक्षणं च माभूदेकस्मिन्देशे समवेतानामपि पृथक्पृथग्यथा स्यादिति ॥ १५ ॥ * **औपासने पचने वा षड्भिराद्यैः प्रतिमन्त्रं हस्तेन जुहुयात्** ॥ १६ ॥ यत्र पच्यते स पचनोऽग्निः । औपासनवतामौपासने विधुरादेः पचन इति व्यवस्थितो विकल्पः । अन्ये तु, तुल्यविकल्पं मन्यन्ते । षड्भिराद्यैः 'अग्नये स्वाहा, सोमाय स्वाहा, विश्वेभ्यो देवेभ्यस्स्वाहा, ध्रुवाय भूमाय स्वाहा, ध्रुवक्षितये स्वाहा, अच्युतक्षितये स्वाहेत्यन्तैः । एते हि मन्त्रपाठे पठिताः प्राग्विवाहमन्त्रेभ्यः विशिष्टनियमसापेक्षत्वग्रहणत्वात्तैस्सह न गृह्यन्ते । केचित् सौविष्टकृतमपि सप्तमं जुह्वति अग्नये स्विष्टकृते स्वाहेति औपसहविष्केषु तस्य सर्वत्र प्रवृत्तिरिति वदन्तः । अन्ये तु सोमाय स्वाहेति न पठन्ति । सौविष्टकृतं षष्ठं पठन्ति । हस्तग्रहणं दर्व्यादिनिवृत्त्यर्थम् ॥ १६ ॥ * **उभयतः परिषेचनं यथा पुरस्तात्** ॥ १७ ॥ उभयतः पुरस्तादुपरिष्टाच्च परिषेचनं कर्तव्यम् । कथम् । यथा पुरस्तात् उक्तं गृह्ये 'अदितेऽनुमन्यस्वेत्यादि अन्वमंस्थाः प्रासावीरिति मन्त्रसन्नाम' इति च । सामयाचारिकेषु पार्वणेनातिदेशो न प्रवर्तत इति ज्ञापितत्वादप्राप्तविधिरयम् । अन्ये तु परिसङ्ख्या मन्यन्ते । परिषेचनमेव वैश्वदेवे नान्यत्तन्त्रमिति ॥ १७ ॥ * **एवं बलीनां देशे देशे समवेतानां सकृत्सकृदन्ते परिषेचनम्** ॥ १८ ॥ यथा षण्णामाहुतीनां परिषेचनं तन्त्रमेवं बलयोऽपि य एकस्मिन् देशे समवेताः 'उत्तरैर्ब्रह्मसदने' इत्यादयस्तेषां यदन्ते परिषेचनं प्राप्तं 'पश्चात्परिषेचनम्' मित्यनेन विहितं तत्सर्वान्ते सकृत्कर्तव्यं न प्रत्येकं पृथगिति । असत्यस्मिन् सूत्रे पूर्वत्र तस्यतस्येति वचनाद्यथा परिमार्जनमवोक्षणं च प्रत्येकं पृथक्पृथग्भवति तथा परिषेचनमपि स्यात् । अत्र उपदेशादेव य एकदेशस्था बलयस्तेषामेव सकृत्परिषेचनं न याहच्छिकसमवेतानाम् । तेन यद्यप्यगारस्योत्तरपूर्वदेशश्शय्यादेशः, तथापि कामलिङ्गस्य पृथक्परिषेचनं भवति ॥ १८ ॥ * **सति सूपसंसृष्टेन कार्याः** ॥ १९ ॥ सति सूपे तत्संसृष्टा बलयः कार्याः । अन्ये त्वन्यैरपि व्यञ्जनैस्संसर्गमिच्छन्ति । तथा च बोधायनः—'काममितरेष्वायतने'ष्विति । एष एव व्यञ्जनानां संस्कारस्यापि व्यञ्जनैरपूपेन च संसृष्टेन च बलयः कार्यास्सति सम्भव इति ॥ १९ ॥ * **अपरेणाग्निं स-**

**सप्तमाष्टमाभ्यामुदगपवर्गम्** ॥ २० ॥ अपरेणाग्निमग्नेः पश्चात् । सप्तमाष्टमाभ्यां 'धर्माय स्वाहाऽधर्माय स्वाहे'त्येताभ्यां बलिहरणं कर्तव्यम् । उदगपवर्गम् । न प्रागपवर्गम् ॥ २० ॥ ***उदधानसन्निधौ नवमेन** ॥ २१ ॥ उदकं यत्र धीयते तदुदधानम् । मणिकाख्यम् । तस्य सन्निधौ नवमेन 'अद्भ्यः स्वाहे'त्यनेन ॥ २१ ॥ ***मध्येऽगारस्य दशमैकादशाभ्यां प्रागपवर्गम्** ॥२२॥ दशमैकादशाभ्यां 'ओषधिवनस्पतिभ्यः स्वाहा, रक्षोदेवजनेभ्यः स्वाहे'त्येताभ्याम् ॥ २२ ॥ ***उत्तरपूर्वे देशेऽगारस्योत्तरैश्चतुर्भिः** ॥ २३॥ अगारस्य य उत्तरपूर्वो देशस्तत्रोत्तरैश्चतुर्भिः 'गृह्याभ्यः स्वाहा, अवसानेभ्यः स्वाहा, अवसानपतिभ्यः स्वाहा, सर्वभूतेभ्यः स्वाहे'त्येतैश्चतुर्भिः प्रागपवर्गमित्येव ॥ २३ ॥

इति तृतीया खण्डिका ॥ प्र०२ प०२ ख०३ ॥

---

***शय्यादेशे कामलिङ्गेन** ॥ १ ॥ कामाय स्वाहा ॥ १ ॥ ***देहल्यामन्तरिक्षलिङ्गेन** ॥ २ ॥ देहली देहली द्वारस्याधस्ताद्दारुः । तस्या वेदिकेत्यन्ये । अन्तर्द्वारस्य च ग्रहणम् । तत्रान्तरिक्षलिङ्गेन 'अन्तरिक्षाय स्वाहे'त्यनेन ॥ २ ॥ ***उत्तरेणापिधान्याम्** ॥ ३ ॥ यनापिधीयते द्वारं साऽपिधानी कवाटम् । तदर्गलमित्यन्ये । तत्रोत्तरेण मन्त्रेण 'यदेजति जगति यच्चेष्टति नाम्नो भागो यन्नाम्ने स्वाहे'त्यनेन ॥ ३ ॥ ***उत्तरैर्ब्रह्मसदने** ॥ ४ ॥ अगारस्येत्यनुवृत्तेः । तत्र यो ब्रह्मसदनाख्यो देशः वास्तुविद्याप्रसिद्धः मध्येऽगारम् । तत्रोत्तरैर्दशभिः 'पृथिव्यै स्वाहा, अन्तरिक्षाय स्वाहा, दिवे स्वाहा, सूर्याय स्वाहा, चन्द्रमसे स्वाहा, नक्षत्रेभ्यः स्वाहा, इन्द्राय स्वाहा, बृहस्पतये स्वाहा, प्रजापतये स्वाहा, ब्रह्मणे स्वाहे'त्येतैः प्रागपवर्गमित्येव । अपर आह । ब्रह्मा यत्र सीदति गार्ह्येषु कर्मसु अग्नेर्दक्षिणतो ब्रह्मसदनं तत्रेति ॥४॥ ***दक्षिणतः पितृलिङ्गेन प्राचीनावीत्यवाचीनपाणिः कुर्यात्** ॥ ५ ॥ अनन्तराणां बलीनां दक्षिणतः पितृलिङ्गेन 'स्वधा पितृभ्य' इत्यनेन बलिं कुर्यात् । प्राचीनावीत्यवाचीनपाणिश्च भूत्वा दक्षिणपाणिमुत्तानं कृत्वा अङ्गुष्ठतर्जन्योरन्तरालेन ॥५॥ ***रौद्र उत्तरो यथा-**

**देवताभ्यः** ॥६॥ पितृबलेरुत्तरतो रौद्रबलिः कर्तव्यः । यथा देवताभ्यस्तथा प्राचीनावीत्यवाचीनपाणिरिति नानुवर्तत इत्यर्थः । 'नमो रुद्राय पशुपतये स्वाहे'ति मन्त्रः । अत्र यद्यपि पशुपतिलिङ्गमप्यस्ति, तथापि तद्रुद्रस्यैव विशेषणमिति रौद्र इति व्यपदेशो नानुपपन्नः । देवतास्मरणमपि रुद्रायेत्येव कुर्वन्ति । रुद्राय पशुपतय इत्यन्ये । केचित्तु उत्तरे मन्त्रौ रौद्रः न पशुपतिर्देवतेत्याचक्षते । तस्य देशः प्रागुदग्वा पित्र्यात् ॥६॥ ***तयोर्नाना परिषेचनं धर्मभेदात्*** ॥७॥ तयोरनन्तरोक्तयोर्बल्योरेकस्मिन् देशे समवेतयोरपि नाना पृथक् परिषेचनं कर्तव्यम् । कुतः । धर्मभेदात् पित्र्यस्याप्रदक्षिणं परिषेचनं कर्तव्यम् । इतरस्य दैवत्वात्प्रदक्षिणमिति॥७॥ ***नक्तमेवोत्तमेन वैहायसम्*** ॥८॥ उत्तमेन 'ये भूताः प्रचरन्ति नक्तं बलिमिच्छन्तो वितुदस्य प्रेष्याः । तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्दधातु स्वाहे'ति । अनेन वैहायसं बलिं दद्यात् । तच्च 'नक्तमेव वैहायसमि'ति वचनादाकाश एव बलिः न छदिपरिष्कृते देशे । तथाच बोधायनः—'अथाकाश उत्क्षिपति ये भूता प्रचरन्ती'ति । अपर आह । एवकारो भिन्नक्रमः । नक्तमुत्तमेनैव बलिरिति तत्र बल्यन्तराणां रात्रौ निवृत्तिः । अन्ये तु ऊहेन दिवा बलिं हरन्ति 'दिवाबलिमिच्छन्त' इति आश्वलायनके तथादर्शनात् । 'दिवाचारिभ्य' इति दिवा । 'नक्तं चारिभ्य' इति बलिमाकाशे उत्क्षिपेन्नक्तमिति । तथा च मनुः—'दिवाचारिभ्यो भूतेभ्यो नक्तं चारिभ्य एव च ।' इति ॥८॥ ***य एतानव्यग्रो यथोपदेशं कुरुते नित्यः स्वर्गः पुष्टिश्च*** ॥९॥ य एताननन्तरोक्तान् होमान् बलींश्च । अव्यग्रः समाहितमना भूत्वा । यथोपदेशमुपदेशानतिक्रमेण कुरुते । य इति वचनात्तस्येति गम्यते । तस्य नित्यः स्वर्गः पुष्टिश्च नित्या । 'स्वर्गपुष्टिसंयुक्ता' इति यत् पूर्वमुक्तं तस्यार्थवादताशङ्का मा भूदिति पुनर्वचनम् । पुष्टिस्वर्गौ नित्यावेव भवतः । न प्रबलैरपि कर्मान्तरैर्बाध्येते इति ॥९॥ ***अग्रं च देयम्*** ॥१०॥ बलिहरणानन्तरं अग्रं च देयं भिक्षवे ॥१०॥ ***अतिथीनेवाग्रे भोजयेत्*** ॥११॥ अतिथीन्वक्ष्यति । तानेवाग्रे भोजयेत् न स्वयं सह वा भुञ्जीत । एवमतिथिव्यतिरिक्तानन्यानपि भोजयितव्यान्

पश्चादेव भोजयेत् ॥ ११ ॥ * **बालान्वृद्धान्रोगसम्बन्धान्स्त्रीश्चान्तर्वत्नीः** ॥ १२ ॥ ये च गृहवर्तिनो बालादयः तानप्यग्र एव भोजयेत् । अन्तर्वत्नीरित्येव सिद्धे स्त्रीग्रहणं स्वस्रादीनामपि ग्रहणार्थम् । अन्तर्वत्नीग्रहणं सर्वत्र पूजार्थम् ॥ १२ ॥ * **काले स्वामिनावन्नार्थिनं न प्रत्याचक्षीयाताम्** ॥ १३ ॥ काले वैश्वदेवान्ते अन्नार्थमुपस्थितं स्वामिनौ गृहपती न प्रत्याचक्षीयाताम् । अवश्यं तस्मै किञ्चिद्देयमिति ॥ १३ ॥ अभावे किं कर्तव्यं तत्राह—* **अभावे भूमिरुदकं तृणानि कल्याणी वागित्येतानि वै सतोऽगारे न क्षीयन्ते कदाचनेति** ॥ १४ ॥ भूमिरुपवेशनयोग्या । उदकं पादप्रक्षालनादियोग्यम् । तृणानि शयनासनयोग्यानि । कल्याणी वाक् स्वागतमायुष्मन्न इहास्यतामित्यादिका । एतानि भूम्यादीनि । सतोऽगारे सतस्सत्पुरुषस्य निर्धनस्यापि गृहे कदाचिदपि न क्षीयन्ते । वैशब्दः प्रसिद्धौ । अत एव नैरुपचारः कर्तव्यः । इतिशब्दप्रयोगादेव धर्मज्ञा उपदिशन्तीति ॥ १४ ॥ * **एवंवृत्तावनन्तलोकौ भवतः** ॥ १५ ॥ यौ गृहमेधिनौ आन्नादिवृत्तौ भवतः तयोरनन्तलोका भवन्ति । ज्योतिष्टोमादिभ्योऽपि कतिपयदिनसाध्येभ्यो दुष्करमेतदान्नाद्भुतम् ॥ १५ ॥ * **ब्राह्मणायानधीयानायासनमुदकमन्नमिति देयं न प्रत्युत्तिष्ठेत्** ॥ १६ ॥ यद्यनधीयानो ब्राह्मणोऽतिथिधर्मेणागच्छेत् तदा तस्मै आसनादिकं देयम् । प्रत्युत्थानं तु न कर्तव्यम् । अस्मादेव ज्ञायते अधीयाने प्रत्युत्थानमिति ॥ १६ ॥ * **अभिवादनायैवोत्तिष्ठेदभिवाद्यश्चेत्** ॥ १७ ॥ यदि पुनरसौ अनधीयानोऽपि 'दशवर्षं पौरसख्य'-मित्यादिना अभिवाद्यो भवति तदा अभिवादनायैवोत्तिष्ठेत् ॥ १७ ॥ * **राजन्यवैश्यौ च** ॥ १८ ॥ अनधीयानावपि राजन्यवैश्यौ न प्रत्युत्तिष्ठेत् ब्राह्मणः । आसनादिकं तु देयमिति ॥ १८ ॥ * **शूद्रमभ्यागतं कर्मणि नियुञ्ज्यात्** ॥ १९ ॥ यदि शूद्रो द्विजातिं प्रत्यतिथिरागच्छति तदा तमुदकाहरणादौ कर्मणि नियुञ्ज्यात् ॥ १९ ॥ * **अथास्मै दद्यात्** ॥ २० ॥ अथ तस्मिन् कृते भोजनं दद्यात् ॥ २० ॥ * **दासा वा राजकुलादाहृत्यातिथिवच्छूद्रं पूजयेयुः** ॥ २१ ॥ अथवा यस्य गृहमेधिनो दासा

ते राजकुलादाहृत्य त शूद्रमतिथिवत्पूजयेयुः । अत एव ज्ञायते शूद्राणामतिथीना पूजार्थं व्रीह्यादिकं राज्ञा ग्रामेग्रामे स्थापयितव्यमिति ॥२१॥ *** नित्यमुत्तरं वासः कार्यम्** ॥ २२ ॥ 'उपासने गुरूणा'मित्यादिना केषुचित्कालेषु यज्ञोपवीत विहितम । इह तु प्रकरणात् गृहस्थस्य नित्यमुत्तर वासो धार्यमित्युच्यते ॥ २२ ॥ **अपि वा सूत्रमेवोपवीतार्थे** ॥ २३ ॥ अपि वा सूत्रमेव सर्वेषामुपवीतकृत्ये भवति न वास एव । तच्च 'कार्पासमुपवीत स्याद्विप्रस्योर्ध्वकृतं त्रिवृ'दिति मनूक्त द्रष्टव्यम् ॥ २३ ॥ *** यत्र भुज्यते तत्समूह्य निर्हृत्यावोक्ष्य तं देशममत्रेभ्यो लेपान सङ्कृष्याद्भिः संसृज्योत्तरतः शुचौ देशे रुद्राय निनयेदेवं वास्तु शिवं भवति** ॥ २४ ॥ यत्र स्थाने भुज्यते तत समह्य समूहन्या तत्रत्यमुच्छिष्टादिकं राशीकृत्य निर्हरेदन्यत. । निर्हृत्य त देशमवोक्षेत् । अवोक्ष्य ततोऽमत्रेभ्य. येषु पाक कृतः तान्यमत्राणि तेभ्योऽन्नलेपान् व्यञ्जनलेपाश्च सङ्कृष्य काष्ठादिनावकृष्य अद्भि. ससृजेत । ससृज्य गृहस्योत्तरत शुचौ देशे रुद्रायेदमस्त्विति निनयेत् । एव कृते वास्तु शिव समृद्ध भवतीति ॥२४॥ *** ब्राह्मणस्त्वाचार्यः स्मर्यते तु** ॥ २५ ॥ तुशब्दोऽवधारणार्थो भिन्नक्रमश्च । ब्राह्मण एव सर्वेषामाचार्य स्मर्यते धर्मशास्त्रेषु । इहापि वक्ष्यति 'स्वकर्म ब्राह्मणस्ये'त्यादि । अनुवादोऽयम ॥ २५ ॥ आपदि कल्पान्तर वक्तुं तदाह—*** आपदि ब्राह्मणेन राजन्ये वैश्ये वाध्ययनम्** ॥ २६ ॥ कर्तव्यमित्यध्याहार्यम । ब्राह्मणस्याध्यापयितुरलाभ आपत् । तत्रापदि ब्राह्मणेन राजन्ये वैश्ये वाध्ययन कर्तव्यम । न त्वनधीयानेन स्थातव्यम् । 'ब्राह्मणेने'ति वचनाद्राजन्यवैश्ययोर्नायमनुकल्प ॥ २६ ॥ *** अनुगमनं च पश्चात्** ॥ २७ ॥ अनुगमन च पृष्ठत कर्तव्य यावदध्ययनम् । पश्चाद्ग्रहण लज्जादिना कियत्यपि पार्श्वे गतिर्माभूदिति । सर्वत्र शुश्रूषाप्रसङ्गे नियम ब्राह्मणस्यानुगमनमेव शुश्रूषेति । तथा च गौतम — 'अनुगमन शुश्रूषे'ति ॥२७॥ *** तत ऊर्ध्वं ब्राह्मण एवाग्रे गतौ स्यात्** ॥२८॥ ततोऽध्ययनादूर्ध्वं समाप्तेऽध्ययने ब्राह्मण एवाग्रे गच्छेत् ॥२८॥

**इति चतुर्थी खण्डिका** ॥ प्र० २ प० २ ख० ४ ॥

* **सर्वविद्यानामप्युपनिषदामुपाकृत्यानध्ययनं तदहः** ॥१॥ कर्मणि षष्ठी । सर्वविद्या अङ्गविद्या अप्युपनिषद उपाकृत्याध्येतुमारभ्य तदहरनध्ययनं तस्मिन्नहनि अध्ययनं न कर्तव्यम् । उपनिषद्ग्रहणं प्राधान्यख्यापनार्थम् । ब्राह्मणा आयाता वसिष्ठोऽप्यायात इतिवत् ॥१॥ * **अधीत्य चाविप्रक्रमणं सद्यः** ॥२॥ अधीत्य 'वेदमधीत्य स्नास्य'न्नित्यवसरे आचार्यसकाशात् सद्यो विप्रक्रमणं न कर्तव्यं नापगन्तव्यम् । प्रायेण सकारात्परमिकारमधीयते । तत्राप्येष एवार्थः । इकारस्तु छान्दसोऽपपाठो वा ॥२॥ * **यदि त्वरेत गुरोः समीक्षायां स्वाध्यायमधीत्य कामं गच्छेदेवमुभयोः शिवं भवति** ॥३॥ यदि कार्यवशात् गन्तुं त्वरेत तदा गुरोराचार्यस्य समीक्षायां सन्दर्शने संश्रये स्वाध्यायं प्रश्नावरमधीत्य यथाकामं गच्छेत् । एवं कृते उभयोः शिष्याचार्ययोः शिवं भवतीति ॥३॥ * **समावृत्तं चेदाचार्योऽभ्यागच्छेत्तमभिमुखोऽभ्यागम्य तस्योपसङ्गृह्य न बीभत्समान उदकमुपस्पृशेत् पुरस्कृत्योपस्थाप्य यथोपदेशं पूजयेत्** ॥४॥ समावृत्तं चेत् शिष्यं कृतदारमाचार्योऽभ्यागच्छेत् अतिथिधर्मेण । तदभिमुखोऽभ्यागम्य । तस्योपसगृह्य । कर्मणि षष्ठी । तमुपसगृह्य । यद्यपि तस्य चण्डालादिस्पर्शं सम्भाव्यते । तथापि न बीभत्समान उदकमुपस्पृशेत न स्नायात् । उपसंग्रहणे वा धूलिधूसरौ पादौ स्पृष्ट्वा न बीभत्समान उदकमुपस्पृशेत् । ततस्तं पुरस्कृत्य गृहप्रवेशे अग्रे कृत्वा । पूजामासनान्युपस्थाप्य यथोपदेशं गृह्योक्तेन मार्गेण मधुपर्केण पूजयेत् । पूजाविधानं गृह्योक्तस्यानुवादः ॥४॥ आसनादिषु विशेषं वक्तुं तदाह— * **आसने शयने भक्ष्ये भोज्ये वाससि वा सन्निहिते निहीनतरवृत्तिः स्यात्** ॥५॥ सन्निहिते आचार्ये तस्मिन्नेव गृहे अपवरकादिकं प्रविष्टे आसनादिषु निहीनतरवृत्तिः स्यात् । तदनिर्देशात् नीच आसने गुणतोऽपि निकृष्टे आसीत । एवं शयनादिष्वपि द्रष्टव्यम् ॥५॥ * **तिष्ठन् सव्येन पाणिनानुगृह्याचार्यमाचामयेत्** ॥६॥ तिष्ठन्निति प्रह्व उच्यते । स्थानयोगात् । न हि साक्षात्तिष्ठन्नाचमयितुं प्रभवति । सव्येन पाणिना करकादिकमनुगृह्याभ

स्ताद्गृहीत्वा इतरेण द्वारमवमृश्येत्यर्थसिद्धत्वादनुक्तम् । एवं कृत्वाचार्यमाचमयेत् स्वयमेव शिष्यः । एवं हि स सम्मतो भवति । आचार्ये प्रकृते पुनराचार्यग्रहणमातिथ्यादन्यत्रापि आचार्यमाचमयन्नेवमाचमयेदिति ॥ ६ ॥ * **अन्यं वा समुदेतम्** ॥ ७ ॥ वाशब्दः समुच्चये । अन्यमप्येवमेवाचमयेत् । स चेत् समुदेतः कुलशीलवृत्तविद्यावयोभिरुपेतो भवति ॥ ७ ॥ * **स्थानासनचंक्रमणस्मितेष्वनाचिकीर्षेन्** ॥ ८ ॥ व्यवहितमपि स्यादित्यपेक्षते । चिकीर्षया करणं लक्ष्यते । स्थानादिष्वाचार्यस्य पश्चाद्भावी स्यात् । न पूर्वभावी । न युगपद्भावी ॥ ८ ॥ ***सन्निहिते मूत्रपुरीषवातकर्मोच्चैर्भाषाहासष्ठीवनदन्तस्कवननिःशृङ्खणभ्रुक्षेपणतालननिष्ठ्यानीति** ॥९॥ वातकर्म अपानवायोरुत्सर्गः । उच्चैर्भाषा महता स्वरेण सम्भाषणम् । केनापि हासो हसनम् । ष्ठीवनं श्लेष्मादिनिरसनम् । दन्तस्कवनं दन्तमलापकर्षणम् । परस्परघट्टनमित्यन्ये । निःशृङ्खणं नासिकामलनिस्सारणम् । भ्रुक्षेपणं भ्रूविक्षेपः । छान्दसो ह्रस्वः । तालनं हस्तयोरास्फालनम् । निष्ठ्यमङ्गुलिस्फोटनम् । इतिशब्दादन्यदपि स्वैरासनादिकं वर्जयेदित्यपेक्ष्यते । एतानि मूत्रकर्मादीनि आचार्यस्य सन्निधौ न कुर्यादिति ॥ ९ ॥ ***दारे प्रजायां चोपस्पर्शनभाषा विस्रम्भपूर्वाः परिवर्जयेत्** ॥१०॥ उपस्पर्शनमालिङ्गनाघ्राणादि । भाषा सम्भाषाश्चाटुप्रभृतयः । एता अप्याचार्ये सन्निहिते दारे प्रजाविषयेऽपि विस्रम्भं न कुर्यात् । ज्वरादिपरीक्षायां न दोषः ॥१०॥ ***वाक्येन वाक्यस्य प्रतिघातमाचार्यस्य वर्जयेच्छ्रेयसां च** ॥११॥ आचार्यवाक्यस्य समीचीनस्येतरस्य वा आत्मीयेन वाक्येन तादृशेन प्रतिघातं न कुर्यात् । श्रेयसां च अन्येषामपि प्रशस्ततराणां वाक्यं वाक्येन न प्रतिहन्यात् ॥११॥ ***सर्वभूतपरीवादाक्रोशांश्च** ॥१२॥ सर्वेषामपि भूतानामपि तिरश्चाम् । परीवादान् दोषवादान् । आक्रोशान् अश्लीलवादांश्च वर्जयेत् । परीवादस्य पुनःपुनर्वचनमतिशयेन वर्जनार्थम् ॥१२॥ * **विद्यया च विद्यानाम्** ॥१३॥ परीवादाक्रोशान् वर्जयेत् । ऋग्वेद एव श्रोत्रसुखः । अन्ये श्रवणकटुका इति परीवादाः । तैत्तिरीयमुच्छिष्टशाखा याज्ञवल्क्यादिब्राह्मणादिरिदानीन्तन इत्याद्या-

क्रोशः ॥१३॥ ***यया विद्यया न विरोचेत पुनराचार्यमुपेत्य नियमेन साधयेत् ॥१४॥** यया विद्ययाऽधीतया श्रुतया वा न विरोचेत यशस्वी स्यात्तामित्यर्थाद्गम्यते । तां विद्यां पुनःसाधयेत् । यथा सम्यक् सिद्धा भवति तथा कुर्यात् । कथम् ? आचार्यं तमेवान्यं वा उपेत्य उपसाद्य । नियमेनापूर्वाधिगमे विद्यार्थस्य यो नियम उक्तः तेन शुश्रूषादिना अस्मिन्विषये अध्यापयितुर्नियमः ॥१४॥ ***उपाकरणाद्योत्सर्जनादध्यापयितुर्नियमो लोमसंहरणं मांसं श्राद्धं मैथुनमिति वर्जयेत् ॥१५॥** लोमसंहरणं लोमवापनम् । इदमनाहिताग्निविषयम् । आहिताग्नेस्तु 'अप्यल्पशो लोमानि वापयेत' इति वाजसनेयकम् ॥१५॥***ऋत्वे वा जायाम् ॥१६॥** ऋतुकाले वा जायामुपेयात् । स्त्रीणामृतुदिनानि षोडश तत्र भवः कालः ऋत्व्यः ; भावे छन्दसीति यत्प्रत्यये ऋत्वव्वास्येति यणादेशसूत्रेऽणादेशो निपातितः । ऋत्व्य इति रूपसिद्धिः । अत्र यलोपश्छान्दसः । चातुर्मास्येषु प्रयुक्तमृत्वे वा जाया नोपर्यास्त इति यथा स्यात् ॥१६॥ ***यथागमं शिष्येभ्यो विद्यासम्प्रदाने नियमेषु च युक्तः स्यादेवं वर्तमानः पूर्वापरान् सम्बन्धानात्मानं च क्षेमे युनक्ति ॥१७॥** येन प्रकारेणागमः पाठार्थयोः तथैव शिष्येभ्यो निमत्सरेण विद्या सम्प्रदेया । एवंभूते विद्यासम्प्रदाने युक्तो विहितः स्यात् । ये च गृहस्थस्य नियमा अध्यापने अन्यत्र च तेष्वपि युक्तः स्यात् । एवं युक्तो वर्तमानः पूर्वान् पितृपितामहप्रपितामहान् । अपरांश्च पुत्रपौत्रनप्तॄन् । सम्बन्धान् । कर्मणि षष्ठी ; सम्बन्धिनः पुरुषान् । आत्मानं च क्षेमे अभये स्थाने नाकस्य पृष्ठे युनक्ति स्थापयति ॥१७॥ ***मनसा वाचा प्राणेन चक्षुषा श्रोत्रेण त्वक्छिश्नोदरारम्भणानास्रावान् परिवृञ्जानोऽमृतत्वाय कल्पते॥१८॥** ये. पुरुष अस्त्राव्यन्ते बहिराकृष्यन्ते । आस्रावाः शब्दादयो विषयाः । ते विशेष्यन्ते त्वक्छिश्नोदरारम्भणान् आरभ्यन्ते आलम्ब्यन्त इत्यारम्भणाः । तत्र त्वगालम्बनाः स्रक्चन्दनादयः । शिश्नालम्बनः स्त्र्युपभोगः । उदरालम्बना अभोज्या अभक्ष्यादयः । उपलक्षणं त्वगादिग्रहणम् । एवंभूतानास्रावान् मनआदिभिः पञ्चभिरिन्द्रियैः परिवृञ्जानः सर्वतो वर्जयन् । अ

मृतत्वाय मोक्षाय । कल्पते । तत्र वागिति रसनेन्द्रियम् । प्राण इति घ्राणम् ॥ १८॥

इति पञ्चमी खण्डिका ॥ प्र० २ प० २ ख० ५ ॥
इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्,
उज्ज्वलायां द्वितीयप्रश्ने द्वितीयः पटलः ॥२॥

---

* **जात्याचारसंशये धर्मार्थमागतमग्निमुपसमाधाय जातिमाचारं च पृच्छेत् ॥१॥** अविज्ञातपूर्वो यो धर्मार्थमध्ययनार्थमागच्छेत् उपसीदेत् । उपसन्नोऽस्मि भगवन्मैत्रेण चक्षुषा पश्य शिवेन मनसानुगृहाण प्रसीद मामध्यापयेति । तस्य जात्याचारसंशये सति । अग्निमुपसमाधाय यत्र क्वचाग्निमित्याद्यन्यदुपदध्यादित्यन्तं कृत्वा । तत्सन्निधौ जातिमाचारं च पृच्छेत् किंगोत्रोऽसि सौम्य किमाचारश्चरसीति ॥१॥ * **साधुतां चेत्प्रतिजानीतेऽग्निरुपद्रष्टा वायुरुपश्रोताऽऽदित्योऽनुख्याता साधुतां चेत्प्रतिजानीते साध्वस्मा अस्तु वितथ एष एनस इत्युक्त्वा शास्तुं प्रतिपद्येत॥२॥** स चेत्साधुतां प्रतिजानीते साधुजन्मास्म्यमुष्य पुत्रोऽमुष्य पौत्रोऽमुष्य नप्ता साध्वाचारश्चास्मि पित्रैवोपानेषि शिक्षिताचारश्चास्मि सम्यक्चावार्तिषि विधिबलेन तु बाल्य एव सर्वे दिष्टां गतिं गता एतस्मात्केवलमनधीतवेद इति ततोऽग्निरुपद्रष्टेत्यादिकं मन्त्रमुक्त्वा शास्तुं शासितुमध्यापयितुं धर्मांश्चोपदेष्टुं प्रतिपद्येत उपक्रमेत ॥२॥ पञ्चयज्ञान्ते 'अतिथीनेवाग्रे भोजये'दित्युक्तम् । तत्सर्वप्रकारं वक्तुं तस्यावश्यकर्तव्यतामनेनाह—
* **अग्निरिव ज्वलन्नतिथिरभ्यागच्छति ॥३॥** अतिथिर्गृहानभ्यागच्छन्नग्निरिव ज्वलन्नभ्यागच्छति तस्मादसौ भोजनादिभिरवश्यं तर्पयितव्यः । निराशस्तु गतो गृहान् दहेदिति ॥ ३ ॥ इदानीमतिथिलक्षणं वक्तुं तदुपयोगिश्रोत्रियलक्षणमाह— * **धर्मेण वेदानामेकैकां शाखामधीत्य श्रोत्रियो भवति ॥४॥** विद्यार्थस्य यो नियमः स धर्मः । तेन वेदानां याङ्काञ्चन शाखामधीत्य श्रोत्रियो भवति । पुरुषस्य हि प्रतिवेदमेकैका शाखा भवति या पूर्वैः परिगृहीता अध्ययनानुष्ठानाभ्यां सा प्रतिवेदं स्वशाखा ता

मधीत्य श्रोत्रियो भवति न तु प्रतिवेदमेकैकामधीत्य श्रोत्रियो भवतीति। लोकविरोधात्। लोके हि यां कांचनैकां शाखामधीयानः श्रोत्रिय इति प्रसिद्धः ॥४॥ अतिथिलक्षणमाह—***स्वधर्मयुक्तं कुटुम्बिनमभ्यागच्छति धर्मपुरस्कारो नान्यप्रयोजनः सोऽतिथिर्भवति** ॥५॥ आदितो यच्छब्दो द्रष्टव्यः। अन्ते स इति दर्शनात्। मध्ये च श्रोत्रियलक्षणोपदेशात्। तदुपजीवनेन सूत्रं योज्यम्। यः श्रोत्रियः स्वधर्मयुक्तं स्वधर्मनिरतम्। कुटुम्बिनं भार्यया सह वसन्तं गृहस्थम्। आश्रमान्तरनिरासार्थमिदमुक्तम्। न हि ते पचमाना भवन्ति। भिक्षवो हि ते। अभ्यागच्छति उद्दिश्यागच्छति। धर्मपुरस्कारः आचार्याद्यर्थं भिक्षणं धर्मं न पुरस्करोतीति धर्मपुरस्कारः। कर्मण्यण्। धर्मप्रयोजनः। य एवंभूत एवंभूतमुद्दिश्यागच्छति नान्नेच्छया सोऽतिथिरिति ॥५॥ ***तस्य पूजायां शान्तिः स्वर्गश्च** ॥६॥ तस्यातिथेः पूजायां कृतायां शान्तिरुपद्रवाणामिह भवति प्रेत्य च स्वर्गलाभः ॥६॥ ***तमभिमुखोऽभ्यागम्य यथावयस्समेत्य तस्यासनमाहारयेत्** ॥७॥ तमतिथिमभिमुखोऽभ्यागच्छेत्। अभ्यागम्य यथावयः वयसोऽनुरूपं प्रत्युत्थायाभिवादनादिना समेयात् सङ्गच्छेत्। समेत्य च तस्यासनमाहारयेत् शिष्यादिभिः। अभावे स्वयमाहरेत् ॥७॥ ***शक्तिविषये नाबहुपादमासनं भवतीत्येके** ॥८॥ शक्तौ सत्यां अबहुपादमासनं न देयम्। किं तु बहुपादमेव पीठादिकमित्येके मन्यन्ते। स्वमतं तु बहुपादमपीति ॥८॥ ***तस्य पादौ प्रक्षालयेच्छूद्रमिथुनावित्येके** ॥९॥ द्वौ शूद्रौ तस्य पादौ प्रक्षालयेतामित्येके मन्यन्ते। दासवत इदम्। बोधायनस्तु, श्रान्तो दृष्टपूर्वः केवलमन्नार्थी नान्नप्रयोजनो वेत्यातिथिर्भवति। अथ वा सर्ववर्णानामन्यतमः काले यथोपपन्नः सर्वेषामतिथीनां श्रेष्ठोऽतिथिर्भवतीति ॥९॥ अत्र विशेषः—***अन्यतरोऽभिषेचने स्यात्** ॥१०॥ अभिषेचनं करकादिना जलावसेकः। तमेकः कुर्यात्। इतरः प्रक्षालनम् ॥१०॥ ***तस्योदकमहारयेन्मृण्मयेनेत्येके** ॥११॥ मृण्मयेन पात्रेण तस्योदकमाहर्तव्यमित्येके मन्यन्ते। स्वमतं तु तैजसेन ॥११॥ ***नोदकमहारयेदसमावृत्तः** ॥१२॥ यदा असमावृत्तो ब्रह्मचारी आचार्यप्रेषितः स्वयमेव वा अतिथिरभ्यागच्छति तदानासावुदकमाहारयेत् तदा नासा-

वुदकाहरणस्य प्रयोजकः । नास्माउदकमाहर्तव्यमिति ॥ १२॥ * **अध्ययनसांवृत्तिश्चात्राधिका** ॥१३॥ अत्र असमावृत्तेऽतिथौ अध्ययनसंवृत्तिश्चाधिका इतरस्मादतिथेः । अध्ययनस्य सह निष्पादनमध्ययनसवृत्तिः । यःप्रदेशस्तस्यागच्छति स तेन सह कियन्तश्चित्कालं वक्तव्य इति । प्रसिद्धे तु पाठे पूर्वपदान्तस्य समोऽकारस्य छान्दसो दीर्घः ॥ १३॥ ***सान्त्वयित्वा तर्पयेद्रसैर्भक्ष्यैरद्भिरवरार्ध्येनेति** ॥१४॥ तत्पादप्रक्षालनस्य समध्ययनस्य वानन्तरमतिथिं प्रियवचनेन सान्त्वयेत् । सान्त्वयित्वा गव्यादिभीरसैः फलादिभिश्च भक्ष्यैरन्ततोऽद्भिरपि तावत्तर्पयेत् । 'अवरार्ध्येने'ति जघन्यता सूचयति । अल्पन्तत इत्यर्थः । इतिशब्दादेवमादिभिरन्यैरपि ॥ १५ ॥ ***आवसथं दद्यादुपरिशय्यामुपस्तरणमुपधानं सावस्तरणमभ्यञ्जनं चेति** ॥१५॥ आवसथो विश्रामस्थानम् । उपरिशय्या खट्वा । उपस्तरणं तूलिका । उपधानमुपबर्हणम् । अवस्तरणमुपरिपटः । तत्सहितमुपधानमुपस्तरणं च । अभ्यञ्जनं पादयोः तैलं घृतं वा एतत्सर्वं दद्यात् । भोजनात्प्रागूर्ध्वं वा अपेक्षिते काले । इतिशब्दादन्यदप्यपेक्षितम् ॥ १५॥ * **अन्नसंस्कर्तारमाहूय व्रीहीन् यवान्वा तदर्थान्निर्वपेत्** ॥१६॥ यः पचति तमन्नसंस्कर्तारमाहूय तदर्थानतिथ्यर्थान् व्रीहीन्यवान्वा निर्वपेत् पृथक्कृत्य दद्यात् । अमुष्मै पचेति । व्रीहियवग्रहणमुपलक्षणम् । इदं भुक्तवत्सु सर्वेष्वतिथावुपस्थिते द्रष्टव्यम् ॥ १६ ॥ भोजनकाले त्वाह—***उद्धृतान्यन्नान्यवेक्षेतेदं भूया३ऽऽ इद३ऽऽमिति** ॥१७॥ यावन्तो भोक्तारस्तावद्धा अन्नान्युद्धृत्य पृथक्पात्रेषु कृत्वा स्वयं संविभागं कृत्वा तान्यन्नान्यवेक्षेत किमिदं भूयः प्रभूतमिदं वेति विचारे प्लुतिः । पूर्वं तु भाषायामित्येतदापेक्षितम् । छान्दसोऽयं प्रयोग इति ॥ १७॥ ***भूय उद्धरेत्येव ब्रूयात्** ॥१८॥ एवमवेक्ष्यातिथ्यर्थं भूय उद्धरेत्येव ब्रूयात् ॥ १८॥ * **द्विषन्द्विषतो वा नान्नमश्नीयाद्दोषेण वा मीमांसमानस्य मीमांसितस्य वा** ॥१९॥ यं स्वयमतिथिर्द्विषन्भवति यो वात्मानं द्वेष्टि यो वा त्मानं दोषेण मीमांसते आत्मनि स्तेयादिदोषं सम्भावयति यो वा दोषेण मीमांसितः यत्र लौकिका दोषं सम्भावयन्ति । तस्यास्य सर्वस्यान्नं नाश्नीयात् ॥ १९॥ अत्र हेतुः—***पाप्मानं हि स तस्य भक्षयतीति विज्ञायते** ॥२०॥ य-

एवंविधस्यान्नमश्नाति, स तस्य पाप्मानमेव भक्षयतीति विज्ञायते ॥२०॥
इति षष्ठी खण्डिका ॥ प्र०२ प०३ ख०६ ॥

***स एष प्राजापत्यः कुटुम्बिनो यज्ञो नित्यप्रततः** ॥१॥ स एषोऽभिहितो मनुष्ययज्ञः प्राजापत्यः प्रजापतिना दृष्टः तद्देवत्यो वा । कुटुम्बिनो यज्ञो नित्यप्रततो, नाग्निष्टोमादिवत् कादाचित्कः ॥१॥ तस्याग्नीन् सम्पादयति --- ***योऽतिथीनामग्निः स आहवनीयो यः कुटुम्बे स गार्हपत्यो यस्मिन्पच्यन्ते सोऽन्वाहार्यपचनः** ॥२॥ योऽतिथीनां जाठरोऽग्निः स एवाहवनीयः । तत्र हि हूयते । यः कुटुम्बे गृहे अग्निरौपासनः स गार्हपत्यः, नित्यधार्यत्वात् । यस्मिन् पच्यते भ्राष्ट्राग्नौ सोऽन्वाहार्यपचनः दक्षिणाग्निः । तत्र ह्यन्वाहार्यं पच्यते ॥२॥***ऊर्जं पुष्टिं प्रजां पशूनिष्टापूर्तमिति गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति** ॥३॥ यः अतिथेः पूर्वमश्नाति, स गृहाणां कुलस्य सम्बन्धि ऊर्जादिकमश्नाति भक्षयति विनाशयति । ऊर्गन्नम् । इष्टमग्निहोत्रादि । पूर्तं स्मार्तं कर्म कूपखातादि । अन्ये प्रसिद्धाः ॥३॥ ***पयउपसेचनमन्नमग्निष्टोमसम्मितं सर्पिषोक्थ्यसम्मितं मधुनातिरात्रसम्मितं मांसेन द्वादशाहसम्मितमुदकेन प्रजावृद्धिरायुष्यं च** ॥४॥ पय उपसेचनं यस्य तदन्नमग्निष्टोमतुल्यम् । सर्पिषा उपसिक्तमिति प्रकरणाद्गम्यते । मांसेन सह दत्तम् । उदकेन सह दत्तेन प्रजावृद्धिर्भवति । आयुषश्च वृद्धिः । उपसमस्तमपि । वृद्धिरिति सम्बध्यते ॥४॥ ***प्रियाप्रियाश्चातिथयः स्वर्गं लोकं गमयन्तीति विज्ञायते** ॥५॥ अप्रिया उदासीनाः । द्विषतो निषिद्धत्वात् ॥५॥ ***स यत्प्रातर्मध्यंदिने सायमिति ददाति सवनान्येव तानि भवन्ति** ॥६॥ त्रिषु कालेषु दीयमानान्यन्नानि अस्य यज्ञस्य प्रातस्सवनादीनि त्रीणि भवन्ति । तस्मात्सर्वेषु कालेषु दातव्यमिति ॥६॥ ***यदनुतिष्ठत्युदवस्यत्येव तत्** ॥७॥ यत् गन्तुमुत्तिष्ठन्तमतिथिमनूत्तिष्ठति तदुदवस्यत्येव उदवसानीयस्य यज्ञस्येति । प्रायेणोच्छब्दं न पठन्ति । केवलमनुशब्दमेव पठन्ति । तत्राप्यर्थः स एव ॥७॥ ***यत्सान्त्वयति सा दक्षिणा प्रशंसा** ॥८॥ यत्सान्त्वयति प्रशमति सा प्रशंसा दक्षिणा ॥८॥

*** यत्संसाधयति ते विष्णुक्रमाः** ॥ ९ ॥ संसाधनमनुव्रजनम् ॥९॥ *** यदुपावर्तते सोऽवभृथः** ॥ १० ॥ उपावर्तनम् अनुव्रज्य प्रत्याव्रजनम् ॥ १० ॥ *** इति ब्राह्मणम्** ॥ ११ ॥ इति ब्राह्मणमित्यस्य सर्वेण सम्बन्धः ॥११॥ ***राजानं चेदतिथिरभ्यागच्छेच्छ्रेयसीमस्मै पूजामात्मनः कारयेत्** ॥ १२ ॥ राजा अभिषिक्तः क्षत्रियः । सोऽतिथयेऽभ्यागताय आत्मनोऽपि सकाशात् श्रेयसीं पूजां कारयेत् पुरोहितेन ॥१२॥ ***आहिताग्निं चेदतिथिरभ्यागच्छेत्स्वयमेनमभ्युदेत्य ब्रूयाद्व्रात्य क्वावात्सीरिति व्रात्योदकमिति व्रात्य तर्पयन्त्स्त्वति** ॥१३॥ यद्याहिताग्निमुद्दिश्यातिथिरागच्छेत्, तत एनमतिथिं स्वयमेवाभिमुख उपसर्पेत् । अत्र स्वयमिति वचनादनाहिताग्निरन्येन शिष्यादिनाकारयन्नपि न दुष्यति । अभ्युदेत्य ब्रूयात् । व्रात्य क्वावात्सीरिति कुशलप्रश्नः । व्रतं साधुव्रत्यं । स एव व्रात्य इति पूजाभिधानम् । क्वपूर्वस्यां रात्र्यामुषितवानसीति । व्रात्योदकमित्युदकदानम् । व्रात्य तर्पयन्त्स्त्वति रसादिभिस्तर्पयति । अनुस्वारसकारौ छान्दसौ । क्रियाभेदात्प्रतिमन्त्रमितिशब्दः । एतत्सर्वेषु कालेषु कर्तव्यम् ॥१३॥ *** पुराग्निहोत्रस्य होमादुपांशु जपेद्व्रात्य यथा ते मनस्तथास्त्वति व्रात्य यथा ते वशस्तथास्त्वति व्रात्य यथा ते प्रियं तथास्त्वति व्रात्य यथा ते निकामस्तथास्त्वति** ॥१४॥ स यदि होमकालेऽप्यासीत, तदा पुरा होमादपरेणाग्निं दर्भेषु सादयित्वा व्रात्य यथा ते मन इत्यादिमन्त्रानुपांशु जपन् ब्रूयात् । तत्र प्रतिमन्त्रमितिशब्दप्रयोगादर्थप्रयोगादर्थभेदाच्चतुर्णां विकल्पः । समुच्चय इत्यन्ये । अत्र चाध्वर्युर्यजमानो वा यो होता, स जपेत् ततो जुहुयात् ॥ १४ ॥ ***यस्योद्धृतेष्वहुतेष्वग्निष्वतिथिरभ्यागच्छेत्स्वयमेनमभ्युदेत्य ब्रूयात् व्रात्यातिसृज होष्यामीत्यातिसृष्टेन होतव्यमनतिसृष्टं चेज्जुहुयाद्दोषं ब्राह्मणमाह** ॥१५॥ उद्धृतेष्विति बहुवचनं सभ्यावसथ्यापेक्षम् । यस्याग्नयस्त्रय, तस्याहुतेष्वित्यनेन सामानाधिकरण्यात् । होमोऽपि त्रिष्वपि भवति । तेनाहवनीयहोमानन्तरमतिथावागतेऽपि त्रिषु होमा न कृता इति वक्ष्यमाणो विधिर्भवत्येव । कः पुनरसौ स्वयमेनमभ्युदेत्य ब्रूयात् । व्रात्यातिसृजानुजानीहि होष्यामीति ततो जु

हुयेत्यतिसृजेत् । अतिसृष्टेन होतव्यम् । यदि पुनरनतिसृष्टोऽननुज्ञातो जुहुयात्, तस्य दोष ब्राह्मणवाक्यमाह । तत्र पठितं प्रत्येतव्यम् । अत्र पक्षे स्वयं होमो नियत ॥१५॥ *एकरात्रं चेदतिथीन्वासयेत्पार्थिवाँल्लोकानभिजयति द्वितीययान्तरिक्ष्यांस्तृतीयया दिव्यांश्चतुर्थ्या परावतो लोकानपरिमिताभिरपरिमिताँल्लोकानभिजयतीति विज्ञायते ॥१६॥ य एकां रात्रिमतिथीन् गृहे वासयति, स पृथिव्या भवान् लोकानभिजयति । द्वितीयया रात्र्या आन्तरिक्ष्यान् । तृतीयया दिव्यान् । चतुर्थ्या परावतः सुखस्य परमात्रा येषु लोकेषु तानभिजयति । अपरिमिताभीरात्रिभिरपरिमितान् लोकानिति विज्ञायते ब्राह्मणे भवति ॥१६॥ *असमुदेतश्चेदतिथिर्ब्रुवाण आगच्छेदासनमुदकमन्नं श्रोत्रियाय ददामीत्येव दद्यादेवमस्य समृद्धं भवति ॥१७॥ विद्यादिभीरहितोऽसमुदेत । स चेदतिथिरिति ब्रुवाण आगच्छेत्तदा तस्मै आसनादिकं श्रोत्रियायैव ददामीत्येव मनसि कृत्वा दद्यात् । एवं ददतोऽस्य दानं समृद्धं भवति श्रोत्रियायैव दत्तं भवति ॥१७॥

इति सप्तमी खण्डिका ॥ प्र०२ प०३ ख०७ ॥

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्

उज्ज्वलायां द्वितीयप्रश्ने तृतीयः पटलः ॥३॥

---

*येन कृतावसथः स्यादतिथिर्न तं प्रत्युत्तिष्ठेत्प्रत्यवरोहेद्वा पुरस्ताच्चेदभिवादितः ॥१॥ येन गृहस्थेन अतिथि कृतावसथः स्यात् कृतवास उक्तवासः स्यात् द्वितीययान्तरिक्ष्यानित्यादिवचनात् द्वितीयादिष्वहस्सु तं प्रति न प्रत्युत्तिष्ठेत् । नाप्यासनात् प्रत्यवरोहेत् । स चेत्तस्मिन्नहनि पूर्वमेवाभिवादितः । अनभिवादिते तु अभिवादनाय प्रत्युत्तिष्ठेत् । प्रत्यवरोहेच्च ॥१॥ *शेषभोज्यतिथीनां स्यात् ॥२॥ अतिथीनेवाग्रे भोजयेदित्येव सिद्धे वचनमिदं प्रमादाद्यदत्तमतिथये, तन्न भुञ्जीतेत्येवमर्थम् ॥२॥ *न रसान गृहे भुञ्जीतानवशेषमतिथिभ्यः ॥३॥ आगामिभ्योऽतिथिभ्यो यथा न किञ्चित् गृहेऽवशिष्यते, तथा गव्यादयो रसा न भोज्या इति । सद्य सम्पादयितुमशक्यत्वाद्रसेषु गृहस्थस्य ॥३॥ *ना-

**त्मार्थमभिरूपमन्नं पाचयेत्** ॥ ४ ॥ आत्मानमुद्दिश्याभिरूपमन्नं स्वाद्वपूपादि न पाचयेत ॥ ४ ॥ **गोमधुपर्कार्हो वेदाध्यायः** ॥ ५ ॥ साङ्गस्य वेदस्याध्येता वेदाध्यायः । सोऽतिथिर्मधुपर्कमर्हति गां च दक्षिणाम् ॥ ५ ॥ ***आचार्य ऋत्विक्स्नातको राजा वा धर्मयुक्तः** ॥ ६ ॥ अवेदाध्याया अप्याचार्यादयो मधुपर्कार्हाः । अत एव ज्ञायते एकदेशाध्यायिनावप्यृत्विगाचार्यौ भवत इति । धर्मयुक्त इति राज्ञो विशेषणम् । वाशब्दः समुच्चये ॥ ६ ॥ ***आचार्यायर्त्विजे श्वशुराय राज्ञ इति परिसंवत्सरादुपतिष्ठद्भ्यो गौर्मधुपर्कश्च** ॥ ७ ॥ एतत् गृह्ये व्याख्यातम् । गौरत्र दक्षिणाधिका विधीयते ॥ ७ ॥ कोऽसौ मधुपर्क इत्यत आह— ***दधिमधुसंसृष्टं मधुपर्कः पयो वा मधुसंसृष्टम्** ॥ ८ ॥ गृह्योक्तस्यानुवादोऽयम् । उत्तरविवक्षया ॥ ८ ॥ ***अभाव उदकम्** ॥ ९ ॥ दधिपयसोरलाभ उदकमपि देयम् । मधुसंसृष्टमित्येके । नैतत् । पूर्वत्र पुनर्मधुसंसृष्टग्रहणात् ॥ ९ ॥ वेदाध्याय इत्यत्र विवक्षितं वेदमाह—***षडङ्गो वेदः** ॥ १० ॥ षड्भिरङ्गैर्युक्तोऽत्र वेदो गृह्यत इति ॥ १० ॥ कानि तान्यङ्गानीत्यत आह—***छन्दःकल्पो व्याकरणं ज्योतिषं निरुक्तं शीक्षा छन्दोविचितिरिति** ॥ ११ ॥ छन्दो वेदः । तत्कल्पयति प्रतिशाखं शाखान्तराधीतेन न्यायप्राप्तेन चाङ्गकलापेन उपेतस्य कर्मणः प्रयोगकल्पनयोपस्कुरुत इति च्छन्दःकल्पः कल्पसूत्राणि । व्याकरणम् अर्थविशेषमाश्रित्य पदमन्वाचक्षाणं पदपदार्थप्रतिपादनेन वेदस्योपकारकं विद्यास्थानम् । सूर्यादीनि ज्योतींष्यधिकृत्य प्रवृत्तं शास्त्रं ज्योतिषम् । आदिवृद्ध्यभावे यत्नः कार्यः । तदप्यध्ययनोपयोगिनमनुष्ठानोपयोगिनं च कालविशेषं प्रतिपादयदुपकारकम् । निरुक्तमपि व्याकरणस्यैव कार्यम् । शीक्षा वर्णानां स्थानप्रयत्नादिकमध्ययनकाले कर्माणि च मात्राणामुच्चारणप्रकारं शिक्षयतीति । पृषोदरादित्वाद्दीर्घः । गायत्र्यादीनि च्छन्दांसि यथा विधीयन्ते विविच्य ज्ञायन्ते, सा छन्दोविचितिः । एतान्यङ्गानि अङ्गवत्त्वादङ्गत्वम् । 'मुखं व्याकरणं तस्य ज्योतिषं नेत्रमुच्यते । निरुक्तं श्रोत्रमुद्दिष्टं छन्दांसि विचितिः पदे ॥ शीक्षा घ्राणं तु वेदस्य हस्तौ कल्पान्प्रचक्षते ।' इ-

ति ; उपकारकत्वाच्चोक्त उपकार ॥ ११ ॥ अत्र चोदयति—***शब्दार्थारम्भाणां तु कर्मणां समाम्नायस्समाप्तौ वेदशब्दस्तत्र सङ्ख्या विप्रतिषिद्धा ॥ १२ ॥** शब्दार्थतया यान्यारभ्यन्ते न प्रत्यक्षादिप्रमाणगोचरतया, तानि शब्दार्थारम्भणानि कर्माण्यग्निहोत्रादीनि । तेषां समाम्नाय उपदेशः । तस्य समाप्तौ यावता ग्रन्थजातेन समाप्तोऽनुष्ठानपर्यन्तो भवति, तत्र वेदशब्दो वर्तते । वेदयति धर्मं विन्दत्यनेनेति वा धर्ममिति । न च मन्त्रब्राह्मणमात्रेणानुष्ठानपर्यन्त उपदेशो भवति ; किं तु कल्पसूत्रैरपि सह । ततश्च तेषामपि वेदस्वरूपत्वानुवेशात् पञ्चैवाङ्गानि । तत्षट्सङ्ख्या विप्रतिषिद्धेति ॥ १२ ॥ परिहरति—***अङ्गानां तु प्रधानैरव्यपदेश इति न्यायवित्समयः ॥ १३ ॥** अङ्गान्येव कल्पसूत्राणि न वेदस्वरूपाणि । पौरुषेयतास्मरणात् । कतिपयान्येव तेषु ब्राह्मणवाक्यानि भूयिष्ठानि स्ववाक्यानि । अङ्गानां च तेषां प्रधानवाचिभिश्शब्दैः छन्दो वेदो ब्राह्मणमित्यादिभिर्व्यपदेशो न न्याय्य इति न्यायविदां सिद्धान्तः । ताविमौ पूर्वपक्षसिद्धान्तौ कल्पसूत्राधिकरणे स्पष्टौ द्रष्टव्यौ । यत्तूक्तं न मन्त्रब्राह्मणमात्रेण पूर्ण उपदेश इति । तेष स्याणोरपराधः । यदेनमन्धो न पश्यतीति पुरुषापराधस्सम्भवति। इदं तु भवानाचष्टां कल्पसूत्रकाराणामिव प्रयोगकल्पना कुतोऽस्मीति । न्यायोपबृंहिताभ्यां मन्त्रब्राह्मणाभ्यामिति वक्तव्यम् । नान्या गतिः । एवं सति भवानपि यततां तादृशमस्याभिति । ततो मन्त्रब्राह्मणाभ्यामेव पूर्णमवभोत्स्यत इति ॥ १३ ॥ ***अतिथिं निराकृत्य यत्रगतं भोजनं स्मरेत्ततो विरम्योपोष्य ॥ १४ ॥** अतिथिमागतं केनचित्प्रकारेण निराकृत्य भोजने प्रवृत्तो यत्रगते गृहस्थाप्राप्ते भोजने स्मरेत् किमया स निराकृत इति । तत्रैव भोजनाद्विरम्य तस्मिन्नहन्युपोष्य ॥ १४ ॥

इति अष्टमी खण्डिका ॥ प्र०२ प०३ ख०८ ॥

---

**श्वो भूते यथामनसं तर्पयित्वा संसाधयेत ॥ १ ॥**
अपरेद्युस्तमन्विष्य यथामनसं यथेच्छं तर्पयित्वा संसाधयेत् गच्छन्तमनुव्रजेत ॥ १ ॥ कथं इत्याह— * **यानवन्तमा यानात् ॥ २ ॥**

स चेदतिथिर्यानवान् भवति, तदा तस्या रोहणादनुव्रजेत् ॥ २ ॥ *यावन्नानुजानीयादितरः ॥ ३ ॥ इतरो यानरहितो यावन्नानुजानीयात् गच्छेत्, तं तावदनुव्रजेत् ॥ ३ ॥ * अप्रतीभार्या सीम्नो निवर्तेत ॥४॥ यदि तस्यान्यपरतयानुज्ञायां प्रतीभा बुद्धिर्न जायते, ततस्सीम्नि प्राप्तायां ततो निवर्तेत । प्रतेर्दीर्घश्छान्दसः । 'संसाधये'दित्यादि सर्वातिथिसाधारणम् । न निराकृतमात्रविषयम् ॥ ४ ॥ *सर्वान्वैश्वदेवे भागिनः कुर्वीता श्वचण्डालेभ्यः ॥ ५ ॥ वैश्वदेवान्ते भोजनार्थमुपस्थितान् सर्वानेव भागिनः कुर्वीता श्वचण्डालेभ्यः । अभिविधावाकारः । तेभ्योऽपि किञ्चिद्देयम् । तथा च मनुः — 'शुनां च पतितानां च श्वपचां पापरोगिणाम् । वयसां च कृमीणां च शनकैर्निर्वपेद्भुवि ॥' इति ॥ ५ ॥ * नानर्हद्भ्यो दद्यादित्येके ॥ ६ ॥ अनर्हद्भ्यश्चाण्डालादिभ्यो न दद्यादित्येके मन्यन्ते । तत्र दाने अभ्युदयः । अदाने न प्रत्यवाय इति ॥ ६ ॥ * उपेतः स्त्रीणामनुपेतस्य चोच्छिष्टं वर्जयेत् ॥ ७ ॥ उपेतः कृतोपनयनोऽसमावृत्तः । स स्त्रीणामनुपेतस्य चोच्छिष्टं न भुञ्जीत । एवं सति समावृत्तस्योच्छिष्टं भुञ्जानस्य न दोषः स्यात् । एवं तर्हि उपेत आन्तात् कृतदारोऽकृतदारश्च स्त्रीणामनुपेतस्य चोच्छिष्टं वर्जयेत् । एवमप्युपेतस्य यस्य कस्यचिदपि यदुच्छिष्टं तद्भोजने न दोषः स्यात् । 'पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोक्तव्य'मित्येतन्नियमार्थं भविष्यति पितुरेव भ्रातुरेवेति । यद्येवं सूत्रमेवेदमनर्थकं तस्मादेव नियमादन्यत्राप्रसङ्गः । इदं तर्हि प्रयोजनं यदा पितानुपेतः पुत्रस्तु प्रायश्चित्तं कृत्वा कृतोपनयनः तदा तं प्रति पितुरनुपेतस्योच्छिष्टं प्रतिषिध्यते । एवं ज्येष्ठेऽपि द्रष्टव्यम् । एतदपि नास्ति प्रयोजनम् । उक्तं हि 'धर्मविप्रतिपत्तावभोज्य'मिति । 'तेषामभ्यागमनं भोजनं विवाहमिति च वर्जये'दिति च । तथा स्त्रीणामित्येतत् किमर्थम् । मातुरुच्छिष्टप्रतिषेधार्थम् । कथं प्रसङ्गः । 'मातरि पितर्याचार्यवच्छुश्रूषे'ति वचनात् 'यदुच्छिष्टं प्राश्नाति हविरुच्छिष्टमेव त'दित्याचार्योच्छिष्टस्य हविष्ट्वेन संस्तवाच्च । एवमपि 'पितुर्ज्येष्ठस्ये'त्यत्र ग्रहणादेव सिद्धम् । तस्मात् केषुचिज्जनपदेषु भार्ययानुपेतेन च सह भोजनमाचरन्ति । तथाह बोधायनः—

'यानि दक्षिणतस्तानि व्याख्यास्यामो यथैतदनुपेतेन सह भोजनं स्त्रिया सह भोजन'मिति। तस्य दुराचारत्वमनेन प्रतिपाद्यते ॥७॥ *'सर्वाण्युदकपूर्वाणि दानानि ॥८॥ सर्वाणी'ति वचनात् भिक्षाप्युदकपूर्वमेव देया ॥८॥ *यथाश्रुति विहारे ॥९॥ विहारे यज्ञकर्मणि यानि दानानि दक्षिणादीनाम्; तानि यथाश्रुत्येव। नोदकपूर्वाणि ॥९॥ * ये नित्यभाक्तिकास्तेषामनुपरोधेन संविभागो विहितः ॥१०॥ ये नित्यभाक्तिकाः भक्तार्हाः कर्मकरादयः तेषामुपरोधो यथा न भवति तथा वैश्वदेवान्ते अभ्यागतेभ्यः संविभागः कर्तव्यः ॥ १० ॥ *काममात्मानं भार्यां पुत्रं वोपरुन्ध्यान्नत्वेव दासकर्मकरम् ॥ ११ ॥ दासो भूत्वा यः कर्म करोति स दासकर्मकरः तम् । आत्मादीनुपरोधेनापि नोपरुन्ध्यात् । किं पुनरागतार्थमुपरुन्ध्यादिति । अतस्त केवलं कर्मकरं नोपरुन्ध्यात ॥ ११ ॥ * तथा चात्मनोऽनुपरोधं कुर्याद्यथा कर्मसु समर्थस्स्यात् ॥१२॥ कर्मसु अग्निहोत्रादिषु आर्जनेषु च यथा स्वयं समर्थो भवति तथात्मानं नोपरुन्ध्यात् कुटुम्बी ॥१२॥ अथाप्युदाहरन्ति—'अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनः । द्वात्रिंशतं गृहस्थस्यापरिमितं ब्रह्मचारिणः । आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः । अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नता'मिति ॥१३॥ अथैतस्मिन्नात्मानं नोपरुन्ध्यादितिविषये श्लोकावुदाहरन्ति । मुनेः सन्न्यासिनः । भक्ष्या अष्टौ ग्रासाः आस्याविकारेण । अरण्यवासी वानप्रस्थः । तस्य षोडश । द्वात्रिंशत् ग्रासा गृहस्थस्य । प्रथमार्थे द्वितीया । ब्रह्मचारिणस्तु विद्यार्थस्य नैष्ठिकस्य च ग्रासनियमो नास्ति। द्वितीयेन श्लोकेनाहिताग्निविषये 'कालयोर्भोजन'मित्ययमपि नियमो नास्तीति प्रतिपाद्यते । अनडुद्ग्रहणं दृष्टान्तार्थम् । ब्रह्मचारिग्रहणं दृढार्थम् । सिध्यन्ति स्वकार्यक्षमा भवन्ति ॥१३॥

इति नवमी खण्डिका ॥ प्र० २ प० ४ ख० ९ ॥

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां द्वितीयप्रश्ने चतुर्थः पटलः ॥४॥

***भिक्षणे निमित्तमाचार्यो विवाहो यज्ञो मातापित्रोर्बुभूर्षार्हतश्च नियमविलोपः** ॥१॥ भिक्षणं याचनम् । तत्राचार्यादयो निमित्तम् । बुभूर्षा भर्तुमिच्छा । अर्हतो विद्यादिमतः अग्निहोत्रादेर्नियमे योग्यस्यार्थस्याभावेन लोपः ॥१॥ ***तत्र गुणान् समीक्ष्य यथाशक्ति देयम्** ॥२॥ तत्रैवंभूते भिक्षणे याचतः श्रुतवृत्तादिकान् गुणान् समीक्ष्य शक्त्यनुरूपमवश्यं देयम् । अदाने प्रत्यवायात् । गौतमस्तु निमित्तान्तरमप्याह—गुर्वर्थनिवेशौषधार्थवृत्तिक्षीणयक्ष्यमाणाध्ययनध्वसंयोगवैश्वजितेषु द्रव्यसंविभागो बहिर्वेदि भिक्षमाणेषु कृतान्नमितरे'ष्विति । वैश्वजितो विश्वजिद्यागस्य कर्ता सर्वस्वदक्षिणः ॥२॥ ***इन्द्रियप्रीत्यर्थस्य तु भिक्षणमनिमित्तम्** ॥३॥ इन्द्रियद्वारा आत्मनः प्रीतिरिन्द्रियप्रीतिः । तामर्थयमानो यो भिक्षेत स्रक्चन्दनादि तन्मूल्यं वा । तद्भिक्षणं नियमेन दानस्य निमित्तं न भवति ॥३॥ ***तस्मान्न तदाद्रियेत** ॥४॥ अदानेऽपि न प्रत्यवायः । विवाहोऽपि द्वितीयो न निमित्तं सत्यां प्रथमायां धर्मप्रजासम्पन्नायाम् । तदर्थमिदं वचनम् । अन्यत्र प्राप्त्यभावात् ॥४॥ ***स्वकर्म ब्राह्मणस्याध्ययनमध्यापनं यज्ञो याजनं दानं प्रतिग्रहणं दायाद्यं शिलोञ्छः** ॥५॥ सर्ववर्णानां स्वधर्मानुष्ठानं इत्युक्तम् । तेऽमी स्वधर्मा उच्यन्ते । पुत्राय दीयत इति दायः । तमादत्त इति दायादः । तस्य भावो दायाद्यम् । दायस्वीकारः । क्षेत्रादिषु पतितानि मञ्जरीभूतानि ततश्च्युतानि धान्यानि सिलशब्दस्यार्थः । तेषामुञ्छनमंगुलीभिर्निर्वेचा आदानं सिलोञ्छः । एतान्यध्ययनादीन्यष्टौ ब्राह्मणस्य स्वकर्म । तेष्वध्ययनयज्ञदानानि द्विजातिसामान्येन कर्तव्यतया नियम्यन्ते । इतराण्यर्थितया द्रव्यार्जने प्रवृत्तस्योपायान्तरनिवृत्त्यर्थान्युपदिश्यन्ते । अध्यापनादिभिरेव द्रव्यमार्जयेन्न चौर्यादिभिरिति ॥५॥ ***अन्यच्चापरिगृहीतम्** ॥६॥ यच्चान्यत् केनाप्यपरिगृहीतमारण्यमूलफलादि । तेनापि जीवेदिति प्रकरणात् गम्यते । एतेन विभिन्नार्थस्यात्' ॥६॥ *** एतान्येव क्षत्रियस्याध्यापनयाजनप्रतिग्रहणानीति परिहाप्य दण्डयुद्धाधिकानि** ॥७॥ एतान्येव क्षत्रियस्यापि स्वकर्म । अध्यापनादीनि त्रीणि वर्जयित्वा । दण्डलब्धं युद्धलब्धं चाधिकम् ॥७॥ *क्ष-

त्रियवद्वैश्यस्य दण्डयुद्धवर्जं कृषिगोरक्ष्यवणिज्याधिकम् ॥ ८॥ गोरक्ष्यं गवां रक्षणम् । भावे ण्यत्प्रत्ययः । वणिजो भावो वणिज्या क्रयविक्रयव्यवहारः । कुसीदं च ।'दूतवणिग्भ्यां चेति वक्तव्य'मिति यत्प्रत्ययः।८॥ *नाननूचानमृत्विजं वृणीते न पणमाणम् ॥ ९॥ साङ्गस्य वेदस्याध्येता प्रवक्ता चानूचानः । अतादृशमृत्विजं न वृणीते नाप्येतावद्देयमिति परिभाषमाणम् ॥ ९॥ *अयाज्योऽनधीयानः ॥ १०॥ अनधीतवेदं न याजयेत् । तदानीमपेक्षितं मन्त्रं यथाशक्ति वाचयन् । क्षत्रियस्य युद्धं स्वकर्मेत्युक्तम् ॥ १०॥ तत्कथं कर्तव्यमित्याह— * युद्धे तद्योगा यथोपायमुपदिशन्ति तथा प्रतिपत्तव्यम् ॥११॥ युद्धविषये तथा प्रतिपत्तव्यं यथा तद्योगा उपायमुपदिशन्ति तस्मिन्युद्धकर्मणि युद्धशास्त्रे वा येषामभियोगः ते तद्योगाः ॥ ११ ॥ *न्यस्तायुधप्रकीर्णकेशप्राञ्जलिपराङावृत्तानामार्या वधं परिचक्षते ॥ १२ ॥ शास्त्रैरधिगतानामिन्द्रियदौर्बल्याद्विप्रतिपन्नानां शास्ता निर्वेषमुपदिशेद्यथाकर्म यथोक्तम् ॥ १३ ॥ तस्य चेच्छास्त्रमतिप्रवर्तेरन् ॥ १४ ॥ न्यस्तायुधः त्यक्तायुधः । प्रकीर्णकेशः केशानपि निबन्धुमक्षमः । प्राञ्जलिः कृताञ्जलिः । पराङावृत्तः पराङ्मुखः । सर्व एते भीताः । एतेषां युद्धे वधमार्यास्सन्तो गर्हन्ते । परिगणनादन्येषां वधे न दोषः। तथा च गौतमः—'न दोषो हिंसायामाहवे' इति । न्यस्तायुधः प्रकीर्णकेश इति विसर्जनीयं केचित्पठन्ति । सोऽपपाठः । पराङावृत्त इति ङकारश्छान्दसः । शास्त्रैर्यथोक्तं यथाशास्त्रं गर्भाधानादिभिः संस्कारैः संस्कृताः शास्त्रैरधिगताः तेषामिन्द्रियदौर्बल्यात् अजितेन्द्रियतया विप्रतिपन्नानां स्वकर्मतश्च्युतानां निषिद्धेषु च प्रवृत्तानाम् । शास्ता शासिता आचार्यादिः । निर्वेषं प्रायश्चित्तमुपदिशेत् । यथाकर्म कर्मानुरूपम् । यथोक्तं धर्मशास्त्रेषु । तस्य चेच्छासितुः शास्त्रं शासनं अतिप्रवर्तेरन् निवर्तेरन् न तत्र तिष्ठेयुः ॥ १२ ॥ १३ ॥ १४ ॥ * राजानं गमयेत् ॥ १५ ॥ एवमसौ करोतीति ॥ १५ ॥ * राजा पुरोहितं धर्मार्थकुशलम् ॥१६॥ स राजा धर्मशास्त्रेष्वर्थशास्त्रेषु कुशलं पुरोहितं गमयेत् । विनियम्य

तामसाविति ॥ १६ ॥ * स ब्राह्मणान्नियुञ्ज्यात् ॥ १७ ॥ स पुरोहितः ब्राह्मणाश्चेदतिक्रमणकारिणः प्रापिताः तान्नियुञ्ज्यात् अनुरूपेषु प्रायश्चित्तेषु नियुञ्ज्यात् ॥ १७ ॥ यदि ते तत्रापि न तिष्ठेयुः तदा किं कर्तव्यमित्यत आह— * बलविशेषेण वधदास्यवर्जं नियमैरुपशोषयेत् ॥ १८ ॥ ततस्तान्नियमैरुपवासादिभिरुपशोषयेत् । बलविशेषेण बलानुरूपम् । वधदास्यवर्जं वधस्ताडनादि वधं दास्यं च वर्जयित्वा । सर्वमन्यत् बन्धनादिकं बलानुरूपं कारयेत् । यावत्ते मन्येरन् चरेम प्रायश्चित्तमिति ॥ १८ ॥

इति दशमी खण्डिका ॥ प्र०२ प०५ ख०१० ॥

---

एवं ब्राह्मणविषये उक्तम् । इतरेषामाह— * इतरेषां वर्णानामाप्राणविप्रयोगात्समवेक्ष्य तेषां कर्माणि राजा दण्डं प्रणयेत् ॥ १ ॥ इतरेषां ब्राह्मणव्यतिरिक्तानां वर्णानां राजा पुरोहितोक्तदण्डं स्वयमेव प्रणयेत् । तेषां कर्माणि समवेक्ष्य तदनुरूपमा प्राणविप्रयोगात् । अभिविधावाकारः ॥ १ ॥ * न च सन्देहे दण्डं कुर्यात् ॥ २ ॥ अपराधसन्देहे राजा दण्डं न कुर्यात् ॥ २ ॥ * किन्तु सुविचितं विचित्या दैवप्रश्नेभ्यो राजा दण्डाय प्रतिपद्येत ॥ ३ ॥ आ दैवप्रश्नेभ्यः साक्षिप्रश्नादिभिः शपथान्तैः सुविचितं यथा भवति तथा विचित्य निरूप्य । राजा दण्डाय प्रतिपद्येत उपक्रमेत ॥ ३ ॥ एवं कुर्वतः फलमाह— * एवंवृत्तो राजोभौ लोकावभिजयति ॥ ४ ॥ एवं भूतं वृत्तं यस्य स एवंवृत्तः । अत्र मनुः— 'अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति प्रेत्य स्वर्गाच्च हीयते ॥' इति ॥ ४ ॥ गच्छतां प्रतिगच्छतां च पथि समवाये तेन कस्मै पन्था देय इत्यत आह— * राज्ञः पन्था ब्राह्मणेनासमेत्य ॥ ५ ॥ राजा अभिषिक्तः । स यदि ब्राह्मणेन समेतो न भवति, तदा तस्य पन्था दातव्यः । क्षत्रियैरप्यनभिषिक्तैः । एतदर्थमेव चेदं वचनम् । अन्यत्र 'वर्णज्यायसां च' इति वक्ष्यमाणेनैव सिद्धम् ॥ ५ ॥ * समेत्य तु ब्राह्मणस्यैव पन्थाः ॥ ६ ॥ आपदि शिष्यभूतब्राह्मणविषयमिदम् । शिष्यभूतेनापि ब्राह्मणेन समेत्य तस्यैव राज्ञा पन्था देय इति ॥ ६ ॥ * यानस्य भा-

राभिनिहितस्यातुरस्य स्त्रिया इति सर्वैर्दातव्यः ॥७॥ यानं शकटादि। भाराभिनिहितो भाराक्रान्तः। आतुरो व्याधितः। स्त्रियः यस्याः कस्याश्चिदपि। एतेभ्यः सर्वैरेव वर्णैः पन्था दातव्यः। इतिशब्दात् स्थविरबालकृशादिभ्यश्च ॥७॥ * वर्णज्यायसां चेतरैर्वर्णैः ॥८॥ वर्णेनोत्कृष्टा वर्णज्यायांसः। तेषा चेतरैरपकृष्टैर्वर्णैर्बाह्यैश्च दातव्यः ॥८॥ * अशिष्टपतितमत्तोन्मत्तानामात्मस्वस्त्ययनार्थेन सर्वैरेव दातव्यः ॥९॥ अशिष्टो मूर्खः। अन्ये प्रसिद्धाः। एतेषां सर्वैरेव सजातीयैरुत्कृष्टैरपकृष्टैर्वर्णैर्बाह्यैश्च आत्मस्वस्त्ययनार्थेन सर्वेणैव दातव्यः। आत्मस्वस्त्ययनमात्मत्राणमात्रम्। तेन प्रयोजनेन तदर्थम्। न त्वदृष्टार्थमिति। अत्र कौटिल्येन देयस्य पथः प्रमाणमुक्तम्—'पञ्चारत्नी रथपथश्चत्वारो हस्तिपथः द्वौद्वौ क्षुद्रपशुमनुष्याणा' मिति ॥९॥ * धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते जातिपरिवृत्तौ ॥१०॥ धर्मचर्यया स्वधर्मानुष्ठानेन। जघन्यो वर्णः शूद्रादिः। पूर्वं पूर्वं वर्णमापद्यते वैश्यादिं प्राप्नोति। जातिपरिवृत्तौ जन्मनः परिवर्तने। शूद्रो वैश्यो जायते। तथापि स्वधर्मनिष्ठः क्षत्रियो जायते। तत्रापि स्वधर्मपरो ब्राह्मण इति। एवं क्षत्रियवैश्ययोरपि द्रष्टव्यम् ॥१०॥ * अधर्मचर्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ ॥११॥ पूर्वेणोक्तः। महापातकव्यतिरिक्ताधर्मानुष्ठानविषयमेतत्। महापातकेषु 'स्तेनोऽभिशस्त' इत्यादिना नीचजातिप्राप्तेरुक्तत्वात् ॥११॥ *धर्मप्रजासम्पन्ने दारे नान्यां कुर्वीत ॥१२॥ श्रौतेषु गार्ह्येषु स्मार्तेषु च कर्मसु श्रद्धा भक्तिश्च धर्मसम्पत्तिः। प्रजासम्पत्तिः पुत्रवत्त्वम्। एवंभूते दारे सति नान्यां दारं इति प्रकृतम्। अन्यामिति स्त्रीलिङ्गनिर्देशः। अत्रार्थाद्भार्यामिति गम्यमानेनान्यां भार्यां कुर्वीत नोद्वहेत ॥१२॥ * अन्यतराभावे कार्या प्रागग्न्याधेयात् ॥१३॥ धर्मप्रजयोरन्यतरस्याभावे कार्या उद्वाह्या। तत्रापि प्रागग्न्याधेयात् नोर्ध्वमाधानात्। एतदर्थमेवेदं वचनम्। उभयसम्पत्तौ न कार्येत्युक्ते अन्यतराभावे कार्येत्यस्यांशस्य प्राप्तत्वात्। यदा चान्यतराभावे कार्या तदा का शङ्का उभयाभावे कार्येति ॥१३॥ प्रागग्न्याधेयादित्यत्र हेतुः— *आधाने हि सती कर्मभिस्सम्बध्यते येषामेतदङ्ग-

मू॥१४॥हि यस्मात् आधाने सती विद्यमाना सहाधिता कर्मभिस्सम्ब-ध्यते अधिक्रियते । येषामग्निहोत्रादीनामेतदाधानमङ्गमुपकारकम् ; तैः । अत्र 'दारे सती'ति वचनात् मृते तस्मिन्पुनराधानानुपपत्तेः । पुनराधानं न स्यात् । मृते चाधानात् सत्यामपि पुत्रस-म्पत्तौ धर्मसम्पत्त्यर्थं दारग्रहणं भवत्येव । तथा च मनुः—'भार्यायै पूर्वमा-रिण्यै दत्त्वाग्नीनन्त्यकर्मणि । पुनर्दारक्रियां कुर्यात्पुनराधानमेव च ॥' इति । याज्ञवल्क्योऽपि—'आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन्' । इति । न हि वाचनिकेऽर्थे युक्तयः क्रमन्ते । तेनैतन्न चोदनीयम् । यजमानः पूर्वमन्वा-रम्भणीयया संस्कृतो न तस्यायं संस्कारः पुनरापादयितुं शक्यः । या च भार्या आधानात्परमूढा सती सा च पूर्वमसंस्कृता , न तस्या दर्शपूर्णमासा-दिष्वधिकारः । स कथं तया तैरिष्टुमर्हतीति अन्वारम्भणीयाजन्यश्च सं-स्कारो यदि संयोगवदुभयनिष्ठः तदा भार्यानाशे नश्यतीति तस्य पुन-स्संस्कारोऽपि नोपपन्नः । यानि च नान्वारम्भणीयामपेक्षन्ते स्मार्तानि गार्ह्याणि यतोऽधिकारस्तस्याविरुद्धः । ननु च प्रागप्याधानात् कर्मभि-स्सम्बध्यते गार्ह्यैस्स्मार्तैश्च, तत्किमुच्यते आधाने हि सती कर्मभिस्सम्ब-ध्यत इति । सत्यम् । अस्मादेव च हेतुनिर्देशादवसीयते प्रागाधानात् सत्यामपि धर्मसम्पत्तौ प्रजासम्पत्तौ च रागान्तस्य कस्यचिद्दारग्रहणे ना-तीव दोष इति । अथ यस्याहिताग्नेर्भार्या सत्येव कर्मण्यश्रद्दधाना अ-शक्ता वा भवति पुत्राश्च मृता अनुत्पन्ना वा तस्य कथम् । यद्येषा श्रु-तिः 'धर्मप्रजासम्पन्न'इति कर्मभिस्सम्बध्यत'इति च तदा कर्तव्यो विवाहः । न च 'प्रागग्न्याधेया'दित्यस्य विरोधः । अन्यतराभावे कार्येत्यस्यैव स शेषः । न पुनरुभयारम्भाभावे कार्येत्यस्य । (दृष्टार्थशेषत्वे सम्भवति गम्यमानार्थशे-षत्वकल्पनानुपपत्तेः । सम्भवति च तात्पर्यमस्मिन्नपि । भारद्वाजसूत्रव्या-ख्यायमेव विषयः । ) भारद्वाजसूत्रे तु यद्यप्यविशेषेणाहिताग्नेर्दा-रानुज्ञा प्रतीयते—"अथ यद्याहिताग्निः पुनर्दारक्रियां कुर्वीत यद्य-ग्नीन्नोत्सृजेत् लौकिकास्सम्पद्येरन् तस्य पुनरग्न्याधेयं कुर्वीतेत्याश्मरथ्यः, पु-नराधाननित्यालेखनः,पुनरग्न्याधेयमित्यौडुलोमि'रिति । तथापि तस्याप्ययमे-

१. एतत्क्वचिन्नास्ति ॥

व विषयः ॥१४॥ * सगोत्राय दुहितरं न प्रयच्छेत् ॥१५॥ कन्यागोत्र मेव गोत्रं यस्य तस्मै कन्या न देया। यथा—हारीताय हारीतीं वात्स्याय वात्सी- मित्यादि ॥१५॥ *मातुश्च योनिसम्बन्धेभ्यः ॥१६॥ मातुर्योनिसम्बन्धाः कन्याया मातुलादयः। चकारात् पितुरप्येवम्। तेभ्यः असगोत्रेभ्योऽपि न देया कन्यका। अत्र मनुः—'असपिण्डा च या मातुरसगोत्रा च या पि- तुः। सा प्रशस्ता द्विजातीनां दारकर्मण्यमैथुनी ॥ व्यासः—'स्नात्वा समुद्वहेत्कन्यां सवर्णां लक्षणान्विताम्। यवीयसीं भ्रातृमतीमसगोत्रां प्रयत्नतः ॥' मातुस्सगोत्रामप्येके नेच्छन्त्युद्वाहकर्माणि। जन्म- नाम्नोरविज्ञाने नोद्वहेदविशङ्कितः ॥ मातुस्सपिण्डा यत्नेन वर्जनीया द्वि- जातिभिः। इति।' गौतमः—'असमानप्रवरैर्विवाह ऊर्ध्वं सप्तमात्पितृबन्धु- भ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमात्। इति। कात्यायनः—'प्रव- र एषामविवाह इत्येतेषु प्रत्यध्यायमाहत्य वचनं येषामेव प्रवरः तेषामेवा- विवाह इति। कारिका च भवति—रातीयानामविवाह एषामिति येषां सू- त्रकृदब्रवीत्।तेषामेव विवाहः स्यात् नान्येषामिति धारणे'ति। शङ्खः—दाराना- हरेत्सदृशानसमानार्षेयानसम्बन्धानासप्तमपञ्चमात्पितृमातृबन्धुभ्यः। इति।व- सिष्ठः—'गृहस्थो विनीतक्रोधहर्षो गुरुणानुज्ञातः स्नात्वाऽसमानार्षेयामस्पृ- ष्टमैथुनामवरवयसीं भ्रातृमतीं सदृशीं भार्यां विन्देत। पञ्चमीं मातृबन्धुभ्यः स- प्तमीं पितृबन्धुभ्यः।' हारीतः—'श्वित्री कुष्ठ्युदरी यक्ष्मामयाव्यल्पायुरनार्षेयं ब्राह्मसमानार्षेयमित्येतान्यपतितान्यपि कुलानि वर्जनीयानि भवन्ति। कुला- नुरूपाः प्रजा भवन्तीत्यादितष्षडयज्ञियत्वादनार्षेयमवेदत्वादब्रह्म एक- कुलत्वात् समानार्षेयमिति तस्मात् सप्त पितृतः परीक्ष्य पञ्च मातृतोऽनूनकां श्रेष्ठां भ्रातृमतीं भार्यां विन्देत। ' पैठीनसिः—' असमानार्षेयां कन्यां व- रयेत्। पञ्च मातृतः परिहरेत्सप्त पितृतः त्रीन्मातृत. पञ्च पितृतो वा।' याज्ञ- वल्क्यः—'अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्। अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम्। अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्। पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा ॥' विष्णुः—'असगोत्रामसमानप्रवरां भार्यां विन्देत मातृतः पञ्चमात्पितृतः सप्तमात्।' नारदः—'आसप्तमा-

त्पञ्चमाच्च बन्धुभ्यः पितृमातृतः । अविवाह्यास्सगोत्रास्स्युस्समानप्रवरास्तथा ।' शातातपः—'परिणीय सगोत्रां तु समानप्रवरां तथा । कृत्वा तस्यास्समुत्सर्गमतिकृच्छ्रो विशोधनम् ॥ मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव द्विजश्चान्द्रायणं चरेत् ।' मनुः—पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च । मातुश्च भ्रातुस्तनयां गत्वा चान्द्रायणं चरेत् । एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत्तु बुद्धिमान् । ज्ञातित्वेनानुपेयास्ताः पतति ह्युपयन्नधः ॥' बोधायनः—'सगोत्रां चेदमत्योपयच्छेत मातृवदेनां बिभृयात् । सगोत्रां गत्वा चान्द्रायणमुपदिशेत् । व्रते परिनिष्ठिते ब्राह्मणीं न त्यजते मातृवद्भगिनीवद्गर्भो न दुष्यतीति विज्ञायते । अथ सन्निपाते अविवाहः तदाध्यायं वर्जयेत् । बोधायनस्य तत्प्रमाणं कर्तव्यम् । मानव्यो हि प्रजा इति विज्ञायत' इति । गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च । ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात् । एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते । तावत्समानगोत्रत्वमन्यत्र भृग्वङ्गिरोगणात् ॥' इति । सुमन्तुः—'पितृपत्न्यस्सर्वा मातरस्तद्भ्रातरो मातुलाः तत्सुता मातुलसुतास्तस्मात्ता नोपयन्तव्या' इति । १६ ॥ कन्यादानप्रसङ्गाद्विवाहभेदानाह—***ब्राह्मे विवाहे बन्धुशीलश्रुतारोग्याणि बुध्वा प्रजां सहत्वकर्मभ्यः प्रतिपादयेच्छक्तिविषयेणालंकृत्य** ॥ १७ ॥ ब्रह्मणा दृष्टो ब्राह्मः । तस्मिन् विवाहे वरस्य बन्धवादीन् बुध्वा परीक्ष्य प्रजां दुहितरं सहत्वकर्मभ्यः सहकर्तव्यानि यानि कर्माणि तेभ्यः तानि कर्तुम् । प्रतिपादयेत् दद्यात् । शक्तिविषयेण विभक्तिप्रतिरूपोऽयं निपातः यथाशक्तीत्यस्यार्थे द्रष्टव्यः । यथाशक्त्यलंकृत्य दद्यादित्येष ब्राह्मो विवाहः । 'प्रजासहत्वकर्मभ्य' इति पाठे प्रजार्थं सहत्वकर्मार्थं चेति ॥ १७ ॥ ***आर्षे दुहितृमते मिथुनौ गावौ देयौ** ॥ १८ ॥ ऋषिभिर्दृष्टे विवाहे मिथुनौ गावौ स्त्रीगवी पुङ्गवश्च दुहितृमते देयौ । एष आर्षः ॥ १८ ॥ ***दैवे यज्ञतन्त्र ऋत्विजे प्रतिपादयेत्** ॥ १९ ॥ देवैर्दृष्टे विवाहे यज्ञतन्त्रे वितते ऋत्विजे कर्म कुर्वते कन्यां दद्यात् । एष दैवो विवाहः ॥ १९ ॥ ***मिथः कामात्सांवर्तेते स गान्धर्वः** ॥ २० ॥ यत्र कन्यावरौ रहसि कामात् परस्परं रागात् सांवर्तेते मिथुनीभवतः स गान्धर्वो वि

वाहः । समो दीर्घः पूर्ववत् । अत्र संयोगोत्तरकालं विवाहसंस्कारः कर्तव्यः ॥ २० ॥

इति एकादशी खण्डिका ॥ प्र० २ प० ५ ख० ११ ॥

---

***शक्तिविषयेण द्रव्याणि दत्त्वावहेरन् स आसुरः ॥ १ ॥** यत्र विवाहे कन्यावते यथाशक्ति द्रव्याणि दत्त्वावहेरन् कन्या स आसुरः । 'वित्तेनानतिस्त्रीमतामासुर' इति गौतमः । तेन कन्यायै गृहक्षेत्राभरणादिदानेन विवाहो नासुर ॥ १ ॥ ***दुहितृमतः प्रोथयित्वावहेरन् स राक्षसः ॥ २ ॥** दुहितृमत कन्यावत पित्रादीन् प्रोथयित्वा प्रमथ्य यत्रावहेरन् स राक्षसो विवाह । 'हत्वा भित्वा च शीर्षाणि रुदती रुदद्भ्यो यत्रावहेरन् स राक्षस' इत्याश्वलायन । अत्रापि विवाहसंस्कारः कर्तव्य । द्वौ चापरौ विवाहौ शास्त्रान्तरप्रोक्तौ । तत्राश्वलायनः—'सह धर्मं चरतमिति प्राजापत्य सुप्तां प्रमत्ता वापहरेत्स पैशाच' इति । ताविह पृथङ्नोक्तौ । ब्राह्मराक्षसयोरन्तर्भावादिति ॥ २ ॥ ***तेषां त्रय आद्याः प्रशस्ताः पूर्वः पूर्वः श्रेयान् ॥ ३ ॥** तेषां विवाहानां मध्ये आद्यास्त्रयो ब्राह्मार्षदैवाः प्रशस्ताः । तत्रापि पूर्वः पूर्वोऽतिशयेन प्रशस्त इति ॥ ३ ॥ ***यथायुक्तो विवाहस्तथा युक्ता प्रजा भवति ॥ ४ ॥** प्रशस्ते विवाहे जाता प्रजापि प्रशस्ता भवति । निन्दिते निन्दिता । तत्र मनुः—'ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः । ब्रह्मवर्चसिनः पुत्रा जायन्ते शिष्टसम्मताः ॥ रूपसत्त्वगुणोपेता धनवन्तो यशस्विनः । पर्याप्तभोगा धर्मिष्ठा जीवन्ति च शतं समाः ॥ उत्तरेषु च जायन्ते नृशंसानृतवादिनः । जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः ॥' इति । प्राजापत्येन सह ब्राह्माद्याश्चत्वारो ब्राह्मणस्य । गान्धर्वराक्षसौ क्षत्रियस्य । आसुरं तु वैश्यशूद्रयोः । पैशाचो न कस्यचिदपि ॥ ४ ॥ *** पाणिसमूढं ब्राह्मणस्य नाप्रोक्षितमभितिष्ठेत् ॥ ५ ॥** ब्राह्मणस्य पाणिना समूढमुपलिप्तं संमृष्टं वा भूप्रदेशमप्रोक्षितं नाभितिष्ठेत् नाधितिष्ठेत् । प्रोक्ष्यैवाधितिष्ठेदिति ॥ ५ ॥ *** अग्निं ब्राह्मणं चान्तरेण नातिक्रामेत् ॥ ६ ॥** अग्नेर्ब्राह्म-

णस्य च मध्येन न गच्छेत् ॥ ६ ॥ * **ब्राह्मणांश्च** ॥ ७ ॥ अन्तरेण नातिक्रामेदित्येव । ब्राह्मणानां च मध्येन न गच्छेत् ॥७॥ * **अनुज्ञाप्य वातिक्रामेत्** ॥ ८ ॥ स्पष्टम् ॥ ८ ॥ * **अग्निमपश्च न युगपद्धारयीत** ॥ ९ ॥ अग्निमुदकञ्च न युगपद्धारयेत् ॥ ९ ॥ * **नानाग्नीनां च सन्निवापं वर्जयेत्** ॥ १० ॥ पृथगवस्थितानामग्नीनामेकत्र समावपनं न कुर्यात् । अग्नावग्निं न प्रक्षिपेदित्यन्ये ॥ १० ॥ * **प्रतिमुखमग्निमाह्रियमाणं नाप्रतिष्ठितं भूमौ प्रदक्षिणीकुर्यात्** ॥ ११ ॥ यदास्य गच्छतः प्रतिमुखमग्निराह्रियते तदा न तं प्रदक्षिणीकुर्यात् । स चेद्भूमौ प्रतिष्ठितो न भवति । प्रतिष्ठिते त्वग्नौ दृष्टे प्रदक्षिणीकुर्यादिति ॥ ११ ॥ * **पृष्ठतश्चात्मनः पाणी न संश्लेषयेत्** ॥ १२ ॥ स्वे पृष्ठभागे स्वपाणिद्वयं न सश्लेषयेन्न बध्नीयात् ॥ १२ ॥ **स्वपन्नभिनिर्मुक्तो नाश्वान्वाग्यतो रात्रिमासीत श्वो भूत उदकमुपस्पृश्य वाचं विसृजेत्** ॥ १३ ॥ 'सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च । अंशुमानभिनिर्मुक्ताभ्युदितौ तौ यथाक्रमम् । स्वपन्नभिनिर्मुक्तो नाश्वानभुञ्जानस्तूष्णींभूतो रात्रिं सर्वामासीत न शयीत । अथापरेद्युः प्रातः स्नात्वा वाचं विसृजेत् । अगमस्य निर्वेपः ॥ १३ ॥ ***स्वपन्नभ्युदितो नाऽश्वान्वाग्यतोऽहस्तिष्ठेत्** ॥ १४ ॥ पूर्वेण गतम् । उदकमुपस्पृश्य वाचं विसृजेदिति चात्रापेक्ष्यते । तत्रास्तमिते स्नानप्रतिषेधात् सायमेव स्नात्वा वाचं विसृज्य सन्ध्यामुपासीत ॥ १४ ॥ ***आतमितोः प्राणमायच्छेदित्येके** ॥ १५ ॥ यावदङ्गानां ग्लानिर्भवति तावत्प्राणमायच्छेत् प्राणवायुमाकृष्य धारयेत् । प्राणायामं कुर्यादित्येके मन्यन्ते । शक्त्यपेक्षो विकल्पः । तत्र मनुः—'सव्याहृतीं सप्रणवां गायत्रीं शिरसा सह । त्रिः पठेदायतप्राणः प्राणायामस्स उच्यते ॥' इति । एतमावर्तयेद्यावद्ग्लानिः ॥ १५ ॥ ***स्वप्नं वा पापकं दृष्ट्वा** ॥ १६ ॥ पापकस्वप्नो दुस्स्वप्नः मर्कटास्कन्दनादि । तं च दृष्ट्वा ॥ १६ ॥ ***अर्थं वा सिसाधयिषन्** ॥ १७ ॥ अर्थः प्रयोजनम् । तच्च दृष्टमदृष्टं वा साधयितुमिच्छन् ॥ १७ ॥ ***नियमातिक्रमे चान्यस्मिन्** ॥ १८ ॥ नियमानाम् ,उदङ्मुखो मूत्रं कुर्यादि'त्येवमादीनामतिक्रमे च आतमितोः प्राणमायच्छेदिति सर्वशेषः ॥ १८ ॥ ***दोषफलसंशये न तत्कर्तव्यम्** ॥ १९ ॥ यस्मि

न्कर्माणि कृते पक्षे दोषः फलं न सम्भाव्यते न तत् कुर्यात्। यथा संशयेत्वसहाये देशे एकाकिनो गमनमिति ॥१९॥ *एवमध्यायानध्याये ॥२०॥ संशय इत्युपसमस्तमप्यपेक्ष्यते। अध्यायोऽनध्याय इति संशयेऽप्येवं न तत् कर्तव्यमिति। 'सन्धावनुस्तनित' इत्युदाहरणम्। पूर्वस्यैवायं प्रपञ्चः ॥२०॥ **न संशये प्रत्यक्षवद्ब्रूयात्** ॥२१॥ संशयितमर्थमात्मनो ज्ञानपरिहाराय प्रत्यक्षं निश्चितवन्न ब्रूयात् ॥२१॥ ***अभिनिर्मुक्ताभ्युदितकुनखीश्यावदाग्रदिधिषूदिधिपूपतिपर्याहितपरीष्टपरिवित्तपरिविन्नपरिविविदानेषु चोत्तरोत्तरस्मिन्नशुचिकरनिर्वेषो गरीयान् गरीयान्** ॥२२॥ आद्यौ द्वौ गतौ। कुनखी कृष्णनखः। श्यावा दन्ता यस्य स श्यावदन् विवर्णदन्तः। 'विभाषा श्यावारोकाभ्यामि'ति दत्रादेशः। तस्य नलोपश्छान्दसः। ज्येष्ठायामनूढायां पूर्वं कनीयस्या वोढा अग्रदिधिषुः। पश्चादितरस्या वोढा दिधिषूपतिः। ज्येष्ठे अकृताधाने कृताधानः कनिष्ठः पर्याधाता। ज्येष्ठः पर्याहितः। ज्येष्ठे अकृतसोमयागे कृतसोमयागः कनिष्ठः परियष्टा। ज्येष्ठः परीष्टः। अकृतविवाहे ज्येष्ठे कृतविवाहः कनिष्ठः परिविविदानः। परिवेत्तेति प्रसिद्धः। ज्येष्ठः परिवित्तः। ज्येष्ठभार्यामुपयच्छमानः परिविन्नः। यस्मिन्नगृहीतभागे वा कनिष्ठो भागं गृह्णाति स ज्येष्ठः परिविन्नः। चकारः पर्याधातृप्रभृतीनां समुच्चयार्थः। एतेष्वभिनिर्मुक्तादिषु यो य उत्तरस्तस्मिंस्तस्मिन्द्वादशमासादिरशुचिकरनिर्वेषो यः पूर्वमुक्तः तत्र तत्र गरीयान् गरीयान् भवति। पूर्वत्र पूर्वत्र लघीयान्। अभिनिर्मुक्ताभ्युदितयोरनन्तरोक्तं प्रायश्चित्तिद्वयमपि विकल्पेन भवति ॥२२॥ ***तच्च लिङ्गं चरित्वोद्धार्यमित्येके*** ॥२३॥ यस्मिन् कौनख्यादिके लिङ्गे यत् प्रायश्चित्तमुक्तं तच्चरित्वा तत् कौनख्यादिकं लिङ्गमुद्धरेदित्येके मन्यन्ते। अन्यत्राहिताग्निभ्य इति स्मृत्यन्तरम् ॥२३॥

इति द्वादशी खण्डिका ॥ प्र०२ प०५ ख० ॥१२॥

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम् उज्ज्वलायां द्वितीयप्रश्ने पञ्चमः पटलः ॥५॥

* सवर्णापूर्वशास्त्रविहितायां यथर्तु गच्छतः पुत्रास्तेषां कर्मभिस्सम्बन्धः॥ १ ॥सवर्णा चासावपूर्वा च शास्त्रविहिता चेति कर्मधारयः। सवर्णा सजातीया । ब्राह्मणस्य ब्राह्मणीत्यादि । अपूर्वा अनन्यपूर्वा अन्यस्मै अदत्ता । न विद्यते पूर्वः पतिरस्या इति । शास्त्रविहिता शास्त्रोक्तेन विवाहकर्मणा संस्कारेण संस्कृता 'सगोत्राय दुहितरं न प्रयच्छे'दित्यादिशास्त्रानुगुणा वा । एवम्भूतायां भार्यायां यथर्तु गृह्योक्तेन ऋतुगमनकल्पेन गच्छतो ये पुत्रा जायन्ते तेषां 'स्वकर्म ब्राह्मणस्ये'त्यादिना पूर्वमुक्तैः कर्मभिस्सम्बन्धो भवति । गच्छथ इति थकारोऽपपाठः ॥ १ ॥ * दायेन चाव्यतिक्रमश्चोभयोः ॥ २ ॥ उभयोर्मातापित्रोर्दायेन च तेषां सम्बन्धो भवति अव्यतिक्रमश्च । च इति चेदर्थे । अव्यतिक्रमश्चेत् यदि ते मातरं पितरं च न व्यतिक्रमेयुः। व्यतिक्रमे तु दायहानिरिति । अपर आह— 'उभयोरपि दायेन तेषां व्यतिक्रमो न कर्तव्यः। अवश्यं देयो दाय' इति। ॥ २ ॥ * पूर्ववत्यामसंस्कृतायां वर्णान्तरे च मैथुने दोषः ॥ ३ ॥ अन्येन पाणिग्रहणेन तद्वती पूर्ववती । असंस्कृता विवाहसंस्काररहिता । वर्णान्तरे ब्राह्मणादेः क्षत्रियादिषु। तेषु पूर्ववत्यादिषु मैथुने सति दोषो भवति। कस्य तयोरेव मिथुनीभवतोः ॥३॥ * तत्रापि दोषवान् पुत्र एव ॥ ४॥ तत्रेति सप्तम्यास्त्रल् । 'इतरेभ्योऽपि दृश्यत' इति । ताभ्यामुभाभ्यां पुत्र एवातिशयेन दोषवान् । तत्र पूर्ववत्यामुत्पन्नौ कुण्डगोलकौ । 'पत्यौ जीवति कुण्डस्स्यान्मृते भर्तरि गोलक' इति । असंस्कृतायामुत्पन्नस्य नामान्तरं नास्ति । किं तु दुष्टत्वमेव। वर्णान्तरे तु जात्यन्तरम् । तत्र गौतमः— 'अनुलोमाः पुनरनन्तरैकान्तरद्व्यन्तरा सुजातास्सवर्णाम्बष्ठोग्रनिषाददौष्यन्तपारशवाः। प्रतिलोमास्तु सूतमागधायोगपक्षत्तृवैदेहकचण्डाला' इति । एवकारो दुहितृनिवृत्त्यर्थः। तथा च वासिष्ठः—'पतितेनोत्पादितः पतितो भवत्यन्यत्र स्त्रियास्साहि परगामिनी तामरिक्थामुपेयादिति । 'स्त्रीरत्नं दुष्कुलादपी'ति मनुः ॥ ४ ॥ पुत्रेभ्यो दायभागं वक्ष्यन् अन्यस्य भार्यायामन्येनोत्पादितः किमुत्पादयितुराहोस्वित् क्षेत्रिण इति विचारे निर्णयमाह—*उत्पादयितुः पुत्र इति हि ब्राह्मणम् ॥५॥ ९ ॥ न केवलं

ब्राह्मणमेव । वैदिकगाथा अप्यत्रोदाहरन्तीत्याह — * **अथाप्युदाहरन्ति । इदानीमेवाहं जनकस्त्रीणामीर्ष्यामि नो पुरा । यदा यमस्य सादने जनयितुः पुत्रमब्रुवन् । रेतोधाः पुत्रं नयति परेत्य यमसादने तस्माद्भार्यां रक्षन्ति बिभ्यन्तः पररेतसः । अप्रमत्ता रक्षथ तन्तुमेतं मा वः क्षेत्रे परबीजानि वाप्सुः । जनयितुः पुत्रो भवति साम्पराये मोघं वेत्ता कुरुते तन्तुमेतमिति** ॥ ६ ॥ जनयितुः पुत्रः क्षेत्रिणो वेति विवादे पराजितस्य क्षेत्रिणो वचनम् । एतावन्तं कालं जनको मन्यमान इदानीमेव स्त्रीणामीर्ष्यामि परपुरुषसंसर्गं न सहे । तदानीं कुत इति चेत् यदा यमस्य सादने पितृलोके जनयितुः पुत्रो भवति पुत्रकृत्यं परलोकगतस्य जनयितुरेव न क्षेत्रिण इत्यब्रुवन् धर्मज्ञाः । युक्त एवार्थः किञ्चिद्विशेषेणोच्यते । रेतोधा बीजप्रदः पुत्रं नयति पुत्रदत्तं पिण्डादिकमात्मानं नयति प्रापयति । परेत्य मृत्वा । यमसादने यमलोके । तस्मात्कारणात् भार्यां रक्षन्ति पररेतसो बिभ्यन्तः । छान्दसो नुम् । बिभ्यतः । अतो यूयमप्यप्रमत्ता अवहिता भूत्वा एतं तन्तुं प्रजासन्तानं रक्षथ । लोडर्थे लट् । रक्षतेत्यर्थः । वः युष्माकम् । क्षेत्रे परबीजानि पररेतांसि मावाप्सुः । व्यत्ययेनात्र कर्मणि कर्तृप्रत्ययः । मावाप्सत उप्तानि मा भूवन् मोप्येरन् । कथमिति । साम्पराये परलोके जनयितुरेव पुत्रो भवति वेत्ता परिणेता क्षेत्री तु एतं तन्तुं कुटुम्बं मोघं निष्प्रयोजनं कुरुते नात्ममात्करोति । इतिशब्दो गाथासमाप्तौ । एतच्च क्षेत्रिणोऽनुज्ञामन्तरेण पुत्रोत्पादनविषयम् । यदा तु क्षेत्री वन्ध्यो रुग्णो वा प्रार्थयते मम क्षेत्रे पुत्रमुत्पादयेति । यदा वा सन्तानक्षये विधवा नियुज्यते यथा विचित्रवीर्यस्य क्षेत्रे सत्यवत्या व्यासेन । तदुत्पन्नः पुत्र उभयोरपि पुत्रो भवति बीजिनः क्षेत्रिणश्च द्व्यामुष्यायणश्च स भवति । तथाचाचार्य एवाह—यदि द्विपिता स्यादेकैकस्मिन् पिण्डे द्वौ द्वावुपलक्षयेदिति । याज्ञवल्क्योऽप्याह—'अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः । उभयोरप्यसौ रिक्थी पिण्डदाता द्विधर्मतः ॥' इति । द्व्यामुष्यायणको दद्याद्द्वाभ्यां पिण्डोदके पृथक् । रिक्थादर्धं समादद्याद्बीजक्षेत्रवतोस्तथा ॥' इति ॥६॥ यदि

पूर्ववत्यादिमैथुने दोषः कथं तर्हि उचथ्यभारद्वाजौ भ्रातृव्यस्य भार्ये जग्मतुः । वसिष्ठश्चाण्डालीमक्षमालाम् । प्रजापतिश्च स्वां दुहितरम् । तत्राह— * दृष्टो धर्मव्यतिक्रमस्साहसं च पूर्वेषाम् ॥ ७ ॥ सत्यं दृष्टोऽमाचारः पूर्वेषाम् । स तु धर्मव्यतिक्रमः न धर्मः । गृह्यमाणकारणत्वात् ॥ ७ ॥ न चैतावदेव साहसं च पूर्वेषां दृष्टम् ; यथा जामदग्न्येन रामेण पितृवचनादविचारेण मातुश्शिरश्छिन्नं किमिदानीं तेषामपि दोषो नेत्याह —*तेषां तेजोविशेषेण प्रत्यवायो न विद्यते ॥ ८ ॥ तादृशं हि तेषां तेजः । यदेवंविधैरपि पाप्मभिर्न प्रत्यवयन्ति । तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयते एवं हैषां पाप्मानः प्रदूयन्ते ॥ ८ ॥ न चैतावता अर्वाचीनानामपि तथा प्रसङ्ग इत्याह—* तदन्वीक्ष्य प्रयुञ्जानस्सीदत्यवरः ॥ ९ ॥ तदिति नपुंसकमनपुंसकेनेत्येकशेष एकवद्भावश्च । तं व्यतिक्रमं तच्च साहसमन्वीक्ष्य दृष्ट्वा स्वयमपि तथा प्रयुञ्जानोऽवरः इदानीन्तनः सीदति प्रत्यवैति ; न ह्यग्निः सर्वं दहतीत्यस्माकमपि तथा शक्तिरिति ॥ ९ ॥ पुत्रप्रसङ्गेनाह—*दानं क्रयधर्मश्चापत्यस्य न विद्यते ॥ १० ॥ दानग्रहणेन विक्रयोऽपि गृह्यते । त्यागसामान्यात् । क्रयधर्म इति च प्रतिग्रहस्यापि ग्रहणम् । धर्मग्रहणात् स्वीकारसामान्याच्च । अपत्यस्य दानप्रतिग्रहक्रयविक्रया न कर्तव्याः । द्वादशविधेषु पुत्रेषु दत्तक्रीतयोरपि पुत्रयोर्मन्वादिभिः पठितत्वान्नायं सामान्येन प्रतिषेधः । किं तर्हि । ज्येष्ठपुत्रविषय एकपुत्रविषयः स्त्रीविषयो वा । तथा च वसिष्ठः—'न ज्येष्ठं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा न त्वेकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्वेषां न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानाद्भर्तुः पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राज्ञे निवेद्य निवेशनस्य मध्ये अग्निमुपसमाधाय सम्परिस्तीर्य व्याहृतीभिर्हुत्वा दूरे बान्धवं सन्निकृष्टमेव प्रतिगृह्णीया'दिति । विश्वजिति च सर्वस्वदाने गवादिवदपत्यं न देयमिति । विक्रयस्तु सर्वत्र निषिद्धः । तत्र उपपातकेषु याज्ञवल्क्य आह—'नास्तिक्यं व्रतलोपश्च सुतानां चैव विक्रयः ।' इति । बह्वृचब्राह्मणेऽपि शुनश्शेपाख्याने दृश्यते—'स ज्येष्ठं पुत्रं निगृह्णान उवाचे'त्यादि । पुत्रप्रकरणे अपत्य,

शब्दोपादानमपि ज्येष्ठपुत्रविषयत्वस्य लिङ्गम् । न पतन्त्यनेनेत्यपत्यमिति । 'ऋणमस्मिन् सन्नयत्यमृतत्वं च गच्छति । पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥' इति ॥ १० ॥ **विवाहे दुहितृमते दानं काम्यं धर्मार्थं श्रूयते तस्माद्दुहितृमतेऽतिरथं शतं देयं तन्मिथुयाकुर्यादिति तस्यां क्रयशब्दस्संस्तुतिमात्रं धर्माद्धि सम्बन्धः ॥ ११ ॥** आर्षे विवाहे दुहितृमते दानं क्वचिद्वेदे श्रूयते । तस्माद्दुहितृमते रथेनाधिकं गवां शतं देयम् । तच्च दुहितृमान् मिथुया कुर्यात् मिथ्या कुर्यात् मा देवानां मिथुया कर्भागधेयमिति दृश्यते । मिथुया कुर्यादिति कोऽर्थः वरायैव पुनर्दद्यादिति । तद्दानं काम्यं कामनिमित्तम् । 'यथा युक्तो विवाहस्तथायुक्ता प्रजा भवती'ति ऋषितुल्याः पुत्रा यथास्युरिति । ततश्च धर्मार्थं न क्रयार्थम् । यस्तु तस्यां विवाहक्रियायां क्रयशब्दः क्वचित् स्मृतौ दृश्यते, स संस्तुतिमात्रम् । द्रव्यप्रदानसाम्यात् । न मुख्यक्रयत्वप्रतिपादनार्थम् । कुतः, हि यस्मात् धर्मादेव हेतोः सम्बन्धो दम्पत्योरित्यार्षे दुहितृमते मिथुनौ गावौ देयाविति । अत्राप्येष एव न्यायः । अत्र मनुः—'यासामाददते शुल्कं ज्ञातयो न स विक्रयः । अर्हणं तत्कुमारीणामानृशंस्यं च केवलम् ॥' इति । एतच्च सर्वं दानं 'क्रयधर्मश्चापत्यस्य न विद्यत' इत्यस्य व्यभिचारनिवृत्त्यर्थं कर्तव्यमित्युक्तम् ॥ ११ ॥

इति त्रयोदशी खण्डिका ॥ प्र०२ प०६ ख० १३ ॥

---

अथ दायविभागः—***एकधनेन ज्येष्ठं तोषयित्वा जीवन् पुत्रेभ्यो दायं व्यभजेत् समं क्लीबमुन्मत्तं पतितं च परिहाप्य ॥ १ ॥** एकेन प्रधानेन गवादिना ज्येष्ठं पुत्रं तोषयित्वा तृप्तं कृत्वा जीवन्नेव पुत्रेभ्यो दायं व्यभजेत् । सममात्मना परस्परं च तेषां सामान्याभिधानात् क्रमागतं स्वयमार्जितं च । क्लीबादीन् वर्जयित्वा । क्लीबादिग्रहणं जात्यन्धानामुपलक्षणम् । यथाह मनुः—'अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा । उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः ॥' इति । अन्धादीनां पुत्रसद्भावे तदंशहरा । उन्मत्तपतितौ निवृत्ते निमित्ते क्ली-

वादयस्तु भर्तव्याः । अत्र विभागकालः स्मृत्यन्तरवशाद्ग्राह्यः । तत्र ना-
रदः—'मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च । निवृत्ते चापि मरणा-
त्पितर्युपरतस्पृहे ॥' इति। यदा पुत्राणां पृथक्पृथक् धर्मानुष्ठाने शक्तिश्रद्धे
भवतः सोऽपि कालः । 'तस्माद्धर्म्या पृथक्क्रियेति' दर्शनात्। 'जीवन्नि'ति-
वचनात् जीवन्नेवावश्यं पुत्रान् विभजेत् एष धर्म इति प्रतिपादनाय। अन्यथा
तदनर्थकम् । अजीवतोऽप्रसङ्गात् अजीवन्निति स्मृत्यन्तरेषु स्वयमार्जिते पि-
तुरिच्छया विषमविभागो दर्शित । न स धर्म्य इत्याचार्यस्य पक्षः । भा-
र्याया अप्यंशो न दर्शितः । आत्मन एवांशस्तस्या अपीति मन्यन्ते ।
वक्ष्यति च 'जायापत्योर्न विभागो विद्यत' इति। केचित्तु पितुर्द्व्यंशावित्या-
हुः । 'द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिते'ति दर्शनात्। अस्मिन्नप्या-
चार्यस्य पक्षो न भवति । यथा पुत्राणामेकैक एवांशो भवति तथा पि-
तुरपीति । यद्वा पुत्राणामेवांशसाम्यम् आत्मनस्त्वाधिक्येऽपि न दोषः ।
तत्र हारीतः—'पिता ह्याग्रयणः पुत्रा इतरे ग्रहाः पुत्राग्रयणमस्कन्दं तु पद-
स्येदितरेभ्यो गृह्णीयादि'ति । विभागात्पूर्वं पित्रोर्जीवतोरधिकं पुत्रभागेभ्यो
ग्राह्यमित्युक्तं भवति । इति जीवद्विभागः ॥ १ ॥ अथ मृते कुटुम्बिनि
तद्धनस्य गतिमाह—*पुत्राभावे यः प्रत्यासन्नः सपिण्डः ॥ २ ॥ 'पुत्रा-
भाव' इति वचनात् सत्सु पुत्रेषु त एव गृह्णीयुरविशेषात्सिद्धम् । अत्र नार-
दीये विशेषः—'यच्छिष्टं पितृदायेभ्यो दत्त्वर्णं पैतृकं च यत् । भ्रातृ-
भिस्तद्विभक्तव्यमृणी स्यादन्यथा पिता ॥' इति । कात्यायनेन तु—'भ्रातृ-
पितृव्यमातृभ्यां कुटुम्बार्थमृणं कृतम् । विभागकाले देयं तद्रिक्थिभिः सर्वैरे-
व तु' इति ॥ अत्र याज्ञवल्क्यः—'पितुरूर्ध्वं विभजतां माताप्यंशं समं ह-
रे'दिति। तदत्र नोक्तम्। पुत्रैरेव सह वृत्तिरस्या इति । तथा च मनुः—'पि-
ता रक्षति कौमारे भर्ता रक्षति यौवने । पुत्रास्तु स्थविरीभावे न स्त्री स्वात-
न्त्र्यमर्हति ॥' इति । एवं मातुरप्यंशाभावे तद्धनं भर्तृकुलाल्लब्धं स्वयमार्जितं
च तत्पुत्रा अप्रत्ता दुहितरश्च गृह्णीयुः । 'स्त्रीधनं तदपत्यानां दुहिता च
तदंशिनी ॥ अप्रत्ता चेत्समूढा तु लभते मानमात्रक'मिति बृहस्पतिः ।
'पितृकुलल्लब्धं चाप्रत्ता एव दुहितरः' । 'मातुस्तु यौतकं यत्स्यात् कुमा-

रीभाग एव सः ।' इति । मनुः 'अथ प्रत्ता दुहितरः पुत्राश्च जननी तद जनन्यां संस्थितायां तु समं सर्वे सहोदराः ॥ भजेरन्मातृकं रिक्थं भगिन श्च सनाभयः ।' इति मानवमेव । अत्र व्यासः—'असंस्कृतास्तु ये त पैतृकादेव ते धनात् । संस्कार्या भ्रातृभिर्ज्येष्ठैः कन्यकाश्च यथाविधि ॥' इति अत्र क्रमविवाहे बृहस्पतिः–'ब्रह्मक्षत्रियविट्छूद्रा विप्रोत्पन्नास्त्वनुक्रमात् चतुस्त्रिद्व्येकभागेन भजेयुस्ते यथाक्रमम् ॥ क्षत्रजास्त्रिद्व्येकभागा विड्ज तु द्व्येकभागिनौ ।' इति । मानवे च स्पष्टमुक्तम्—'सर्वं वा रि क्थजातं तद्दशधा प्रविभज्य तु । धर्म्यं विभागं कुर्वीत विधिना ते धर्मवित् ॥ चतुरोऽंशान् हरेद्विप्रः त्रीनंशान् क्षत्रियासुतः । वैश्यापु त्रो हरेद्द्व्यंशमंशं शूद्रासुतो हरेत् ॥' इति । यस्य तु ब्राह्मणी वन्ध्या मृता वा तत्र क्षत्रियादिसुतास्त्रिद्व्येकभागाः । यस्य त्वेकस्यामिव पुत्रस्सर्वं हरेत शूद्रापुत्रवर्जम् । यथाह देवलः–'आनुलोम्यैकपुत्रस्तु पितुस्सर्वस्वभाग्भवेत् निषाद एकपुत्रस्तु विप्रस्वस्य तृतीयभाक् ॥ द्वौ सपिण्डस्सकुल्यो वा स्वधादाता तु संहरेत् ' इति । निषादः पारशवः । क्षेत्रविषये बृहस्पतिः— न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै । यद्यप्यस्य पिता दद्यान्मृते विप्रासुतो हरेत् ॥ शूद्र्यां द्विजातिभिर्जातो न भूमेर्भागमर्हति । सजातावाप्नुयात्सर्वमिति धर्मो व्यवस्थितः ॥' इति । याज्ञवल्क्यः—'जातो हि दास्यां शूद्रेण कामतोऽंशहरो भवेत् । मृते पितरि कुर्युस्त भ्रातरस्त्वर्धभागिकम् ॥' इति । भार्याविषये विष्णुः—'मातरः पुत्रभागानुसारतो भागहारिण्य' इति । अत्र, औरसः पुत्रिकाबीजक्षेत्रजौ पुत्रिकासुतः । पुनर्भवश्च कानीनस्सहोढो गूढसम्भवः । दत्तः क्रीतस्स्वयंदत्तः कृत्रिमश्चापविद्धकः । यत्र क्वचोत्पादितश्च पुत्राख्या दश पञ्च च । अनेनैव क्रमेणैषां पूर्वाभावे परःपरः । पिण्डदोंऽशहरश्चेति प्रायेण स्मृतिषु स्थितिः ॥ तत्रौरसो धर्मपत्नीजः । 'सवर्णापूर्वशास्त्रविहितायाम्' इति पूर्वमुक्तः । गौतमः—'पितोत्सृजेत्पुत्रिकामनपत्योऽग्निं प्रजापतिं चेष्ट्वाऽस्मदर्थमपत्यमिति संवाद्ये'ति । बृहस्पतिः—'एक एवौरसः पित्र्ये धने स्वामी प्रकीर्तितः । तत्तुल्या पुत्रिका प्रोक्ता भर्तव्यास्त्वपरे स्मृताः ॥' इति । मनुः—'पुत्रिकायां कृतायां तु

यदि पुत्रोऽनुजायते। समस्तत्र विभागः स्यात् ज्येष्ठता नास्ति हि स्त्रियाः इति । याज्ञवल्क्यः—'अपरेण परक्षेत्रे नियोगोत्पादितः सुतः । उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥' इति। अयमेक एवोत्पादयितुर्बीजतः क्षेत्रजस्तु क्षेत्रिणः । बृहस्पतिः—'पुत्रोऽथ पुत्रिकापुत्रस्स्वर्गप्राप्तिकरावुभौ । रिक्थे पिण्डाम्बुदाने च समौ सम्परिकीर्तितौ ॥' इति । काश्यपः—'सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः । वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला । उदकं स्पर्शिता या च या च पाणिगृहीतका । अग्निं परिगता या च पुनर्भूप्रसवा च ये'ति ॥ 'क्लीबं विहाय पतितं या पुनर्लभते पतिम् । तस्यां पौनर्भवो जातः व्यक्तमुत्पादकस्य सः ॥' इति । मनुः—'पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः । तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवः ॥' इति । नारदः—'कानीनश्च सहोढश्च गूढायां यश्च जायते । तेषां वोढा पिता ज्ञेयस्ते च भागहराः पितुः ।' इति । वसिष्ठः—'अप्रत्ता दुहिता यस्य पुत्रं विन्देत तुल्यतः । पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम् ॥' इति । अनूढायामेव मृतायां मातामहस्य पुत्रः अन्यथा वोढुः । मनुः—'या गर्भिणी संस्क्रियते ज्ञाताज्ञातापि वा सती । वोढुस्स गर्भो भवति सहोढ इति चोच्यते । उत्पद्येत गृहे यस्य न च ज्ञेया न कस्यचित् । स गृहे गूढउत्पन्नस्तस्य स्याद्यस्य तल्पजः ॥ दत्तः पूर्वमेवोक्तः । पैठीनसिः—'अथ दत्तक्रीतकृत्रिमपुत्रिकापुत्राः परपरिग्रहणे आर्षेयेण जाताः ते असंहतकुलीना द्व्यामुष्यायणा भवन्ती'ति । मनुः—'भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान् भवेत् । सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ क्रीणीयाद्यस्त्वपत्यार्थे मातापित्रोर्यमन्तिकात् । स क्रीतकस्सुतस्तस्य सदृशोऽसदृशोऽपि वा। मातापितृविहीनो यस्त्यक्तो वास्यादकारणात् । आत्मानं स्पर्शयेद्यस्य स्वयं दत्तस्तु स स्मृतः ॥' इति । सदृशं तु प्रकुर्यात्तं गुणदोषविवर्जितम् । पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः ॥ मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा । यं पुत्रं प्रतिगृह्णीयादपविद्धः स उच्यते ॥' इति । सर्वे एते सजातीयाः । 'सजातीयेष्वयं प्रोक्तस्तनयेषु यथाविधि ।' इति याज्ञवल्क्यवचनात् । विष्णुः—'यत्र क-

चनोत्पादितस्तु द्वादश' इति । याज्ञवल्क्यः—'पिण्डदोऽशहरश्चैषां पूर्वाभावे परः परः ।' इति । मनुः—'श्रेयसःश्रेयसोऽभावे पापीयान् रिक्थमर्हति ।' इति । नारदः—'क्रमादेते प्रवर्तन्ते मृते पितरि तद्धने। ज्यायसोज्यायसोऽभावे जघन्यस्तदवाप्नुयात् ॥' इति । देवलः—'सर्वे ह्यनौरसस्यैते पुत्रा दायहराः स्मृताः । औरसे पुनरुत्पन्ने तेषु ज्यैष्ठ्यं न तिष्ठति । तेषां सवर्णा ये पुत्रास्ते तृतीयांशभागिनः । शेषास्तमुपजीवेयुर्ग्रासाच्छादनसम्भृताः ॥' इति । मनुः—'षष्ठं तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात् । औरसो विभजन् दायं पित्र्यं पञ्चममेव वा ॥' इति । बृहस्पतिः—'क्षेत्रजाद्यास्सुतास्त्वन्ये पञ्चषट्सप्तभागिनः ।' इति । हारीतः—'विभजिष्यमाण एकविंशं कानीनाय दद्याद्विंशं पौनर्भवायैकोनविंशं द्व्यामुष्यायणायाष्टादशं क्षेत्रजाय सप्तदशं पुत्रिकापुत्रायेतरानौरसाये'ति । वसिष्ठः—'पुत्रं प्रतिग्रहीष्य'न्निति प्रक्रम्य 'तस्मिंश्चेत्प्रतिगृहीते औरस उत्पद्येत चतुर्भागभागि'ति । एवमेतेषु शास्त्रेषु विद्यमानेषु यदाचार्येण पूर्वमुक्तं 'तेषां कर्मभिस्सम्बन्धो दायेनाव्यतिक्रमश्चोभयो'रिति तद्धर्मपत्नीजे पुत्रे सति क्षेत्रजादीनां सर्वांशहरत्वप्रतिषेधपरं वेदितव्यम् । अथाविभाज्यम् । अत्र मनुः—'अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्जयेत् । स्वयमर्हति लब्धं तन्नाकामो दातुमर्हती'ति । कात्यायनः—'नाविद्यानां तु वैद्येन देयं विद्याधनात् क्वचित् । समविद्याधनानां तु देयं वैद्येन तद्धनम् ॥ परभक्तप्रदानेन प्राप्तविद्यो यदाप्नुयात् । तया प्राप्तं तु विधिना विद्याप्राप्तं तदुच्यते ॥' इति । व्यासः—'पितामहपितृभ्यां च दत्तं मात्रा च यद्भवेत् । तस्य तन्नापहार्यं स्याच्छौर्यभार्याधनं च यत् ॥' इति । याज्ञवल्क्यः—'क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः । दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ॥ पत्यौ जीवति यस्स्त्रीभिरलङ्कारो धृतो भवेत् । न तं भजेरन् दायादा भजमानाः पतन्ति ते ॥' व्यासः—'साधारणं समाश्रित्य यत्किञ्चिद्वाहनायुधम् । शौर्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः ॥ तस्य भागद्वयं देयं शेषास्तु समभागिनः ॥' इति पुत्रदायविभागः ॥ तदभावे तु मृतस्य यः प्र

त्यासन्नः सपिण्डः सः किं दायं हरेतेति वक्ष्यमाणेन सम्बन्धः । 'लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । सप्तमः पिण्डदातैषां सापिण्ड्यं साप्तपूरुषम् ॥' इति सपिण्डलक्षणम् । तेषु योयः प्रत्यासन्नस्सस गृह्णीयादिति। भार्यां तु रिक्थग्राहिणस्सपिण्डाद्या रक्षेयुर्न तु दायग्रहणमित्याचार्यस्य पक्षः। श्रूयते हि तस्मात् स्त्रियो निरिन्द्रिया अदायादाइति । मनुरपि—'अनिन्द्रिया अदायादाः स्त्रियो नित्यमिति स्थिति'रिति। अत्र सपिण्डाद्यभावे बृहस्पतिः—'अन्यत्र ब्राह्मणात्किं तु राजा धर्मपरायणः । तत्स्त्रीणां जीवनं दद्यादेष दायविधिस्स्मृतः ॥ अन्नार्थं तण्डुलप्रस्थमपराह्णे तु सेन्धनम्। वसनं त्रिपणक्रीतं देयमेकं त्रिमासतः ॥ एतावदेव साध्वीनां चोदितं विधवा धनम् । वसनस्याशनस्यैव तथैव रजकस्य च । धनं व्यपोह्य तच्छिष्टं दायादानां प्रकल्पयेत् । धूमावसानिकं ग्राह्यं सभायां स्नानतः परा । वसनाशनवासांसि विगणय्य धवे मृते ॥' इति । व्यासः—'द्विषाहस्रः परो दायः स्त्रियै देयो धनस्य तु । यच्च भर्त्रा धन दत्त सा यथाकाममाप्नुयात्॥' इति । पणानां द्वे सहस्रे परिमाणस्य द्विषाहस्र' । एष परो दायः स्त्रियो नाधिक इति । एतत प्रभूते धने ज्ञातयश्च न रक्षेयुरिति शङ्कायाम्। एवं 'पत्नी दुहितरश्चे'त्यादीनि यानि पत्न्या दायप्राप्तिपराणि तान्येवमेव द्रष्टव्यानि । गौतमस्तु, पुत्राभावे पत्न्यास्सपिण्डादिभिस्समांशमाह—'पिण्डगोत्रर्षिसम्बन्धा रिक्थं भजेरन् स्त्री चानपत्यस्ये'ति । अस्यार्थः अनपत्यस्य रिक्थं पिण्डसम्बन्धास्सगोत्रास्तदभावे ऋषिसम्बन्धास्समानप्रवराः स्त्री च पत्नी च । अत्र स्त्रिया सहितास्सपिण्डा भजेरन् तदा स्त्री सह तैरेकमंशं गृह्णीयात् । ततश्च 'पितुरूर्ध्वं विभजतां मातास्यंशं समाहरे'दिति सपिण्डादिभिस्सह ग्रहणमुक्तमिति । वयमप्येतमेव पक्षं रोचयामहे । अत्र पितरि भ्रातरिचासोदर्ये जीवति सोदर्यो भ्राता गृह्णीयादित्येके मन्यन्ते । तथा च शङ्खः—'अपुत्रस्य स्वर्यातस्य द्रव्यं भ्रातृगामि तदभावे मातापितरौ लभेयातां पत्नी वा ज्येष्ठे'ति देवलः—'ततो दायमपुत्रस्य विभजेरन् सहोदराः । कुल्या दुहितरो वापि ध्रियमाणः पितापि च । सवर्णा भ्रातरो माता भार्या चेति यथाक्रमम् ॥'इति । याज्ञवल्क्यः—'संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः । दद्याच्चाप

हरेच्चांशं जातस्य च मृतस्य च । अन्योदर्यस्तु संसृष्टी नान्योदर्यधनं ह
असंसृष्ट्यपि चादद्यात्सोदर्यो नान्यमातृजः ॥' इति । अत्र सोदरवि
मिति प्रत्यासत्त्यतिशयात् पित्रैवेत्याचार्यस्य पक्षः । तदभावे सोदर्यस
भावे तत्पुत्रस्तदभावे भिन्नोदरास्तदभावे पितृव्य इत्यादि द्रष्टव्यम् । मा
दयोऽपि स्त्रियो जीवनमात्रं लभेरन्निति ॥ २ ॥ ***तदभाव आचार्य उ
चार्याभावे अन्तेवासी हृत्वा तदर्थेषु धर्मकृत्येषु वोपयोजयेत् ॥ ३**
सपिण्डाभावे आचार्यो दायं हरेत् तस्याप्यभावे अन्तेवासी हरेत् । हृत
तदर्थेषु धर्मकृत्येषु तटाकखननादिषूपयोजयेत् । वाशब्दात् स्वयं वा उप
ञ्जीत ॥ ३ ॥ ***दुहिता वा ॥ ४ ॥** दुहिता वा दायं हरेत् । पुत्राभाव इत्ये
अनन्तरोक्ते विषय इत्यन्ये ॥ ४ ॥ ***सर्वाभावे राजा दायं हरेत् ॥ ५**
सर्वग्रहणात् बन्धूनां सगोत्राणां चाप्यभावे ॥ ५ ॥ * **ज्येष्ठो दायाद इत्ये
॥ ६ ॥** एक एव मन्यन्ते ज्येष्ठ एव पुत्रो दायहरः । इतरे तु तमुपजी
युः । सोऽपि तान् पितेव परिपालयेदिति । तथा च गौतमः— 'स
वा पूर्वजस्येतरान् बिभृयात्पितृव'दिति ॥ ६ ॥ * **देशविशेषे सुवर्णं कृ
ष्णा गावः कृष्णं भौमं ज्येष्ठस्य ॥ ७ ॥** क्वचिद्देशे सुवर्णादि ज्येष्ठस्य
भाग इत्याहुः । भूमौ जातं भौमं धान्यं कृष्णं माषादि । कृष्णायसमि
त्यन्ये ॥ ७ ॥ * **रथः पितुः परिभाण्डं च गृहे ॥ ८ ॥** रथः पितुरंश
गृहे च यत् परिभाण्डमुपकरणं पीठादि तदपि ॥ ८ ॥ ***अलङ्कारो भा
र्यायाः ज्ञातिधनं चेत्येके ॥९॥** भार्यायास्तु धृतोऽलङ्कारोऽशः ज्ञातिभ्य
पित्रादिभ्यश्च यल्लब्धं धनं तच्चेत्येवमेके मन्यन्ते ॥ ९ ॥ * **तच्छास्त्रैर्वि
प्रतिषिद्धम् ॥१०॥** ज्येष्ठो दायाद इति यदुक्तं तच्छास्त्रविरुद्धम् ॥ १० ॥
येन विरुद्धं तद्दर्शयति— * **मनुः पुत्रेभ्यो दायं व्यभजदि
त्यविशेषेण श्रूयते ॥ ११ ॥**पुत्रेभ्य इति बहुवचननिर्देशादविशेषेण श्रव-
णमत्र चोद्यम् ॥ ११ ॥ **अथापि तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाय-
यन्तीत्येकवच्छ्रूयते ॥ १२ ॥** अथापि ननु चेत्यर्थः । ज्येष्ठं पुत्रं धनेन
निरवसाययन्ति पृथक्कुर्वन्तीत्येकवदपि श्रूयते । यथा एक एव ज्येष्ठो
दायादः तदनुरूपमपि श्रूयत इति ॥ १२ ॥ परिहरति— * **अथापि**

**नित्यानुवादमविधिमाहुर्न्यायविदो यथा तस्मादजावयः पशूनां सहचरन्तीति । तस्मात् स्नातकस्य मुखं रेफायतीव । तस्मात् बस्तश्च श्रोत्रियश्च स्त्रीकामतमाववाति** ॥ १३ ॥ अथापीति परिहारोपक्रमे पशूनां मध्ये अजाश्चावयश्च जातिभेदेऽपि सहचरन्ति । रेफा शोभा । इह तु तद्वत्यभेदोपचारः । ततः क्यङ् । स्नातकस्य मुखं कुण्डलादिना शोभते । इवशब्दो वाक्यालङ्कारे । श्रोत्रियस्य स्त्रीकामतमत्वमाचार्यकुले चिरकालं ब्रह्मचारिवासात् । यथैतानि वाक्यानि दृष्टमात्रमनुवदन्ति न किञ्चिद्विदधति तस्मात् ज्येष्ठं पुत्रमित्यादिकमपि अविधिरिति न्यायविद आहुः । न केवलमयमेवानुवादः, किं तर्हि 'मनु पुत्रेभ्य' इत्ययमप्यनुवादः ॥१३॥ ***सर्वे हि धर्मयुक्ता भागिनः** ॥ १४ ॥ हि शब्दो हेतौ । यस्मादेतावनुवादौ न कस्यचिद्विधायकौ तस्माद्ये धर्मयुक्ताः पुत्रास्सर्वे एते भागिनः ॥ १४॥ **यस्त्वधर्मेण द्रव्याणि प्रतिपादयति ज्येष्ठोऽपि तमभागं कुर्वीत** ॥१५॥ यस्तु ज्येष्ठोऽप्यधर्मेण द्रव्याणि प्रतिपादयति विनियुङ्क्ते तमभागं कुर्वीत जीवद्विभागे पिता भागं न दद्यात् । ऊर्ध्वं विभागे पितुर्भ्रातरः । अपिशब्दात् किमुतान्यमिति ज्येष्ठस्य प्राधान्यं ख्याप्यते । जीवन् पुत्रेभ्य इत्यनेन दम्पत्योस्सहभावो दर्शितः । तत्र कारणमाह— ॥ १५ ॥ *** जायापत्योर्न विभागो विद्यते** ॥ १६ ॥ स्पष्टम् ॥ १६ ॥ कस्मात्— **पाणिग्रहणाद्धि सहत्वं कर्मसु** ॥ १७ ॥ कर्मार्थं द्रव्यम् । जायायाश्च न पृथक्कर्मस्वधिकारः । किं तर्हि सहभावेन यस्त्वया धर्मश्च कर्तव्यस्सोऽनया सहेति वचनात् । तत्र किं पृथक् द्रव्येणेति ॥ १७ ॥ ***तथा पुण्यफलेषु द्रव्यपरिग्रहेषु च** ॥ १८ ॥ पुण्यफलेषु स्वर्गादिष्वपि तथा सहत्वमेव । 'दिवि ज्योतिरजरमारभेता'मित्यादिभ्यो मन्त्रलिङ्गेभ्यः । द्रव्यपरिग्रहेषु च द्रव्यार्जनेष्वपि तथा सहत्वमेव तद्वत् । पतिरार्जयति जाया गृहे विवर्हतीति योगक्षेमावुभयायत्ताविति द्रव्यपरिग्रहेऽपि सहत्वम् । ॥ १८ ॥ एतदेवोपपादयति *** न हि भर्तुर्विप्रवासे नैमित्तिके दाने स्तेयमुपदिशन्ति** ॥१९॥ हि यस्मात् भर्तुर्विप्रवासे सति नैमित्तिके छिन्दत्पाणि दद्यादित्यादिके दाने कृते भार्याया न स्तेयमुपदिशन्ति धर्मज्ञाः । यदि भर्तुरेव

द्रव्यं स्यात् स्यादेव स्तेयं नैमित्तिके दान इति वचनात्। विषयान्तरे भवत्येव। एतदेव द्रव्यसाधारण्येऽपि दम्पत्योर्वैषम्यं यत् पतिर्यथेष्टं युङ्क्ते जाया त्वेतावदेवेति। न च पत्युस्स्वयमार्जितस्य विनियोगे जाया अनुमत्यपेक्षा। स्वतन्त्रत्वात्। स्वतन्त्रो ह्यसौ गृहे यथा राजा रा अत एव भार्यायास्स्तेयशङ्का न भर्तुः ॥ १९॥

इति त्रयोदशी खण्डिका ॥ प्र०२ प०६ ख० १३ ॥

---

*एतेन देशकुलधर्मा व्याख्याताः ॥ १ ॥ ज्येष्ठो दायाद त्यादिकं शास्त्रविप्रतिषेधादप्रमाणमित्युक्तम्। एतेन देशधर्माः कुलधर्म व्याख्याताः। शास्त्रविप्रतिषिद्धा मातुलसुतापरिणयनादयो प्रमाणं परीताः अप्रमाणमिति। गौतमोऽप्याह—'देशकुलधर्माश्चाम्नायैरविरु प्रमाण'मिति ॥ १ ॥ *मातुश्च योनिसम्बन्धेभ्यः पितुश्चासप्तमाद्या ता वा सम्बन्धो ज्ञायते तेषां प्रेतेषूदकोपस्पर्शनं गर्भान्परिहाप्य परिसंवत्सरान् ॥ २ ॥ मातुर्योनिसम्बन्धा मातुलादयः पितुश्चासप्तम पुरुषात् सम्बन्धास्सपिण्डादयः पैतृष्वस्रेयादयश्च तेभ्य आरभ्यासप्तम दित्यन्वयः। यावता वान्तरेण सम्बन्धो ज्ञायते स्मर्यते जन्मना नाम वामुष्यायमस्मत्कूटस्थस्य वंश्य एवनामेति। तथा च मनुः—'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते। समानोदकभावस्तु जन्मनाम्नोरवेदने। इति। य एवंभूताः पुरुषास्तेषां प्रेतेषु मृतेषु उदकोपस्पर्शनं कर्तव्यम्। गर्भान् बालान् अपरिसंवत्सरानपरिपूर्णसंवत्सरान् परिहाप्य वर्जयित्वा बालेषु स्नानं कर्तव्यम् इति ॥२॥ *मातापितरावेव तेषु भर्तारश्च ॥३ बालेषु मृतेषु मातापितरावेवोदकस्पर्शनं कुर्यातां भर्तारश्च ये च तान् बालान् मृतान् हरन्ति निर्हरन्ति तेऽप्युदकोपस्पर्शनं कुर्युरिति। एवमाचार्यस्य पक्षः ॥३॥ *भार्यायां परमगुरुसंस्थायां चाकालमभोजनम् ॥४॥ भार्या पत्नी। परमगुरव आचार्यमातापितरः। संस्था मरणम्। भार्यायां संस्थितायां परमगुरूणां च संस्थायां सत्यां न केवलमुदकोपस्पर्शनं, किं तर्हि अपरेद्युः आ तस्मात्कालात् अभोजनं च ॥४॥ किं च—आतुरव्य

**स्नानानि कुर्वीरन्** ॥५॥ आतुरत्वं व्यज्यते यैस्तानि च कुर्वीरन् भार्यादिमरणे ॥५॥ कानि पुनस्तानि— ***केशान्प्रकीर्य पांसूनोप्यैकवाससो दक्षिणामुखास्सकृदुपमज्ज्योत्तीर्योपविशन्त्येवं त्रिः** ॥ ६ ॥ प्रकीर्य केशान् पांसूनावपन्ति । ओप्य एकवाससः अनुत्तरीयाः । दक्षिणामुखाः दक्षिणां दिशं निरीक्षमाणाः सकृदुपमज्ज्य उदकादुत्तीर्य तीर उपविशन्ति दक्षिणामुखा एव । एवं त्रिः एवमुक्तप्रकारेण त्रिरुपमज्ज्योपविशेयुः ॥ ६ ॥ ***तत्प्रत्ययमुदकमुत्सिच्याप्रतीक्षा ग्राममेत्य यत्स्त्रिय आहुस्तत्कुर्वन्ति** ॥ ७ ॥ ततः तत्प्रत्ययं तेषां मृतानां भार्यादीनां यथा प्रत्ययो भवति मह्यमुदकं दत्तमिति तथोदकमुत्सिञ्चन्ति । त्रिरित्यनुवृत्तेस्त्रिः । आचारात्प्रत्यवत्वाच्च तिलमिश्रं त्रिर्वाससा हस्ताभ्यां भारद्वाजाय यज्ञशर्मणे एतत्तिलोदकं ददामीति त्रिः प्रयोगः । उत्सिच्याप्रतीक्षाः पृष्ठतोऽनिरीक्षमाणा ग्राममेत्य गृहं प्रविश्य । अनेन बहिरिदं कर्मेति गम्यते । यत्स्त्रियः कर्तव्यमित्याहुः तत्कुर्वन्ति । अग्न्युपस्पर्शनगवालम्भनादीनि । एतत्प्रथमेऽहनि । द्वितीयादिष्वञ्जलिनैकोत्तरवृद्धिरेकादशाहादिति पितृमेधे उक्तं द्रष्टव्यम् ॥ ७ ॥ *** इतरेषु चैतदेवैक उपदिशन्ति** ॥८॥ आकालभोजनमित्यादि यदुक्तं तदितरेषु भार्यादिभ्योऽन्येष्वपि सपिण्डेषु मृतेषु कर्तव्यमित्येके आचार्या उपदिशन्ति ॥ ८ ॥ *** शुचीन्मन्त्रवतस्सर्वकृत्येषु भोजयेत्** ॥ ९ ॥ एकान्तेऽपि विधिप्रतिषेधानुमार्गिणः शुचयः । तान् । मन्त्रवतः अधीतवेदान् । सर्वकृत्येषु श्रौतेषु गार्ह्येषु स्मार्तेषु च कर्मसु दैवेषु पित्र्येषु मानुषेषु च भोजयेत् । 'अन्ते ततो ब्राह्मणभोजन'मिति स्मृत्यन्तरे दर्शनात् ॥ ९ ॥ ***देशतः कालतः शौचतः सम्यक्प्रतिग्रहीतृत इति दानानि प्रतिपादयति** ॥ १० ॥ सप्तम्यर्थे तसिल् । देशः प्रयागादिः । कालः सूर्यग्रहणादिः । शौचं कृच्छ्रादिपरिसमाप्तिः । समीचीनः प्रतिग्रहीता 'तुल्यगुणेषु वयोवृद्धश्श्रेया'नित्यादि । एतेषु दानानि देयानि । प्रतिपादयति दद्यादिति ॥ १० ॥ ***यस्याग्नौ नक्रियते यस्य चाग्रं न दीयते न तद्भोक्तव्यम्** ॥ ११ ॥ यस्यान्नस्यैकदेशः अग्नौ न क्रियते न हूयते यस्य ब्राह्मणस्यान्नं न दीयते यस्माद्वोद्धृत्यान्नं न दीयते न तद्भोक्तव्यम् ॥ ११ ॥ ***नक्षारलवणहो-**

मो विद्यते ॥१२॥ यत् भक्ष्यमाणं पश्यतो लालोत्पद्यते तत् क्षारं गुडहि चादि । क्षारं लवणसंसृष्टं न होतव्यम् ॥ १२ ॥ * तथावरान्नसंसृस्य च ॥१३॥ अवरान्नं कुलत्थादि । तत्संसृष्टस्याप्यन्नस्य होमो विद्यते ॥ १३॥ अथ यस्यैवंविधमेव भोज्यमुपस्थितं तस्य कथं हो। स्तत्राह—*अहविष्यस्य होम उदीचीनमुष्णं भस्मापोह्य तस्मिञ्जु यात्तद्धुतमहुतं चाग्नौ भवति ॥ १४॥ औपासनात् पचनाद्वा अग्ने दीचीनमुष्णं भस्मापोह्य तस्मिन् भस्मनि जुहुयात् वैश्वदेवमन्त्रैः । एषे हविष्यस्य होमः। तदेवं क्रियमाणं हुतं च भवति हवनार्थनिर्वृत्तेः। अहुतंचा भवति। भस्ममात्रत्वादिति। अत्र बोधायनः—'अथ यद्येतदेवान्नं स्यादुत्तर भस्ममिश्रानङ्गारान्निरूह्य तेषु जुहुया'दिति। अपर आह—'यान्यहविष्य णि व्यञ्जनान्यहरहर्भोज्यानि तेषामेष संस्कारस्सकृच्च होमोऽमन्तक' इ। ॥१४॥उत्तरे द्वे सूत्रे स्पष्टे—*न स्त्री जुहुयात्॥१५॥ नानुपेतः॥१६ आन्नप्राशनाद्गर्भा नाप्रयता भवन्ति ॥१७॥ अन्नप्राशनात्प्राक् ग र्भा बाला नाप्रयता भवन्ति रजस्वलादिस्पर्शनेऽपि । गौतमस्तु अपां मार्ज नादिकमिच्छति । यथाह 'अन्यत्रापां मार्जनप्रधावनावोक्षणेभ्यः'॥१७ *आ परिसंवत्सरादित्येके॥ १८॥ यावत् संवत्सरो न परिपूर्यते ता वन्नाप्रयता गर्भा इत्येके मन्यन्ते ॥ १८॥ * यावता वा दिशो न प्र जानीयुः ॥ १९॥ यावद्दिग्विभागज्ञानं नास्ति तावन्नाप्रयता भवन्ति * औपनयनादित्यपरम् ॥२०॥ उपनयनादर्वाक् नाप्रयता गर्भा इत्य परदर्शनम् ॥२०॥अत्रोपपत्तिः—*अत्र ह्यधिकारश्शास्त्रैर्भवति॥२१। हि यस्मादत्रोपनयने सति विधिनिषेधशास्त्रैरधिकारो भवति ॥ २१ ॥ * सा निष्ठा ॥२२॥ उपनयनमपि परामृशतस्तच्छब्दस्य 'निष्ठाशब्द- सामानाधिकरण्यात् स्त्रीलिङ्गता । सा निष्ठा तदुपनयनमवसानमधिकार- स्येति ॥ २२ ॥*स्मृतिश्च ॥२३॥ अस्मिन्नर्थे स्मृतिरपि भवति । 'प्रागुप- नयनात्कामचारवादभक्ष' इति गौतमः ॥२३॥

इति पञ्चदशी खण्डिका ॥ प्र०२ प०६ ख० ॥१५॥

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां द्वितीयप्रश्ने षष्ठः पटलः ॥६॥

---

*सह देवमनुष्या अस्मिँल्लोके पुरा बभूवुः । अथ देवाः कर्मभिर्दिवं जग्मुरहीयन्त मनुष्याः । तेषां ये तथा कर्माण्यारभन्ते सह देवैर्ब्रह्मणा चामुष्मिन् लोके भवन्ति । अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच । प्रजानिश्श्रेयसाय च ॥ १ ॥ श्राद्धाविधित्सया तस्य प्ररोचनार्थोऽयमर्थवादः । पुरा किल देवाश्च मनुष्याश्चास्मिन्नेव लोके सहैव बभूवुः । अथ तं सहभावमसहमाना देवाः कर्मभिः श्रौतैस्स्मार्तैर्गार्ह्यैश्च यथावदनुष्ठितै दिवं जग्मुः । मनुष्यांस्तु तथा कर्तुमसमर्था अहीयन्त हीना अभवन् इहैव लोके स्थिताः । एवं कर्मणां सामर्थ्यम् । अत इदानीमपि तेषां मनुष्याणां मध्ये ये तथा कर्माण्यारभन्ते कुर्वन्ति यथारभन्त देवास्ते देवै. ब्रह्मणा च सहामुष्मिन् लोके भवन्ति त्रिविष्टपे मोदन्ते । अथैवं हीनान्मनुष्यान् दृष्ट्वा मनुर्वैवस्वतः श्राद्धशब्दं श्राद्धमिति शब्द्यमानमेतत्कर्म प्रोवाच । किमर्थं प्रजानिश्रेयसाय तादर्थ्ये चतुर्थी । प्रजानिश्रेयसार्थं । निश्रेयसा चेति पाठे छान्दसो यकारस्य चकारः । अपर आह—छान्दसो लिङ्गव्यत्ययः । प्रजानिश्रेयसं चास्य कर्मणः फलमिति ॥ १ ॥ तत्र पितरो देवता ब्राह्मणास्त्वाहवनीयार्थे ॥ २ ॥ तत्र श्राद्धकर्मणि पितर. पितृपितामहप्रपितामहाः देवताः । ब्राह्मणास्तु भुञ्जाना आहवनीयार्थे आहवनीयकृत्ये वेदितव्याः । त्रीणि श्राद्धे करणानि होमो ब्राह्मणभोजनं पिण्डदानं चेति । अत्र भोजनस्य प्रधानकरणत्वख्यापनार्थोऽयमर्थवादः ॥ २ ॥ * मासिमासि कार्यम् ॥ ३ ॥ तदिदं कर्म मासिमासि कर्तव्यम् । वीप्सावचनाद्यावज्जीविकोऽभ्यासः ॥ ३ ॥ अपरपक्षस्यापराह्णः श्रेयान् ॥ ४ ॥ अपरपक्षस्य यान्यहानि तेष्वपराह्णः प्रशस्ततर. ॥ ४ ॥ * तथापरपक्षस्य जघन्यान्यहानि ॥ ५ ॥ अपरपक्षस्य यान्यहानि पञ्चदश तेषामुत्तरमुत्तरं प्रशस्ततरम ॥ ५ ॥ *सर्वेष्वेवापरपक्षस्याहस्सु क्रियमाणे पितॄन् प्रीणाति । कर्तुस्तु कालाभिनियमात्फलविशेषः ॥६॥ सर्वेष्वेवाहस्सु पितृतृप्तिरविशिष्टा । यस्तु कर्ता प्रतिपदादिके काले नियमेन श्राद्धं करोति सर्वेषु मासेषु प्रतिपद्येव द्वितीयायामेवेत्यादि तस्य कर्तुस्तस्मात्कालाभिनियमात् फलविशेषो भवति ॥ ६ ॥ कोऽसावि-

त्याह—***प्रथमेऽहनि क्रियमाणे स्त्रीप्रायमपत्यं जायते** ॥७॥ यः प्रतिपदि नियमेन श्राद्धं करोति तस्यापत्ये प्रजा सन्ताने स्त्रीप्रायं जायते । प्रायेण स्त्रियो जायन्ते ॥७॥***द्वितीये स्तेनाः** ॥८॥ जायन्ते पुत्राः ॥८॥***तृतीये ब्रह्मवर्चसिनः** ॥९॥ वृत्ताध्ययनसम्पत्तिर्ब्रह्मवर्चसम् ॥९॥ **चतुर्थे क्षुद्रपशुमान्** ॥१०॥ क्षुद्राः पशवोऽजाव्यादयः तद्वान् कर्ता भवति । उत्तरत्राप्येकवचनं कर्तुर्वादो द्रष्टव्यः ॥१०॥ **पञ्चमे पुमांसो बह्वपत्यो न चानपत्यः प्रमीयते** ॥११॥ पुमांस एव भवन्ति बहवश्च भवन्ति न चानपत्यः प्रमीयते जीवत्स्वेव पुत्रेषु सन्निहितेषु च स्वयं म्रियते न तेषु मृतेषु न देशान्तरं गतेषु नापि स्वयं देशान्तरं गत इति. ॥११॥ ***षष्ठेऽध्वशीलोऽक्षशीलश्च** ॥१२॥ अध्वशीलः पान्थः । इतरः कितवः ॥१२॥ ***सप्तमे कर्षे राद्धिः** ॥१३॥ कर्षः कृषिः । राद्धिः सिद्धिः ॥१३॥ **अष्टमे पुष्टिः** ॥१४॥ स्पष्टम् ॥१४॥ ***नवम एकखुराः** ॥१५॥ अश्वादयः ॥१५॥ ***दशमे व्यवहारे राद्धिः** ॥१६॥ व्यवहारो वाणिज्यम् । व्यवहारः शास्त्रपरिज्ञानं वा ॥१६॥ ***एकादशे कृष्णायसं त्रपुसीसम्** ॥१७॥ कृष्णमयः कृष्णायसम् । त्रपुसीमे लोहविशेषौ ॥१७॥ ***द्वादशे पशुमान्** ॥१८॥ द्वादश्यां बहवः पशवो भवन्ति ॥१८॥ ***त्रयोदशे बहुपुत्रो बहुमित्रो दर्शनीयापत्यो युवमारिणस्तु भवन्ति** ॥१९॥ त्रयोदश्यां बहवः पुत्रा मित्राणि च भवन्ति । अपत्यानि च दर्शनीयानि भवन्ति । किं तु पुत्रा युवमारिणः युवान एव म्रियन्ते ॥१९॥***चतुर्दश आयुधे राद्धिः** ॥२०॥ सङ्ग्रामे जयः ॥२०॥ ***पञ्चदशे पुष्टिः** ॥२१॥ स्पष्टम् ॥२१॥ ***तत्र द्रव्याणि तिलमाषा व्रीहियवा आपो मूलफलानि च** ॥२२॥ तत्र श्राद्धे तिलादीनि द्रव्याणि यथायथमवश्यमुपयोज्यानि ॥२२॥ ***स्नेहवति त्वेवान्ने तीव्रतरा पितॄणां प्रीतिर्द्राघीयांसं च कालम्** ॥२३॥ यद्वा तद्वा अन्नं भवतु स्नेहवति तु तस्मादाज्यादिभिरुपसिक्ते पितॄणां तीव्रतरा प्रकृष्टतरा प्रीतिर्भवति । सा च द्राघीयांसं च कालमनुवर्तते ॥२३॥ ***तथा धर्माहृतेन द्रव्येण तीर्थे**

[तिपन्नेन ॥ २४ ॥ धर्मार्जितं यद्द्रव्यं पात्रे च प्रतिपादितं तेनापि तथा तीव्रतरा पितॄणां प्रीतिर्द्रष्टव्यामं च कालमिति ॥ २४ ॥ ***संवत्सरं गव्येन प्रीतिः** ॥ २५ ॥ उत्तरत्र मासग्रहणादिहापि मासस्य ग्रहणम् । गव्येन मांसेन संवत्सरं पितॄणां प्रीतिर्भवति ॥ २५ ॥ ***भूयांसमतो माहिषेण** ॥ २६ ॥ माहिषेण मांसेनातः संवत्सरात् भूयांसं बहुतरं कालं पितॄणां प्रीतिर्भवति ॥ २६ ॥ ***एतेन ग्राम्यारण्यानां पशूनां मांसं मेध्यं व्याख्यातम्** ॥ २७ ॥ एतेन माहिषेण मांसेनान्येषामपि ग्राम्याणाम जादीनामारण्यानां च शशादीनां मांसं मेध्यं व्याख्यातम् ॥ पितॄणां प्रीतिकरमिति। मेध्यग्रहणं प्रतिषिद्धानां मा भूदिति ॥ २७ ॥

**इति षोडशी खण्डिका ॥ प्र०२ प०७ ख० १६ ॥**

---

***खड्गोपस्तरणे खड्गमांसेनानन्त्यं कालम्** ॥ १ ॥ खड्गचर्मोपस्तरणेष्वासनेषूपविष्टेभ्यो ब्राह्मणेभ्यो दत्तेन खड्गमांसेनानन्त्यं कालं प्रीतिर्भवति। आनन्त्यमिति पाठः स्वार्थे ष्यञ् ॥ १ ॥ ***तथा शतबलैर्मत्स्यस्य मांसेन** ॥ २ ॥ शतबलिर्बहुशल्को रोहिताख्यः ॥ २ ॥ ***वाध्राणसस्य च** ॥ ३ ॥ व्याख्यातो वाध्राणसः । तस्य मांसेनानन्त्यं कालं प्रीतिर्भवति ॥ ३ ॥ ***प्रयतः प्रसन्नमनास्सृष्टो भोजयेद्ब्राह्मणान् ब्रह्मविदो योनिगोत्रमन्त्रान्तेवास्यसम्बन्धान्** ॥ ४ ॥ प्रयतः स्नानाचमनादिना शुद्धः । प्रसन्नमनाः अव्याकुलमनाः । सृष्टः उत्साहवान् । सृष्टश्चेद्ब्राह्मणवधे हत्वा प्रीतिदर्शनात् । 'वृत्तिसर्गतायनेषु क्रमः' इत्यत्र च सर्ग उत्साह एवंभूतो ब्राह्मणान् भोजयेत् । कीदृशान् ब्रह्मविदः आत्मविदः । योन्यादिभिरसम्बन्धान् योनिसम्बन्धाः मातुलादयः । गोत्रसम्बन्धाः सगोत्राः । मन्त्रसम्बन्धा ऋत्विजो याज्याश्चान्तेवासिसम्बन्धाश्शिष्या आचार्याश्च ४ ॥ ***गुणहान्यां तु परेषां समुदेतः सोदर्योऽपि भोजयितव्यः** ॥ ५ ॥ यदि परे योनिगोत्रादिभिरसम्बन्धा वृत्तादिगुणहीना एव लभ्यन्ते, तदा समुदेतो विद्यावृत्तादिभिर्युक्तः सोदर्योऽपि भोजयितव्यः । किमुत मातुलादय इत्यपिशब्दस्यार्थः ॥ ५ ॥ ***एतेनान्तेवासिनो व्याख्याताः** ॥ ६ ॥ एते

न सोदर्येण अन्तेवासिनः बहुवचनानिर्देशात् पूर्वत्र निर्दिष्टा योन्या सम्बन्धास्सर्व एव व्याख्याताः । अन्येषाममभावे समुदेतो भोजयितव्य अत्र मनुः—'एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः । अनुक विज्ञेयः सदा सद्भिरनुष्ठितः । मातामहं मातुलं च स्वस्रीयं श्वशुरं दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत् ॥' इति ॥ ६ ॥ *ः प्युदाहरन्ति ॥ ७ ॥ सम्बन्धिनो न भोज्या इत्यस्मिन्नर्थे धर्मज्ञा श्ल दाहरन्ति ॥ ७ ॥*सम्भोजनी नाम पिशाचभिक्षा नैषा पितॄन् ग ति नोऽथ देवान्। इहैव सा चरति क्षीणपुण्या शालान्तरे ग व नष्टवत्सा ॥ ८ ॥ परस्परं भुञ्जतेऽस्यामिति सम्भोजनी । अधिक ल्युट् । नामेदमस्याः पिशाचभिक्षायाः नैषा पितॄन् गच्छति नापि दे किं तु क्षीणपुण्या परलोकप्रयोजनरहिता सती इहैव चरति लोके यथ मृतवत्सा गृहाभ्यन्तर एव चरति न बहिर्गच्छति तद्वदेतद्व्याचष्टे ॥ *इहैव सम्भुञ्जतीति दक्षिणाकुलात्कुलं विनश्यतीति ॥ ९ ॥ स ती परस्परभोजनस्य निमित्तभूता दक्षिणा श्राद्धे दानक्रिया गृहात् गत्वा इहैव लोके नश्यतीत्यर्थः ॥ ९ ॥ अथ बहुषु तुल्यगुणेषूपस्थितेषु परिग्राह्यः—*तुल्यगुणेषु वयोवृद्धः श्रेयान्द्रव्यकृशश्चेप्सन् ॥ १ यो वयसा वृद्धस्सतावद्ग्राह्यः । तत्रापि यो द्रव्येण कृशः ईप्सन् लिप्सु श्च भवति स ग्राह्यः । अद्रव्यकृशोऽपि अवृद्धोऽपि द्वयोर्द्वयोस्तु समवा थारुचीति ॥ १० ॥*पूर्वेद्युर्निवेदनम् ॥ ११ ॥ श्राद्धदिनात्पूर्वेद्युरेव ब्र णेभ्यो निवेदयितव्यः । श्वः श्राद्धं भविता तत्र भवताहवनीयार्थे प्रस कर्तव्य इति ॥ ११ ॥ *अपरेद्युर्द्वितीयम् ॥ १२ ॥ अपरेद्युः श्राद्धदिने तीयनिवेदनं कर्तव्यमद्य श्राद्धमिति ॥ १२ ॥*तृतीयमामन्त्रणम् ॥ १ आमन्त्रणमाह्वानं भोजनकाले सिद्धमागम्यतामिति तत्तृतीयं भवति ॥ १ *त्रिःप्रायमेके श्राद्धमुपादिशन्ति ॥ १४ ॥ न केवलं निवेदनमेव त्रिर्भव किं तर्हि यच्च यावच्च श्राद्धे तत्सर्वं त्रिरावर्त्यमित्येके मन्यन्ते । अत्र होमभोजनपिण्डदानमप्यावृत्तिस्तस्मिन्नेवापराह्णे ॥ १४ ॥ *यथाप्रथम द्वितीयं तृतीयं च ॥ १५ ॥ येन प्रकारेण प्रथमश्राद्धं तथैव द्वितीयं तृ

ं च कर्तव्यम् ॥ १५ ॥ *सर्वेषु वृत्तेषु सर्वतस्समवदाय शेषस्य ग्रासा
वराध्यं प्राश्नीयाद्यथोक्तम् ॥ १६॥ सर्वेषु श्राद्धेषु त्रिष्वपि वृत्तेषु समा
प्तेषु सर्वतस्त्रयाणां श्राद्धानां च ओदनशेषस्ततस्समवदाय ग्रासावराध्यं
प्राश्नीयात् यथोक्तम् उत्तरेण यजुषा शेषस्य ग्रासावराध्यं प्राश्नीयादित्यु-
क्तं गृह्ये । तत्र प्रयोगः पूर्वेद्युर्यथा निवेदन तद्वत् परेद्यु. प्रातर्भोजनकाले आ-
मन्त्रणं सिद्धमागम्यतामिति ततो होमपिण्डनिधानान्तमेकैकमपवृज्य ततः
सर्वतस्समवदाय ग्रासावराध्यस्य प्राणे निविष्टेति मन्त्रेण प्राशनमिति १६॥
*उदीच्यवृत्तिस्त्वासनगतानां हस्तेषूदपात्रानयनम् ॥ १७॥ प्रागुद-
ञ्चौ विभजन् हंसः क्षीरोदके यथा । विदुषा शब्दसिद्ध्यर्थं सा नः पातु श-
रावती ॥' इति वैयाकरणा. । तस्याः शरावत्या उदक्तीरवर्तिन उदीच्याः
तेषां वृत्तिराचार आसनेषूपविष्टानां ब्राह्मणानां हस्तेषूदपात्रादर्घ्यपात्रादादा-
यार्घ्यदानमिति पितरिदं तेऽर्घ्यं पितामहेदं तेऽर्घ्यं प्रपितामहेदं तेऽर्घ्यमिति म-
न्त्रा आश्वलायनके यद्यप्युदीच्यवृत्तिरित्युक्तं, तथापि प्रकरणसामर्थ्यात् सर्वे
षामपि भवति ॥ १७॥ उद्ध्रियतामग्नौ च क्रियतामित्यामन्त्रयते॥ १८॥हो-
मकाले 'उद्ध्रियतामग्नौ च क्रियतामि'त्यनेन मन्त्रेण ब्राह्मणानामन्त्रयते ।
'अधीष्टे चे'ति लोट्प्रत्ययः॥ १८॥ काममुद्ध्रियतां काममग्नौ च क्रियतामि
त्यतिसृष्ट उद्धरेज्जुहुयाच्च॥ १९॥ अथ ब्राह्मणा' काममुद्ध्रियतां काममग्नौ
च क्रियतामिति प्रतिब्रूयुः अनुजानीयुः । तैश्चातिसृष्ट उद्धरेज्जुहुयाच्च । उ-
द्धरणं नाम ब्राह्मणार्थं पक्वादन्नादन्यस्मिन् पात्रे पृथक्करणम् ॥ १९ ॥
श्वभिरपपात्रैश्च श्राद्धस्य दर्शनं परिचक्षते ॥ २० ।' अपपात्राः पतिता-
दयः । प्रतिलोमादयश्च । तैः श्राद्धस्य दर्शनं परिचक्षते गर्हन्ते शिष्टाः ।
अतो यथा ते न पश्येयुस्तथा परिश्रितेन कर्तव्यमिति ॥ २० ॥ श्वित्रि-
शिपिविष्टः परतल्पगाम्यायुधीयपुत्रश्शूद्रोत्पन्नो ब्राह्मण्यामित्येते
श्राद्धे भुञ्जानाः पङ्क्तिदूषणा भवन्ति ॥ २१ ॥ श्वित्रिः श्वेतकुष्ठी ।
शिपिविष्टः खलतिः । विवृतशेफ इत्यन्ये । परतल्पगामी यः परतल्पं ग-
त्वा अकृतप्रायश्चित्तः तस्य ग्रहणम् । आयुधीयपुत्रः क्षात्रियवृत्तिमाश्रितो
य आयुधेन जीवति ब्राह्मणः, तस्य पुत्रः आयुधीयपुत्रः । शूद्रेण ब्रा-

ह्मण्यामुत्पन्नश्चण्डाल । न तस्य प्रसङ्गः । ब्राह्मणान् ब्रह्मविद इत्युक्तत्व
त् । तस्मादेव व्याख्येयम् क्रमविवाहे शूद्राया पूर्वमुत्पाद्य पश्चात् ब्राह्मण
मुत्पादयति तस्य स पुत्र. शूद्रोत्पन्नो ब्राह्मण्यामिति स हि पिता शू
सम्पन्न । श्रूयते हि 'तज्जाया जाया भवति यदस्यां जायते पुनरि'ति । स्
र्यते च—'यदुच्यते द्विजातीना शूद्रदारपरिग्रह. । न तन्मम मत यस्
त्त्राय जायते स्वयम् ॥' इति । एते श्वित्र्यादयः श्राद्धे भुञ्जानाः पङ्क्ति
षयन्ति । अतस्ते न भोज्या इति ॥ २१ ॥ **त्रिमधुस्त्रिसुपर्णस्त्रिणा
केतश्चतुर्मेधः पञ्चाग्निर्ज्येष्ठसामिको वेदाध्याय्यनूचानपुत्रः श्रो
इत्येते श्राद्धे भुञ्जानाः पङ्क्तिपावना भवन्ति ॥ २२ ॥** 'मधुवाता ऋताय
इत्येष त्र्यृचस्त्रिमधु । तत्र हि प्रत्यृच त्रयो मधुशब्दा । इह तु तदध्
यी पुरुषस्त्रिमधु. । त्रिसुपर्ण. 'चतुष्कपर्दा युवति सुपेशा' इत्यादिका
च बह्वृच । अन्ये तु तैत्तिरीयके ब्रह्ममेतु मामित्यादय त्रयोऽनुवाका
त्याहु । तत्र हि 'य इमं त्रिसुपर्णमयाचित ब्राह्मणाय दद्यादि'ति श्रु
आसहस्रात् पङ्क्ति पुनन्तीति च पूर्ववत्पुरुषे वृत्तिः त्रिणाचिकेतः नाचि
तोऽग्निर्वह्वीषु शाखासु विधीयते । तैत्तिरीयके कठवल्लीषु शतपथे च तं
वेद मन्त्रब्राह्मणेन सह स त्रिनाचिकेत. नाचिकेतानुवाकान् त्रीनित्यन्ये ।
जोऽनुवाकाध्यायीत्यन्ये । प्राणापानेत्यादिषु अश्वमेध. सर्वमेधः पुरुषां
पितृमेध इति चत्वारो मेधा. । तदध्यायी चतुर्मेधः । चतुर्णां यज्ञानाम
र्तेत्यन्ये । पञ्चाग्नि सभ्यावसथ्याभ्यां सह पञ्चानां काठकाग्नीनां मध्ये
न् ज्येष्ठसामतलवकारिण प्रसिद्धम । उदुत्यं चित्रमित्येतयोर्गीत तद्व्रत
ति ज्येष्ठसामग । ज्येष्ठसामिक इति पाठे व्रीह्यादित्वात् ठन् । वेदाध्
यी स्वाध्यायपर. । अनूचानपुत्र. त्रैविद्यपुत्रः श्रोत्रिय इत्यपि पठ
तदादरार्थं द्रष्टव्यम् । एते श्राद्धे भुञ्जाना. पङ्क्तिं शोधयन्ति । वेदाध्याय
स्यानन्तरमितिशब्दं पठन्ति । सोऽपपाठ । एतेन पञ्चाग्नीत्यविभक्तिक
ठो व्याख्यातः ॥ २२ ॥ **न च नक्तं श्राद्धं कुर्वीत ॥ २३ ॥** श्राद्धं
व्यारब्धे कारणाद्विलम्बे मध्ये यदादित्योऽस्तमियात् तदा श्राद्धशेष न
वींत अपरेद्युर्दिवैव कुर्वीतेति ॥ २३ ॥ **आरब्धे चाभोजनमासमाप**

**दन्यत्र राहुदर्शनात्** ॥२४॥ पूर्वेद्युर्निवेदनप्रभृत्यापिण्डनिधानान्मध्ये कर्तृभोजनप्रतिषेधः । अनन्तरमन्यत्र राहुदर्शनादिति पठन्ति । न च नक्तमित्यस्यापवादः । राहुदर्शने नक्तमपि कुर्वीतेति । उदीच्यास्त्वेतत्प्रायेण न पठन्ति । तथा च पूर्वैर्न व्याख्यातम् । प्रत्युत न च नक्तमित्येतत् सोमग्रहणविषयमिति व्याख्यातम् । पठ्यमानस्तु न च नक्तमित्यस्यानन्तरं पठितुं युक्तः ॥ २४ ॥

इति सप्तदशी खण्डिका ॥ प्र०२ प०७ ख०१७ ॥

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां द्वितीयप्रश्ने सप्तमः पटलः ॥७॥

---

***विलयनं मथितं पिण्याकं मधु मांसं च वर्जयेत्** ॥ १ ॥ विलयनं नवनीतमलम् । दध्नो हस्तादिना मन्थनमात्रं न जलेन मिश्रं तन्मथितम् । तथा च नैखण्डुकाः—'तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलमि'ति॰। यन्त्रपीडितानां तिलानां कल्काः पिण्याकम् । मधुमांसे प्रसिद्धे । मांसमप्रतिषिद्धमपि एतद्विलयनादिकं वर्जयेत् ॥ १ ॥ ***कृष्णधान्यं शूद्रान्नं ये चान्ये नाश्यसम्मताः** ॥२॥ कृष्णधान्यं माषादि । न कृष्णा व्रीहयः । शूद्रान्नं पक्वमपक्वं च । ये चान्ये नाश्यत्वेनाभोज्यत्वेन संम्मताः तांश्च वर्जयेत् ॥२॥ ***अहविष्यमनृतं क्रोधं येन च क्रोधयेत् स्मृतिमिच्छन् यशो मेधां स्वर्गं पुष्टिं द्वादशैतानि वर्जयेत्** ॥ ३ ॥ अहविष्यं कोद्रवादि । अनृत मिथ्यावचनम् । क्रोधः कोपः । येन च कृतेनोक्तेन वा परं क्रोधयेत् तच्च वर्जयेत् । स्मृतिरधिगतस्य स्मरणम् । यशः ख्यातिः। मेधा प्रज्ञा । द्वादशैतानि विलयनादीनि वर्जयेत् स्मृत्यादिकमिच्छन् पुनर्वर्जयेदिति । गुणार्थोऽनुवादः। स्मृत्यादिकं फलं विधातु द्वादशैतानीति वचनम् । विलयनादेरपिपरिग्रहार्थम् अहविष्यादिकमेवानन्तरोक्त माग्राहीदिति। ३।
* **अधोनाभ्युपरि जान्वाच्छाद्य त्रिषवणमुदकमुपस्पृशन्ननग्निपक्ववृत्तिरच्छायोपगतस्थानासनिकस्संवत्सरमेतद्व्रतं चरेदेतदष्टाचत्वारिंशत्सम्मितमित्याचक्षते** ॥ ४ ॥ अधोनाभ्युपरि जान्वाच्छाद्येति व्याख्या-

तम्.। त्रिषवणं त्रिषु सवनेषु प्रातर्मध्यन्दिने सायमिति उदकमुपस्पृशन् स्नानं कुर्वन्। अनग्निपक्ववृत्तिः वृत्तिः शरीरयात्रा सा अग्निपक्वेन न कार्या। अग्निग्रहणात् कालपक्वस्याम्रादेरदोषः। अच्छायोपगतः छायामनुपगच्छन्। स्थानासनिकः स्थानासनवान्। दिवास्थानं रात्रावासनं न कदाचिच्छयनम् एतद्विलयनम् मथितमित्यारभ्यानन्तरमुक्तं संवत्सरं व्रतं चरेत्। एतद्व्रतमष्टाचत्वारिंशद्वर्षसाध्येन ब्रह्मचारिव्रतेन सम्मितं सदृशं यावत्तस्य फलं तावदस्यापीत्याचक्षते धर्मज्ञाः, न केवलं स्मृत्यादिकमेव प्रयोजनमिति। अपर आह—विलयनं मथितमित्यादिकं व्रतान्तरं स्मृत्यादिकामस्य। अश्नोनाभीत्यादिकं तु सम्मितं व्रतमिति। एतच्च ब्रह्मचारिणो गृहस्थस्य च भवति। तथा च बोधायनः—'अष्टाचत्वारिंशत्सम्मितमित्याचक्षते तस्य सङ्क्षेपः संवत्सरः। तं संवत्सरमनुव्याख्यास्यामः। स यदि ब्रह्मचारी स्यान्नियममेव प्रतिपद्यते। अथ यद्यपि ब्रह्मचारी स्यात् केशान् श्मश्रुलोमनखानि वापयित्वा तीर्थं गत्वा स्नात्वे'त्यादि ॥४॥ * **नित्यश्राद्धम्** ॥५॥ अथाहरहः कर्तव्यं श्राद्धमुच्यते। तस्य नित्यश्राद्धमिति नाम ॥५॥ * **बहिर्ग्रामाच्छुचयः शुचौ देशे संस्कुर्वन्ति** ॥६॥ तन्नित्यश्राद्धं बहिर्ग्रामात्कर्तव्यं तस्यान्नसंस्कारः शुचौ देशे अन्नं संस्कुर्वन्ति। शुचय इति वचनमाधिक्यार्थम्। आर्याः प्रयता' इति पूर्वमेव प्रायत्यस्य विहितत्वात् ॥६॥ * **तत्र नवानि द्रव्याणि** ॥७॥ तत्र नित्यश्राद्धे द्रव्याणि नवान्येव ग्राह्याणि ॥७॥ कानि पुनस्तानि— * **यैरन्नं संस्क्रियते येषु च भुज्यते** ॥८॥ यैर्भाण्डैरन्नं संस्क्रियते येषु च कांस्यादिषु भुज्यते तानि नवानीति ॥८॥ * **तानि च भुक्तवद्भ्यो दद्यात्** ॥९॥ तानि भाण्डानि कांस्यादीनि च भुक्तवद्भ्यो ब्राह्मणेभ्यो दद्यात्। एवं प्रत्यहम् ॥९॥ * **समुदेतांश्च भोजयेत्** ॥१०॥ समुदेतवचनं गुणाधिक्यार्थम् ॥१०॥ * **न चातद्गुणायोच्छिष्टं प्रयच्छेत्** ॥ ११ ॥ भाण्डेषु यत् भुक्तशिष्टं तदिहोच्छिष्टम्। तदप्यतद्गुणाय भुक्तवतः ये गुणास्तद्रहिताय न दद्यात् तद्गुणायैव दद्यादिति ॥११॥ * **एवं संवत्सरम्** ॥१२॥ एवमेतन्नित्यश्राद्धं संवत्सरं कर्तव्यमहरहः ॥१२॥ * **तेषामुत्तमं लोहेनाजेन कार्यम्** ॥ १३॥ तेषां संवत्सरस्याह्नां उत्तममहस्समाप्तिदिनम्। लोहेन लोहितवर्णेन

अजेन श्राद्धं कर्तव्यम्। दृश्यते चाप्यन्यत्रास्मिन्नर्थे लोहशब्दः—'लोहस्तूपरो भवत्यप्यतूपरः कृष्णसारङ्गो लोहितसारङ्गो वे'ति। चमकेषु च भवति 'श्यामं च मे लोह च म' इति ॥१३॥ *मानं च कारयेत्प्रतिच्छन्नम्॥१४॥ मानं धिष्ण्यं वेदिका। दृश्यते हि मनोतेरस्मिन्नर्थे प्रयोगः— अग्रेणाग्नीध्रं 'चतुर उपस्त्राव विमितं विमिनन्ति पुरस्तादुन्नतं पश्चान्निनतमि'ति। स एवायमुपसर्गरहितः। तं मानं कारयेत् कर्मकरैः प्रतिच्छन्नं च तद्भवति तिरस्करिण्यादिना। इदमपि ग्रामाद्बहिरेव ॥१४॥* तस्योत्तरार्धे ब्राह्मणान् भोजयेत् ॥१५॥ तस्य मानस्योत्तरस्मिन्नर्धे ब्राह्मणा भोजयितव्याः ॥१५॥ *उभयान्पश्यति ब्राह्मणांश्च भुञ्जानान्माने च पितॄनित्युपदिशन्ति ॥१६॥ तस्यैव कृतस्य कर्मणो महिम्ना उभयान् पश्यति कांश्च कांश्च ब्राह्मणान्भुञ्जानान् तस्मिन्नेव च माने पितॄन् यथा ब्राह्मणान् भुञ्जानान् प्रत्यक्षेण पश्यति तथा माने समागतान् पितॄनपि प्रत्यक्षेण पश्यतीत्युपदिशन्ति धर्मज्ञाः ॥ १६ ॥ *कृताकृतमत ऊर्ध्वम् ॥१७॥ अत ऊर्ध्वं मासिश्राद्धं क्रियतां मावाकारि अकरणे नापि प्रत्यवाय इति ॥१७॥ * श्राद्धेन तृप्तिं निवेदयन्ते पितरः ॥१८॥ हि यस्मादन्त्येऽहनि यद्दर्शनमुपगच्छन्ति, न च्छ्राद्धेन तृप्ति हि वेदयन्ते ज्ञापयन्ति कर्तारम। तस्मात् तत् कृताकृतमिति॥ अथ पुष्टिकामस्य प्रयोगस्तिष्येणेत्यादिरुच्छिष्टं दद्युरित्यन्त एकः ॥१८॥ तिष्येण पुष्टिकामः ॥१९॥

इति अष्टादशी खण्डिका ॥ प्र० २ प० ८ ख० १८ ॥

---

*गौरसर्षपाणां चूर्णानि कारयित्वा तैः पाणिपादं प्रक्षाल्य मुखं कर्णौ प्राश्य च यद्वातो नातिवाति तदासनोऽजिनं बस्तस्य प्रथमः कल्पो वाग्यतो दक्षिणामुखो भुञ्जीत ॥१॥ पुष्टिकाम पुरुषो वक्ष्यमाण प्रयोगं कुर्यात्। तिष्येण 'नक्षत्रे च लुपी'त्यधिकरणे तृतीया। तिष्ये नक्षत्रे गौराणां सर्षपाणां सम्बन्धीनि चूर्णानि किङ्करैः कारयेत्। कारयित्वा तैश्चूर्णैः पाणी पादौ प्रक्षाल्य मुखं कर्णौ च प्रक्षाल्य चूर्णशेषं प्राश्नीयात्। प्रास्येदिति पाठे प्रास्येन विकिरेत्। एतावत् प्रतितिष्यम्।

विशेषकृत्यं परं प्रत्यहं कर्तव्यम् । प्राश्य च यद्वातो नातिवाति तदासनः यदासनं वातो नातिवाति तदासनस्तादृशासनः भुञ्जीतेति वक्ष्यमाणेन सम्बन्धः । तस्य बस्ताजिनमासनं स्यादिति मुख्यः कल्पः । वाग्यतो दक्षिणां दिशमभिमुखो भुञ्जीत॥ १ ॥ ***अनायुष्यं त्वेवंमुखस्य भोजनं मातुरित्युपदिशन्ति*** ॥ २ ॥ यदेवमुखस्य दक्षिणामुखस्य भोजनं तत् भोक्तुर्या माता तस्या अनायुष्यमनायुष्करमिति धर्मज्ञा उपदिशन्ति । तस्मान्मातृतो नैतद्व्रतं कार्यमिति ॥ २ ॥ ***औदुम्बरश्चमसः सुवर्णनाभः प्रशातः*** ॥ ३ ॥ चमु भक्षणे यत्र चम्यते स चमसो भोजनपात्रम् । औदुम्बरस्ताम्रमयः सुवर्णेन मध्येऽलङ्कृतस्स प्रशातः प्रशस्तो भोजने ॥ ३ ॥ ***न चान्येनापि भोक्तव्यः*** ॥ ४ ॥ नचान्येनापि कर्तुः पित्रापि तत्र पात्रे भोक्तव्यम् । अपिः धात्वर्थानुवादी । भोक्तव्य इति पुल्लिङ्गपाठेऽप्येष एवार्थः॥ ४ ॥ ***यावद्ग्रासं सन्नयन्नस्कन्दयन्नापजिहीतापजिहीत वा कृत्स्नं ग्रासं ग्रसीत सहाङ्गुष्ठम्*** ॥ ५ ॥ यावदेव सकृत् ग्रहीतुं शक्यं तावदेव सन्नयन् पिण्डीकुर्वन् । अस्कन्दयन् भूमावन्नलेपान्नपातयन् कृत्स्नं ग्रासं ग्रसीतेत्यन्वयः । सहाङ्गुष्ठम् आस्येऽपि ग्रासप्रवेशे यथाङ्गुष्ठोऽप्यनुप्रविशति तथा सर्वानेव ग्रासानुक्तेन प्रकारेण ग्रसीत ग्रस्ते मध्ये क्रियान्तरविधिः नापजिहीत । भोजने पात्रं सव्येन पाणिना न विमुञ्चेत् । अपजिहीत वा विमुञ्चेद्वा । किमर्थमिदं यावता न प्रकारान्तरं सम्भवति, सत्यं, क्रमात्तु नियम्यत इति न्यायेन य एव प्रकारः प्रथमं भोजने स एवान्तादनुष्ठातव्य इत्येवमर्थमिदम् ॥ ५ ॥ ***न च मुखशब्दं कुर्यात्*** ॥ ६ ॥ भोजनदशायामिदमेव मुत्तरम् ॥ ६ ॥ ***पाणिं च नावधूनुयात्*** ॥ ७ ॥ पाणिरत्र दक्षिणः ॥ ७ ॥ ***आचम्य चोर्ध्वौ पाणी धारयेदाप्रोदकीभावात्*** ॥ ८ ॥ भुक्त्वाऽऽचम्य पाणी उर्ध्वौ धारयेत् यावत् प्रगतोदकौ शुष्कोदकौ भवतः ॥ ८ ॥ ***ततोऽग्निमुपस्पृशेत्*** ॥ ९ ॥ भुक्त्वा नियमेनाग्निरुपस्प्रष्टव्यः ॥ ९ ॥ ***दिवा च न भुञ्जीतान्यन्मूलफलेभ्यः*** ॥ १० ॥ मूलानि कन्दाः । फलान्याम्रादीनि । तेभ्योऽन्यद्दिवा न भुञ्जीत । तद्भक्षणे न दोषः ॥ १० ॥

# ॥ भूमिका ॥

आर्याः धर्ममार्मिका विद्वन्मणयः प्रश्रयश्च!

विदितमेव हि भवतां यदहं प्राचीनलुप्यमानलोकोत्तरसत्प्रबन्धप्रकटने धृतव्यवसायः सहृदयानां सत्प्रभूणां साहाय्येन सम्मुद्र्य प्राकट्यं रसिकरञ्जनीटीकासहितं कुवलयानन्दनामधेयमथालङ्कारप्रबन्धरत्नम् ।

अनन्तरं प्राकलय्य वैदिकधर्मप्रतिष्ठापकानाम् आर्षधर्मप्रबन्धानां गम्भीरवैरल्यं पुस्तकदौर्लभ्यञ्च तादृशानामापस्तम्बगौतमबोधायनादिमहर्षिप्रणीतानां प्रबन्धानां क्रमेण मुद्रणे महदुत्पद्येत सुकृतमिति धिया धृतोत्साहः समभवं प्रथमत आपस्तम्बधर्मस्य सवृत्तिकस्य प्रकटनारम्भे । तत्र च समासादिताः तिस्रः संप्रतिपन्नाः प्रतिकृतयः । यास्वन्यतमा प्रतिकृतिः स्मृतिचन्द्रिकामहादिपरिशीलिता शिथिलशिथिलाप्यनुपजातवर्णलोपा प्रायस्सुबद्धपाठा च । यासु च एकतमा कुम्भघोण डबीर्वीथी वास्तव्यानां धर्मशास्त्रपारावारपारीणधिषणानां श्रीरामशिरोमणीनां पारतन्त्र्यपात्रप्रमितमहादिदुष्कर्मणां शिष्टाग्रेसराणां कम्पकुडि वैद्यनाथदीक्षितानां गृहकोशगता कुम्भघोणगर्भमण्ड कालिजाभिधानहृणवाणीमहापाठशालाद्वैतीयिकोपाध्याय रुद्रमलकुर्वनामाश्रि तजनरक्षणैकतानमानसानामाचरितसमाचर्यमाणविद्यासमाश्रिमाहाय्यानामन्वर्थसाधुशब्दोपपदपुरोहितग्रामधेयानां राजबहुदूरधिरुद्रसंमलकृतानां सत्प्रभूणां शर्मायमाणा निकटग्रामागादिता प्रायस्सुबद्धपाङ्क्तिरपि क्वचित् क्वाचित्कलेखकप्रमादलुप्ताक्षरा च ।

यासु चान्यतमा कुम्भघोणान्तर्गतवाणपुरीवास्तव्यानां पारशीलितधर्मशास्त्रप्रबन्धानां यायजूकानां कावेरीवाण चक्रपाणिदीक्षितानां सकाशादुपलब्धा अशिथिलताऽपत्राणि बहुशः विच्छिन्नपाङ्क्तिः प्रायस्सुबद्धा च ।

अन्यच्चात्र प्रतिकृतित्रितयोपग्रहितम् बहोः कालात्पूर्व (GEORGE BUHLER) जार्जुबूह्लराभिधेयेन वैदेशिकपण्डितोत्तमेन मुम्बापुर्यां मुद्रयित्वा प्रकटीकृतमुज्ज्वलावृत्तिसंग्रहयुक्तं कुम्भघोणस्थ गवर्मेण्टु कालेजगीर्वाणवाण्युपाध्यायपदमण्डनायमाने धर्मशास्त्रमर्मसवम्यकुलङ्कषधिषणे चतुस्तन्त्रपारावारपारीणशेमुषीविशेषविख्यातप्राचार्य मुडुम्बिकुलसम्भूत श्रीकृष्णमाचार्य तनूजन्मभिः अभिरूपशेखरैः पेरुवाळुन्दूर नामधेयैः रङ्गाचार्यैः सानुग्रहं समर्पि

तमप्राप्तमेतन्न्यायमन्त्रप्रबन्धरत्नम् । एताः प्रतिकृतीः सम्यक्परिशील्य परिशो-
ध्य च महता प्रयासेन समग्रोज्ज्वलावृत्तिमवहितममुमापस्तम्बधर्मसूत्रप्रबन्धं
पारायणोपयोगिना स्थूलाक्षरमुद्रेण केवलमूलपाठेनापि संयोज्य समपीपदं
मुद्रणपरिष्कारम् । अत्र च सूत्रविभागः प्राय उज्ज्वलवृत्त्यानुगुण्येन वि-
हितोऽपि क्वचित् क्वचित् बम्बानगरीमुद्रितसूत्रपाठेन विप्रतिपद्येत । यद्यप्य-
यं प्रबन्धः मुद्रणकाले असकृत्परिशोधित एव । आज्ञानसिद्धतया वा अ-
बोधविभ्रमयोः पुरुषचित्तस्य कार्यान्तरवैयग्र्यजनितेन मनचितानवधान
दोषेण वा क्वचित् क्वचिदक्षरच्युतिप्रभृतयो दोषा समजनिषतेत्यतो तान् जानन्
पुनः परिशोध्य काञ्चन शुद्धाशुद्धपत्रिकामपि समयोजयम् ।

यदीतोऽन्येऽपि दोषा दृश्येरन्नसंशोधिताः तान् मर्षयन्तु नः सुहृद इति
साञ्जलिबन्धमभ्यर्थये । अत्र विषये पुस्तकान्तरप्रदानेन कृतोपकारिणां
पूर्वोद्दिष्टनामधेयानां वैद्यनाथशास्त्रिप्रभृतीनामेतच्छोधनविषये असकृद्वि-
रचितोपदेशानामव्याजकरुणार्णवानां मतिमन्दरपरिलोडितपाणिनितन्त्र पा-
रावारसमुद्धृततत्त्वार्थपीयूषसमनुगृहीतविद्यामृताभ्यर्थिमुमुक्षुनिकराणाम् अ-
भिज्ञशिखामणीनामस्मदाचार्यचरणानां श्रीमच्छठकोपाचार्यमणीना-
ञ्च प्रत्युपकाराक्षमतयोपहारयामि बहून् प्रणामान् । धनिकजनैकसा-
ध्ये महति मुद्रणव्यवसाये प्रवृत्तस्य मम द्रव्यसाहाय्यादिना महान्तमुप-
कारमातन्वतां तञ्जासंस्थानमध्यप्रवहत्कवेरकन्यकादक्षिणतटमण्डनायेन (नि-
रुत्तावट्टुतुरै) नामक श्रीमद्ग्रामुक्तिक्षेत्रविराजमानश्रीकैलासपरम्परागतनन्दिके-
शाधिष्ठितश्रीशैवमठाधिपानामविरतमाम्नायमानब्रह्मव्यवसायसाहाय्यानां धार्मिक-
शिखामणीनां श्रीमदम्बलवाणदेशिकाभिधपण्डारचूडामणीनां महतीसा-
हाय्यमेव एतादृशव्यवसायजीवातुभूतमिति सञ्जातकातिशयः तेषामविरत-
मुपचीयमानं धर्मसंपत्तिशिष्यसपत्न्यादिकमभ्युदयजालमुत्तरोत्तरमभिवृद्धं भू-
यादिति समभ्यर्थये भगवन्तं भवानीपरिवृढम् ॥

एतत्परिशोधने अकारादिक्रमेण मूलानुक्रमणिकालेखने च विहितसाहा-
य्याय शिष्यसमाख्यिताय सुन्दरशास्त्रिणे महान्तं प्रत्युपकारं धारयामि ।
इत्यल्पमतिप्रच्छयितेन ॥ इत्थं ग. हालास्यनाथशास्त्री ।

# आपस्तम्बधर्मप्रतिपाद्यविषयसङ्ग्रहसूचिका

## प्रथमप्रश्नः

| | |
|---|---|
| प्रथमपटले — (खं०१-२-३-४) | प्रमाणस्वरूपम् । वर्णानामानुपूर्व्येण [illegible] । [illegible] उपनयनशब्दार्थविचारः । गायत्रीप्रशंसा । आचार्यलक्षणम् । मातापितृतोऽप्याचार्यस्य श्रैष्ठ्यप्रतिपादनम् । वर्णानुपूर्व्येण उपनयनकालः । काम्योपनयनकालः । उपनयनकालातिक्रमे प्रायश्चित्तम् । पितृपितामहप्रपितामहादीनामुपनयनाभावे तत्कुलोत्पन्नानां पातित्यम् । इच्छतां तेषां प्रायश्चित्तम् । गुरुकुलवासकालः । ब्रह्मचर्यविधिविस्तृतः । आचार्यनिकटे शिष्येण स्थातव्यक्रम इति ॥ |
| द्वितीयपटले-- (खं०५-६-७-८) | नियमस्य श्रैष्ठ्यम् । तदतिक्रमे प्रत्यवायः । गुरुशुश्रूषाप्राधान्यम् । गुरुशुश्रूषाक्रमः विस्तृतः । गुरुदक्षिणाहरणप्रकारः । समावृत्तनियमः । गुरुसन्निधौ स्थातव्यक्रमः । आचार्यप्राचार्यसन्निपाते कर्तव्यपूजाक्रमः । आचार्योपसर्पणविधिः । शिष्यपरिपालनं चेति ॥ |
| तृतीयपटले - खं०९-१०-११) | अध्ययनानध्ययनकालः । तत्कर्तव्यप्रकारश्च । अध्ययनकाले श्रोत्रियाभ्यागमे अनुष्ठेयक्रमः । नित्यप्रश्नाध्ययनप्रकार इति ॥ |
| चतुर्थपटले-- खं०१२-१३-१४) | नित्यप्रश्नप्रशंसा । कर्मकालोच्चरितानां मन्त्राणामनध्यायाभावनिरूपणम् । पञ्चयज्ञस्वरूपम् । तदनुष्ठानप्रकारः । अभिवाद्याभिवादनस्वरूपम् । कुशलप्रश्नादिप्रकारश्चेति ॥ |
| पंचमपटले-- खं०१५-१६-१७) | गुर्वादीनामुपासने जपहोमादिषु च यज्ञोपवीतधारणप्रकारः । आचमनकालः । तत्प्रकारः । अभोज्यपदार्थनिर्णयः विस्तृतः । पदार्थशुद्धिप्रकार इति ॥ |
| षष्ठपटले — खं०१८-१९) | दुर्भिक्षे भोज्यस्वीकारक्रमः । अभोज्यान्नानां [illegible] भोज्यान्नस्वरूपम् इति ॥ |
| सप्तमपटले— खं०२०-२१) | दाम्भिकनिन्दा । ब्राह्मणस्य वाणिज्यनिषेधः । दुर्भिक्षकाले वाणिज्यमप्यनुष्ठेयमिति निरूपणम् । पतनीयकर्मपरिगणनम् । पतितनिन्दा चेति ॥ |
| अष्टमपटले-- खं०२२-२३) | अध्यात्मविचारः । [illegible] । भूतदाहीयदोषपरिगणनम् । तत्प्रतिद्वन्द्विगुणपरिगणनं चेति ॥ |
| नवमपटले- - | वर्णानुपूर्व्येण हत्याप्रायश्चित्तम् । गुरुहननप्रायश्चित्तम् । ग |

---

## ॥ द्वितीयप्रश्ने ॥

| | |
|---|---|
| ५. पंचमपटले— (ख० १०-११-१२) | यावत्सुनिमित्तानि । दानप्रकारः । वर्णभेदेन वृत्तिविशेषनम् । अयाज्यस्वरूपम् । शास्त्रोल्लङ्घिनां प्रायश्चित्तविधानम् । तदतिवर्तिनां राजादिमुखेन शिक्षीकरणम् । राज्ञा कर्तव्यो दण्डप्रकारः । मध्येमार्गं मिलितानामधिकारिभेदेन मार्गप्रदानप्रकारः । जघन्यवर्णस्य स्वधर्मानुष्ठानेन उत्तमवर्णत्वप्राप्तिः । उत्तमवर्णस्य अधर्मानुष्ठानेन जघन्यवर्णत्वप्राप्तिः । द्वितीयपाणिग्रहणनिमित्तम् । कन्यादानप्रकारः । कन्यादानप्रतिग्रहयोः वर्जनीयनिरूपणम् । ब्राह्मादिविवाहस्वरूपनिरूपणम् । अग्न्युपासनप्रकारः । गृहस्थधर्माणां केषाञ्चिन्निरूपणम् । अभिनिर्मुक्ताभ्युदितादीनां गर्हणम् इति ॥ |
| ६. षष्ठपटले— (ख० १३-१४-१५) | यथाशास्त्रमनुष्ठितविवाहायां पत्न्यां तदपत्यानां च प्रशंसा । पीतिप्राधान्यम् । दायविभागप्रकारः । भार्यादिमरणे अनुष्ठेयनियमः । होमप्रकारः । होमे अधिकारिणोऽनधिकारिणश्चेति ॥ |
| ७. सप्तमपटले— (ख० १६-१७) | श्राद्धस्वरूपम् । श्राद्धार्थस्य अपरपक्षस्य ग्रहणम् । अपरपक्षे क्रियमाणस्य श्राद्धस्य प्रथमायामारभ्य पूर्वेण फलनिरूपणम् । श्राद्धाहद्रव्यस्वरूपम् । श्राद्धे भोजनीयानां स्वरूपम् । श्राद्धे निमन्त्रणप्रकारः । निमन्त्रणे वर्जनीयानां ब्राह्मणानां च परिगणनम् । श्राद्धकालविवेचनम् इति ॥ |
| ८. अष्टमपटले— (ख० १८-१९-२०) | श्राद्धे वर्जनीयानां पदार्थानां परिगणनम् । श्राद्धे अनुष्ठेयो नियमः । काम्यस्य श्राद्धस्य अनुष्ठानप्रकारः । भोजने नियमः । मासिश्राद्धविधिः । केषाञ्चिद्धर्माणां निरूपणं चेति ॥ |
| ९. नवमपटले— (ख० २१-२२-२३-२४) | आश्रमविभागः । परिव्रजनप्रकारः । परिव्राड्धर्माः । वानप्रस्थस्वरूपम् । वानप्रस्थधर्माः । ऊर्ध्वरेतःप्रशंसा । पुण्यकृतां प्रशंसा । पापकृतां निन्दा चेति ॥ |
| १०. दशमपटले— (ख० २५-२६-२७) | राज्ञः गृहादिविन्यासप्रकारः । राज्ञा कर्तव्यो दण्डादिप्रणयनप्रकारः । राजधर्माः । दम्पत्योः परस्परमव्यतिक्रमः । व्यतिक्रमे प्रत्यवायः दण्डश्च । पुरुषवधस्तेयादिषु अपराधेषु दण्डप्रकारश्चेति ॥ |
| ११. एकादशपटले— ख० २८-२९ | भूम्यादिपरस्वहारिणां दण्डप्रणयनविधिः । अदण्ड्यस्वरूपम् । अपराधिस्वरूपम् । अपराधसन्देहे निश्चयक्रमः । अनृतोक्तौ दण्डप्रकारः । सत्यप्रशंसा । स्त्रीशूद्रादिभ्योऽपि धर्मशेषस्य अवगन्तव्यतेति च एवमादयो धर्माः बहवः आनुपूर्व्याऽन्यत्र निरूपिताः । यथामति मया पटलक्रमेण तत्प्रतिपाद्यविषयाणां दिक्प्रदर्शनं कृतमिति विदन्तु सहृदयाः ॥ |

---

## ॥ सूचीपत्रम् ॥

## सूचीपत्रम्

## सूचीपत्रम् ।

## सूचीक्रम।

सूचीपत्र

# उद्दालकशासंहितापरनामकधर्मसूत्रस्य शोधनपत्रिका—

| पृष्ठं | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १९ | त्रियम | नियम |
| २ | ७ | भणो | गुणो |
| ५ | ३ | सम्भवे | सम्भवे |
| १० | ७ | स्वप्स्यात् | स्वप्यात् |
| ११ | ८ | कत्रर | कत्रर |
| १५ | १७ | यान | यात |
| २१ | २३ | ब | ऊ |
| २२ | २५ | एतत्क | एतत्कु |
| २२ | २६ | पीड | पीड्य |
| २३ | २४ | शूक्त | शुक्त |
| २३ | २५ | शूक्ति | शुक्त |
| ५२ | १७ | गपि | मपि |
| ५२ | १९ | पुरो | पुरे |
| ५६ | २० | गात् | गा |
| ५७ | ९ | यमेत् | यमेत |
| ५९ | ३ | र्णात्युप | ण्युप |
| ६० | १९ | मिदस् | मिद |
| ६० | २२ | निर्देश | निर्दश |
| ६० | २४ | मिर्देश | र्दश |
| ६३ | ४ | शूक्त | क्त |
| ६४ | ६ | शूक्त | क्त |
| ६४ | २६ | कीलल | कीलाल |
| ६४ | २६ | कीलल | कीलाल |
| ६८ | १८ | निर्वंघे | निर्बंधे |
| ६९ | २२ | यावपा | यावावपा |
| ८० | २ | काशे उदकामिति | काशे क्षीरमभुष्मिन्नवकाशे उदकामिति |

अस्मिन्पुटे विद्यमानास्सर्वे शूक्तशब्दा शुक्त इत्येव पठनीया

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९४ | १० | ध्यायात् | ध्यायात् |
| ९५ | १९ | वोदक | रुदक |
| ९६ | ७ | स्पा | न्पा |
| १०० | १ | खेदमा | देदस्या |
| १०१ | २४ | गीता | शित |
| १०३ | २ | ण्यवहार | व्यवहार |
| १०७ | २७ | स्तम्भ | स्तम्भा |
| ११६ | १० | वगा | वमा |
| ११७ | १७ | यक्त | युक्त |
| ११८ | ७ | हान | हीन |
| १२७ | १६ | मङ्गुमलि | मङ्गुलि |
| १३० | १८ | दिकगि | दिकमि |
| १३२ | ७ | तिथिन | तिर्थाना |
| १४२ | २७ | धान | धा। |
| १४३ | २६ | नमि | नमि |
| १४९ | २४ | मरि | मरि |
| १५२ | १९ | व्यभ | त्रिभ |
| १५२ | २१ | व्यभ | त्रिभ |
| १५५ | ३ | जय | चय |
| १५६ | १५ | व्यन् | व्यम |
| १६ | ११ | माद्य | मात्पुरुषाद्य |
| १६ | २० | भर्ता | हर्ता |
| १६० | २१ | भर्ता | हर्ता |
| १६५ | ६३ | बलेमे | बलेमे |
| १७१ | १४ | निर्वेद | हिर्वेद |
| १७२ | ७ | प्रशातः | प्रशास्त |
| १७२ | ९ | प्रशात. | प्रशास्त. |
| १७२ | १३ | शक्य | शक्य |
| १७४ | २० | आन्या | अन्या |
| १७४ | २३ | व्येष | व्येष |

# ॥ आपस्तम्बीयधर्मसूत्राणि ॥

प्रथमपटलारम्भः ।

ॐ अथातः सामयाचारिकान्धर्मान्व्याख्यास्यामः ॥१॥ धर्मज्ञसमयः प्रमाणम् ॥२॥ वेदाश्च ॥३॥ चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः ॥४॥ तेषां पूर्वः पूर्वो जन्मतः श्रेयान् ॥५॥ अशूद्राणामदुष्टकर्मणामुपायनं वेदाध्ययनमग्न्याधेयं फलवन्ति च कर्माणि ॥६॥ शुश्रूषा शूद्रस्येतरेषां वर्णानाम् ॥७॥ पूर्वस्मिन् पूर्वस्मिन्वर्णे निःश्रेयसं भूयः ॥८॥ उपनयनं विद्यार्थस्य श्रुतितः संस्कारः ॥९॥ सर्वेभ्यो वेदेभ्यः सावित्र्यनूच्यत इति हि ब्राह्मणम् ॥१०॥ तमसो वा एष तमः प्रविशति यमविद्वानुपनयते यश्चाविद्वानिति हि ब्राह्मणम् ॥११॥ तस्मिन्नभिजनविद्यासमुदेतं समाहितं संस्कर्तारमीप्सेत ॥१२॥ तस्मिंश्चैव विद्याकर्मान्तमविप्रतिपन्ने धर्मेभ्यः ॥१३॥ यस्माद्धर्मानाचिनोति स आचार्यः ॥१४॥ तस्मै न द्रुह्येत्कदाचन ॥१५॥ स हि विद्यातस्तं जनयति ॥१६॥ तच्छ्रेष्ठं जन्म ॥१७॥ शरीरमे-

व मातापितरौ जनयतः ॥१८॥ वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यं गर्भाष्टमेषु ब्राह्मणं गर्भैकादशेषु राजन्यं गर्भद्वादशेषु वैश्यम् ॥१९॥ अथ काम्यानि ॥२०॥ सप्तमे ब्रह्मवर्चसकाममष्टम आयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादश इन्द्रियकामं द्वादशे पशुकामम् ॥२१॥ आ षोडशाद्ब्राह्मणस्यानात्यय आ द्वाविंशात्क्षत्रियस्या चतुर्विंशाद्वैश्यस्य ॥२२॥ यथा व्रतेषु समर्थः स्यादयानि वक्ष्यामः ॥२३॥ अतिक्रान्ते सावित्र्याः काल ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेत ॥२४॥ अथोपनयनम् ॥२५॥ ततस्संवत्सरमुदकोपस्पर्शनम् ॥२६॥ अथाध्याप्यः ॥२७॥ अथ यस्य पिता पितामह इत्यनुपेतौ स्यातां ते ब्रह्महसंस्तुताः ॥२८॥ तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत् ॥२९॥ तेषामिच्छतां प्रायश्चित्तम् ॥३०॥ यथा प्रथमेऽतिक्रम ऋतुरेवं संवत्सरः ॥३१॥ अथोपनयनम् ॥३२॥ तत उदकोपस्पर्शनम् ॥३३॥

॥ इति प्रथमा खण्डिका प्र[illegible] प[illegible]

प्रतिपूरुषं संख्याय संवत्सरान्यावन्तोऽनुपेताः स्युः ॥१॥ सप्तभिः पावमानीभिर्यदन्ति यच्च दूरक इत्येताभिर्यजुष्पवित्रेण सामपवित्रेणाङ्गिरसेनेति ॥२॥ अपि वा व्याहृतिभिरेव ॥३॥ अथाध्याप्यः ॥४॥ अथ यस्य प्रपितामहा-

ाद् नास्य समयेत उपनयनं. ते श्मशानसंस्तुताः ॥५॥ तेषाम-
भ्यागमनं भोजनं विवाहमिति च वर्जयेत्तेषामिच्छतां प्रा-
यश्चित्तं द्वादशवर्षाणि त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनं
तत उदकोपस्पर्शनं पावमान्यादिभिः ॥६॥ अथ गृहमेधो-
पदेशनम् ॥७॥ नाध्यापनम् ॥८॥ ततो यो निवर्तते तस्य
संस्कारो यथा प्रथमेऽतिक्रमे ॥९॥ तत ऊर्ध्वं प्रकृतिवत् ॥१०॥
उपेतस्याचार्यकुले ब्रह्मचारिवासः ॥११॥ अष्टाचत्वारिं-
शद्वर्षाणि ॥१२॥ पादूनम् ॥१३॥ अर्धेन ॥१४॥ त्रिभिर्वा
॥१५॥ द्वादशावरार्ध्यम् ॥१६॥ न ब्रह्मचारिणो विद्यार्थस्य
परोपवासोऽस्ति ॥१७॥ अथ ब्रह्मचर्यविधिः ॥१८॥ आचा-
र्याधीनस्स्यादन्यत्र पतनीयेभ्यः ॥१९॥ हितकारी गुरोर-
प्रतिलोमयन्वाचा ॥२०॥ अधासनशायी ॥२१॥ नानुदेश्यं
भुञ्जीत ॥२२॥ तथा क्षारलवणमधुमांसानि ॥२३॥ अदिवा-
स्वापी ॥२४॥ अगन्धसेवी ॥२५॥ मैथुनं न चरेत् ॥२६॥
उत्सन्नश्लाघः ॥२७॥ अङ्गानि न प्रक्षालयीत ॥२८॥ प्र-
क्षालयीत त्वशुचिलिप्तानि गुरोरसन्दर्शने ॥२९॥ नाप्सु
श्लाघमानः स्नायाद्यदि स्नायाद्दण्डवत् ॥३०॥
जटिलः ॥३१॥ शिखाजटो वा वापयेदितरान् ॥३२॥ मौ-
ञ्जी मेखला त्रिवृद्ब्राह्मणस्य शक्तिविषये दक्षिणावृत्तानाम्
॥३३॥ ज्या राजन्यस्य ॥३४॥ मौञ्जी वायोमिश्रा ॥३५॥

आवीसूत्रं वैश्यस्य ॥३६॥ मौर्गी तामली वेत्येके ॥३७॥ पालाशो दण्डो ब्राह्मणस्य नैयग्रोधः स्कन्धजोऽवाङ्ग्रो राजन्यस्य बादर औदुम्बरो वा वैश्यस्य वार्क्षो दण्ड इत्यवर्णसंयोगेनैक उपदिशन्ति ॥३८॥ वासः ॥३९॥ शाणीक्षौमाजिनानि ॥४०॥ काषायं चैके वस्त्रमुपदिशन्ति ॥४१॥

॥ इति द्वितीया खण्डिका ॥ प्र० १ प० १ ख० २ ॥

माञ्जिष्ठं राजन्यस्य ॥१॥ हारिद्रं वैश्यस्य ॥२॥ हारिणमैणेयं वा कृष्णं ब्राह्मणस्य ॥३॥ कृष्णं चेदनुपस्तीर्णासनशायी स्यात् ॥४॥ रौरवं राजन्यस्य ॥५॥ बस्ताजिनं वैश्यस्य ॥६॥ आविकं सार्ववर्णिकम् ॥७॥ कम्बलश्च ॥८॥ ब्रह्मवृद्धिमिच्छन्नजिनान्येव वसीत क्षत्रवृद्धिमिच्छन् वस्त्राण्येवोभयवृद्धिमिच्छन्नुभयमिति हि ब्राह्मणम् ॥९॥ अजिनं त्वेवोत्तरं धारयेत् ॥१०॥ अनृत्तदर्शी ॥११॥ सभाः समाजांश्चागन्ता ॥१२॥ अजनवादशीलः ॥१३॥ रहःशीलः ॥१४॥ गुरोरुदाचारेष्वकर्ता स्वैरिकर्माणि ॥१५॥ स्त्रीभिर्यावदर्थसम्भाषी ॥१६॥ मृदुः ॥१७॥ शान्तः ॥१८॥ दान्तः ॥१९॥ ह्रीमान् ॥२०॥ दृढधृतिः ॥२१॥ अग्लाँस्नुः ॥२२॥ अक्रोधनः ॥२३॥ अनसूयुः ॥२४॥ सर्वं लाभमाहरन् गुरवे सायम्प्रातरमत्रेण भिक्षाचर्यं चरेद्भिक्ष-

श्रुतिविप्रतिषिद्धमुच्छिष्टं दद्यात् ॥५॥ यथा क्षारलवणम-
धुमांसादीनि ॥६॥ एतेनान्ये नियमा व्याख्याताः ॥७॥
श्रुतिर्हि बलीयस्यानुमानिकादाचारात् ॥८॥ दृश्यते चा-
पि प्रवृत्तिकारणम् ॥९॥ प्रीतिर्ह्युपलभ्यते ॥१०॥ पितुर्ज्येष्ठ-
स्य च भ्रातुरुच्छिष्टं भोक्तव्यम् ॥११॥ धर्मविप्रतिपत्ताव-
भोज्यम् ॥१२॥ सायंप्रातरुदकुम्भमाहरेत् ॥१३॥ सदाऽर-
ण्यादेधानाहृत्याधो निदध्यात् ॥१४॥ नास्तमिते समि-
द्धारो गच्छेत् ॥१५॥ अग्निमिद्ध्वा परिसमूह्य समिध
आदध्यात्सायं प्रातर्यथोपदेशम् ॥१६॥ सायमेवाग्निपूजे-
त्येके ॥१७॥ समिद्धमग्निं पाणिना परिसमूहेन्न समूह-
न्या ॥१८॥ प्राक्तु यथाकामी ॥१९॥ नाग्न्युदकशे-
षेण वृथा कर्माणि कुर्वीताचामेद्वा ॥२०॥ पाणिसंक्षु-
ब्धेनोदकेनैकपाण्यावर्जितेन च नाचामेत ॥२१॥ स्व-
प्नं च वर्जयेत् ॥२२॥ अथाहरहराचार्यं गोपायेद्धर्मार्थ-
युक्तैः कर्मभिः ॥२३॥ स गुप्त्वा संविशन्ब्रूयाद्धर्मगोपा-
यमाजूगुपमहमिति ॥२४॥ प्रमादादाचार्यस्य बुद्धिपूर्वं
वा नियमातिक्रमं रहसि बोधयेत् ॥२५॥ अनिवृत्तौ स्व-
यं कर्माण्यारभेत ॥२६॥ निवर्तयेद्वा ॥२७॥ अथ यः पूर्वो-
त्थायी जघन्यसंवेशी तमाहुर्न स्वपितीति ॥२८॥ स य ए-
वं प्रणिहितात्मा ब्रह्मचार्यत्रैवास्य सर्वाणि कर्माणि फल-

न्यवागमानि भवन्ति यान्यपि गृहमेधे ॥२९॥

(इति तुरीया खण्डिका। प्र० १ प० १ ख० ४)

इति आपस्तम्बधर्मसूत्रे प्रथमप्रश्ने प्रथमः पटलः ॥१॥

नियमेषु तपश्शब्दः ॥१॥ तदतिक्रमे विद्याकर्म निःस्रव-
ति ब्रह्म सहापत्यादेतस्मात ॥२॥ कर्तपत्यमनायुष्यञ्च ।
३॥ तस्मादृषयोऽवरेषु न जायन्ते नियमातिक्रमात् ॥४॥
श्रुतर्षयस्तु भवन्ति केचित्कर्मफलशेषेण पुनस्सम्भवे ॥५॥
यथा श्वेतकेतुः ॥६॥ यत्किञ्च समाहितो ब्रह्माप्याचार्यादु-
पयुङ्क्ते ब्रह्मवदेव तस्मिन् फलं भवति ॥७॥ अथो यत्कि-
ञ्च मनसा वाचा चक्षुषा वा सङ्कल्पयन्ध्यायत्याहाभिवि-
पश्यति वा तथैव तद्भवतीत्युपदिशन्ति ॥८॥ गुरुप्रसाद-
नीयानि कर्माणि स्वस्त्ययनमध्ययनसंवृत्तिः ॥९॥ अतोऽन्या-
न्यानि निवर्तन्ते ब्रह्मचारिणः कर्माणि ॥१०॥ स्वाध्या-
यधृग्धर्मरुचिस्तपस्व्यृजुर्मृदुः सिध्यति ब्रह्मचारी ॥
११॥ सदा महान्तमपररात्रमुत्थाय गुरोस्तिष्ठन्प्रातरभि-
वादमभिवादयीतासावहम्भो इति ॥१२॥ समानग्रामे
च वसतामन्येषामपि वृद्धतराणां प्राक्प्रातराशात् ॥१३॥
प्रोष्य च समागमे ॥१४॥ स्वर्गमायुश्चेप्सन् ॥१५॥ दक्षिणं
बाहुं श्रोत्रसमं प्रसार्य ब्राह्मणोऽभिवादयीतोरस्समं रा-
जन्यो मध्यसमं वैश्यो नीचैश्शूद्रः ॥१६॥ प्राञ्जलिः ॥
१७॥ प्लावनञ्च नाम्नोऽभिवादनप्रत्यभिवादने च पूर्वे-

यां वर्णानाम् ॥१८॥ उदिते त्वादित्य आचार्येण समेत्योप-
संग्रहणम् ॥१९॥ सदैवाभिवादनम् ॥२०॥ उपसंग्राह्य आ-
चार्य इत्येके ॥२१॥ दक्षिणेन पाणिना दक्षिणं पादमधस्ता-
दभ्यधिमृश्य सकुष्ठिकमुपसंगृह्णीयात् ॥२२॥ उभाभ्या-
मेवोभावभिपीडयत उपसंग्राह्याविन्येके ॥२३॥ सर्वा-
ह्णं सुयुक्तोऽध्ययनादनन्तरोऽध्याये ॥२४॥ तथा गुरुक-
र्मसु ॥२५॥ मनसा चानध्याये ॥२६॥ आहूताध्यायी च
स्यात् ॥२६॥

इति प्रथमप्रश्ने [illegible] ॥५॥

सदा निशायां गुरुं संवेशयेत्तस्य पादौ प्रक्षाल्य संवाह्य
॥१॥ अनुज्ञातस्संविशेत ॥२॥ न चैनमभिप्रसारयीत ॥३॥
न खट्वायां सतोऽभिप्रसारणमस्तीत्येके ॥४॥ न चास्य स-
काशे संविष्टो भाषेत ॥५॥ अभिभाषितस्त्वासीनः प्रति-
ब्रूयात् ॥६॥ अनूत्थाय तिष्ठन्तम् ॥७॥ गच्छन्तमनुग-
च्छेत् ॥८॥ धावन्तमनुधावेत् ॥९॥ न सोपानद्वेष्टित-
शिरा अवहितपाणिर्वासीदेत् ॥१०॥ अध्वापन्नस्तु क-
र्मयुक्तो वासीदेत् ॥११॥ न चेदुपसीदेत् ॥१२॥ देवमि-
वाचार्यमुपासीताविकथयन्नविमना वाचं शुश्रूषमाणोऽ-
स्य ॥१३॥ अनुपस्थकृतः ॥१४॥ अनुवाति वाते वीतः
॥१५॥ अप्रतिष्टब्धः पाणिना ॥१६॥ अनपाश्रितोऽन्य-

त्र ॥१७॥ यज्ञोपवीती द्विवस्त्रः ॥१८॥ अधोनिवीतस्त्वेकवस्त्रः ॥१९॥ अभिमुखोऽनभिमुखम् ॥२०॥ अनासन्नोऽनतिदूरे च ॥२१॥ यावदासीनो बाहुभ्यां प्राप्नुयात् ॥२२॥ अप्रतिवातम् ॥२३॥ एकाध्यायी दक्षिणं बाहुं प्रत्युपसीदेत् ॥२४॥ यथावकाशं बहवः ॥२५॥ तिष्ठति च नासीतानासनयोगविहिते ॥२६॥ आसीने च न संविशेत् ॥२७॥ चेष्टति च चिकीर्षंस्तच्छक्तिविषये ॥२८॥ न चास्य सकाशेऽन्वक्स्थानिन उपसंगृह्णीयात् ॥२९॥ गोत्रेण वा कीर्तयेत् ॥३०॥ न चैनं प्रत्युत्तिष्ठेदनूत्तिष्ठेद्वापि चेत्तस्य गुरुस्स्यात् ॥३१॥ देशात्त्वासनाच्च संसर्पेत् ॥३२॥ 'नाम्ना तदन्तेवासिनं गुरुमप्यात्मन इत्येके ॥३३॥ यस्मिंस्त्वनाचार्यसम्बन्धाद्गौरवं वृत्तिस्तस्मिन्नन्वक्स्थानीयेऽप्याचार्यस्य ॥३४॥ भुक्त्वा चास्य सकाशे नानूत्थायोच्छिष्टं प्रयच्छेत् ॥३५॥ आचामेद्वा ॥३६॥ किं करवाणीत्यामन्त्र्य ॥३७॥

॥ इति षष्ठी खण्डिका (प्र० १ प० २ ख० ६.) ॥

उत्तिष्ठेत्तूष्णीं वा ॥१॥ नापपर्यावर्तेत गुरोः प्रदक्षिणीकृत्यापेयात् ॥२॥ न प्रेक्षेत नग्नां स्त्रियम् ॥३॥ ओषधिवनस्पतीनामाच्छिद्य नोपजिघ्रेत् ॥४॥ उपानहौ छत्रं यानमिति वर्जयेत् ॥५॥ न स्मयेत ॥६॥ यदि स्मयेतापिगृह्य स्मयेतेति हि ब्राह्मणम् ॥७॥ नो-

पजिघ्रेत् स्त्रियं मुखेन ॥८॥ न हृदयेन प्रार्थयेत् ॥९॥ नाकारणादुपस्पृशेत ॥१०॥ रजस्वलो रक्तदन्सत्यवादी स्यादिति हि ब्राह्मणम् ॥११॥ यां विद्यां कुरुते गुरौ तेऽप्यस्याचार्या ये तस्यां गुरोर्वंश्याः ॥१२॥ यानन्यान्पश्यतोऽस्योपसंगृह्णीयात्तदात्वे त उपसंग्राह्याः ॥१३॥ गुरुसमवाये भिक्षायामुत्पन्नायां यमनुबद्धस्तदधीना भिक्षा ॥१४॥ समावृत्तो मात्रे दद्यात् ॥१५॥ माता भर्तारं गमयेत् ॥१६॥ भर्ता गुरुम् ॥१७॥ धर्मकृत्येषु वोपयोजयेत् ॥१८॥ कृत्वा विद्यां यावतीं वेददक्षिणामाहरेद्धर्मतो यथाशक्ति ॥१९॥ विषमगते त्वाचार्य उग्रतः शूद्रतो वाहरेत् ॥२०॥ सर्वदा शूद्रत उग्रतो वाचार्यार्थस्याहरणं धर्म्यमित्येके ॥२१॥ दत्वा च नानुकथयेत् ॥२२॥ कृत्वा च नानुस्मरेत् ॥२३॥ आत्मप्रशंसां परगर्हामिति च वर्जयेत् ॥२४॥ प्रेषितस्तदेव प्रतिपद्येत ॥२५॥ शास्तुश्चानागमाद्वृत्तिरन्यत्र ॥२६॥ अन्यत्रोपसंग्रहणादुच्छिष्टाशनाच्चाचार्यवदाचार्यदारे वृत्तिः ॥२७॥ तथा समादिष्टेऽध्यापयति ॥२८॥ वृद्धतरे च सब्रह्मचारिणि ॥२९॥ उच्छिष्टाशनवर्जमाचार्यवदाचार्यपुत्रे वृत्तिः ॥३०॥ समावृत्तस्याप्येतदेव सामयाचारिकमेतेषु ॥३१॥

॥ इति सप्तमी खण्डिका ( प्र० १ प० २ ख० ७ ) ॥

एषा ब्रह्मचारिणो वृत्तम् ॥ १ ॥ माल्यालिप्तमुख उपलिप्तकेशश्मश्रुरक्तोऽभ्यक्तो वेष्टित्युपवेष्टी काञ्चुक्युपानही पादुकी ॥२॥ उदाचारेषु चास्यैतानि न कुर्यात्कारयेद्वा ॥३॥ स्वैरिकर्मसु च ॥४॥ यथा दन्तप्रक्षालनोत्सादनावलेखनानीति ॥ ५ ॥ तद्द्रव्याणां च न कथयेदात्मसंयोगेनाचार्यः ॥ ६ ॥ स्नातस्तु काले यथाविध्यभिहृतमाहृतोऽभ्येतो वा न प्रतिसंहरेदित्येके ॥७॥ उच्चैस्तरां नासीत ॥ ८ ॥ तथा बहुपादे ॥ ९ ॥ सर्वतःप्रतिष्ठिते ॥ १० ॥ शय्यासने चाचरिते नाविशेत ॥ ११ ॥ यानमुक्तोऽध्वन्यन्वारोहेत् ॥ १२ ॥ सभानिकषकटस्रस्तरांश्च ॥ १३ ॥ नानभिभाषितो गुरुमभिभाषेत प्रियादन्यत् ॥१४॥ व्युपतोदव्युपजावव्यभिहासोदामन्त्रणन्नामधेयग्रहणप्रेषणानीति गुरोर्वर्जयेत् ॥ १५ ॥ आपद्यर्थं ज्ञापयेत् ॥ १६ ॥ सहवसन्सायं प्रातरनाहूतो गुरुं दर्शनार्थो गच्छेत् ॥ १७ ॥ विप्रोष्य च तदहरेव पश्येत् ॥ १८ ॥ आचार्यप्राचार्यसन्निपाते प्राचार्यायोपसंगृह्योपसञ्जिघृक्षेदाचार्यम् ॥ १९ ॥ प्रतिषेधेदितरः ॥२०॥ लुप्यते पूजा चास्य सकाशे ॥ २१ ॥ मुहुश्चाचार्यकुलं दर्शनार्थो गच्छेद्यथाशक्त्यधिहस्त्यमादायापि दन्तप्रक्षालनानीति ॥२२॥ मातरं पितरमाचार्यमग्नींश्च गृहाणि च रिक्तपाणिर्नोपगच्छेद्राजानं चेन्न श्रुतमिति ॥२३॥

तस्मिन्गुरोर्वृत्तिः ॥२४॥ पुत्रमिवैनमनुकांक्षन् सर्वधर्मेष्वनपच्छादयमानः सुयुक्तो विद्यां ग्राहयेत् ॥२५॥ न चैनमध्ययनविघ्नेनात्मार्थेषूपरुन्ध्यादनापत्सु ॥२६॥ अन्तेवास्यनन्तेवासी भवति विनिहितात्मा गुरावनैपुणमापद्यमानः ॥२७॥ आचार्योऽप्यनाचार्यो भवति श्रुतात्परिहरमाणः ॥२८॥ अपराधेषु चैनं सततमुपालभेत ॥२९॥ अभित्रास उपवास उदकोपस्पर्शनमदर्शनमिति दण्डा यथामात्रमानिवृत्तेः ॥३०॥ निवृत्तं चरितब्रह्मचर्यमन्येभ्यो धर्मेभ्योऽनन्तरो भवेत्यतिसृजेत ॥३१॥

(इति अष्टमी खण्डिका) (प्र०१ प०२ ख०८)

इति आपस्तम्बधर्मसूत्रे प्रथमप्रश्ने द्वितीयः पटलः ॥२॥

श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासं प्रदोषे नाधीयीत ॥१॥ तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेत् ॥२॥ अर्धपञ्चमांश्चतुरो मासानित्येके ॥३॥ निगमेष्वध्ययनं वर्जयेत् ॥४॥ आनडुहेन वा शकृत्पिण्डेनोपालिप्तेऽधीयीत ॥५॥ श्मशाने सर्वतः शम्याप्रासात् ॥६॥ ग्रामेणाध्यवसिते क्षेत्रेण वा नानध्यायः ॥७॥ ज्ञायमाने तु तस्मिन्नेव देशे नाधीयीत ॥८॥ श्मशानवच्छूद्रपतितौ ॥९॥ समानागार इत्येके ॥१०॥ शूद्रायान्तु प्रेक्षणप्रतिप्रेक्षणयोरेवानाध्या-

यः ॥११॥ तथान्यस्यां स्त्रियां वर्णव्यतिक्रान्तायां मैथुने ॥१२॥ ब्रह्माध्येष्यमाणो मलवद्वाससेच्छन् सम्भाषितुं ब्राह्मणेन सम्भाष्य तया सम्भाषेत सम्भाष्य तु ब्राह्मणेनैव सम्भाष्याधीयीत एवं तस्याः प्रजानिःश्रेयसम् ॥१३॥ अन्तश्शवम् ॥१४॥ अन्तश्चाण्डालम् ॥१५॥ अभिनिस्सृतानान्तु सीम्न्यनध्यायः ॥१६॥ सन्दर्शने चारण्ये ॥१७॥ तदहरागतेषु च ग्रामं बाह्येषु ॥१८॥ अपि सत्सु ॥१९॥ सन्धावनुस्तनिते रात्रिम् ॥२०॥ सर्वां रात्रिं नाधीयीत ॥२१॥ स्वप्नपर्यान्तं विद्युति ॥२२॥ उपव्युषं यावता वा कृष्णां रोहिणीमिति शम्याप्रासाद्विजानीयादेतस्मिन् काले विद्योतमाने सप्रदोषमहरनध्यायः ॥२३॥ दह्रेऽपररात्रे स्तनयित्नुना ॥२४॥ ऊर्ध्वमर्धरात्रादित्येके ॥२५॥ गवां चावरोधे ॥२६॥ वध्यानाञ्च यावता हन्यन्ते ॥२७॥ पृष्ठारूढः पशूनां नाधीयीत ॥२८॥ अहोरात्रावमावास्यासु ॥२९॥

( इति नवमी खण्डिका ॥ ( प्र० १ प० ३ ख० ९ )

चातुर्मास्यासु च ॥१॥ वेदमणे गुरुष्वष्टकास्य औपाकरण इति त्र्यहाः ॥२॥ तथा सम्बन्धेषु ज्ञातिषु ॥३॥ मातरि पितर्याचार्य इति द्वादशाहाः ॥४॥ तेषु चोदकोपस्पर्शनं तावन्तं कालम् ॥५॥ अनुभाविनाञ्च परिवापनम् ॥६॥ न समावृत्ता वपेरन्नन्यत्र विहारादित्येके

॥७॥ अथापि ब्राह्मणम् । रक्ता वा एषाऽनभिहितोऽयं मुण्डस्तस्यैतदपिधानं यच्छिखेति ॥८॥ सत्रेषु तु वचनाद्वपनं शिखायाः ॥९॥ आचार्ये त्रीनहोरात्रानित्येके ॥१०॥ श्रोत्रियसंस्थायामपरिसंवत्सरायामेकाम् ॥ ॥११॥ सब्रह्मचारिणीत्येके ॥१२॥ श्रोत्रियाभ्यागमेऽधिजिगांसमानोऽधीयानो वानुज्ञाप्याधीयीत ॥१३॥ अध्यापयेद्वा ॥१४॥ गुरुसन्निधौ चाधीहि भो इत्युक्त्वाधीयीत ॥१५॥ अध्यापयेद्वा ॥१६॥ उभयत उपसंग्रहणमधिजिगांसमानस्याधीत्य च ॥१७॥ अधीयानेषु वा यत्रान्यो व्यपेयादेतमेव शब्दमुत्सृज्याधीयीत ॥१८॥ श्वगर्दभनादाः सलावृक्येकसृकोलूकशब्दाः सर्वे वादितशब्दा रोदनगीतसामशब्दाश्च ॥१९॥ शाखान्तरे च साम्नामनध्यायः ॥२०॥ सर्वेषु च शब्दकर्मसु यत्र संसृज्येरन् ॥२१॥ छर्दयित्वा स्वप्नान्तम् ॥ २२॥ सर्पिर्वा प्राश्य ॥२३॥ पूतिर्गन्धः ॥२४॥ शुक्तं चात्मसंयुक्तम् ॥२५॥ प्रदोषे च भुक्त्वा नाधीयीत ॥ २६॥ प्रोदकयोश्च पाण्योः ॥२७॥ प्रेतसंक्लृप्तं चान्नं भुक्त्वा सप्रदोषमहरनध्यायः ॥२८॥ आ च विपाकात् ॥ २९॥ अश्राद्धेन तु पर्यवदध्यात् ॥३०॥

(इति दशमी खण्डिका) (प्र० १ प० ३ ख० १०)

काण्डोपाकरणे चामातृकस्य ॥१॥ काण्डसमा-

पने चाप्रितृकस्य ॥२॥ मनुष्यप्रकृतीनां च देवानां यज्ञे भुक्त्वेत्येके ॥३॥ पर्युषितैस्तण्डुलैराममांसेन च नानध्यायः ॥४॥ तथौषधिवनस्पतिमूलफलैः ॥५॥ यत्काण्डमुपाकुर्वीत तस्य चानुवाक्यं कुर्वीत न तत्तदहरधीयीत ॥६॥ उपाकरणसमापनयोश्च पारायणस्य तां विद्याम् ॥७॥ वायुर्घोषवान्भूमौ तृणसंवाहो वर्षति वा यत्र धाराः प्रवहेत् ॥८॥ ग्रामारण्ययोश्च सन्धौ महापथे च विप्रोष्य च समध्ययनं तदहः ॥९॥ स्वैरिकर्मसु च ॥१०॥ यथा दन्तप्रक्षालनोत्सादनानुलेपनानीति ॥११॥ तावन्तं कालं नाधीयीताध्यापयेद्वा ॥१२॥ सन्ध्योः ॥१३॥ तथा वृक्षमारूढोऽप्सु चावगाढो नक्तं चापावृते ॥१४॥ दिवा च पिहिते ॥१५॥ आविहितमनुवाकाध्ययनमाषाढ्वासन्तिकयोः ॥१६॥ नित्यप्रश्नस्य चाविधिना ॥१७॥ तस्य विधिः ॥१८॥ अकृतप्रातराश उदकान्तं गत्वा प्रयतःशुचौ देशेऽधीयीत यथाध्यायमुत्सृजन्वाचा ॥१९॥ मनसा चानध्याये ॥२०॥ विद्युति चाभ्यग्रायां स्तनयित्नावप्रायत्ये प्रेतान्ने नीहारे च मानसं परिचक्षते ॥२१॥ श्राद्धभोजन एवैके ॥२२॥ विद्युत्स्तनयित्नुर्वृष्टिश्चापर्तौ यत्र सन्निपतेयुस्त्र्यहमनध्यायः ॥२३॥ यावद्भूमिर्व्युदकेत्येके ॥२४॥ एकेन द्वाभ्यां वैतेषामाकालम् ॥२५॥ सूर्याचन्द्रमसोर्ग्रहणे भूमिचले-

ऽपस्वान उल्कायमग्न्युत्पाते च सर्वासां विद्यानां
सार्वकालिकमाकालम् ॥ २६ ॥ अभ्रं चापर्तौ सूर्या-
चन्द्रमसोः परिवेष इन्द्रधनुः प्रति सूर्यमत्स्यश्च वा
ते पूतिगन्धे नीहारे च सर्वेष्वेतेषु तावत्कालम् ॥२७॥
मुहूर्तं विरते वाते ॥ २८ ॥ सलावृक्यामेकसृकइति
स्वप्नपर्यन्तम् ॥ २९ ॥ नक्तं चारण्येऽनग्नावहिरण्ये
वा ॥ ३० ॥ अननूक्तं चापर्तौ छन्दसो नाधी-
यीत ॥३१॥ प्रदोषे च ॥३२॥ सार्वकालिकमाम्ना-
तम् ॥३३॥ यथोक्तमन्यदतः परिषत्सु ॥३४॥

(इति एकादशी खण्डिका) प्र० १ प० ३ ख० ११ ॥

इति आपस्तम्बधर्मसूत्रेषु प्रथमप्रश्ने तृतीयः पटलः ॥३॥

तपःस्वाध्याय इति ब्राह्मणम् ॥ १ ॥ तत्र श्रू-
यते—स यदि तिष्ठन्नासीनः शयानो वा स्वाध्यायम-
धीते तप एव तत्तप्यते तपो हि स्वाध्याय इति ॥२॥
अथापि वाजसनेयिब्राह्मणम्। ब्रह्मयज्ञो ह वा एष यत्स्वा-
ध्यायस्तस्यैते वषट्कारा यत्स्तनयति यद्विद्योतते यदव-
स्फूर्जति यद्वातो वायति तस्मात्स्तनयति विद्योतमा-
नेऽवस्फूर्जति वाते वा वायत्यधीयीतैव वषट्काराणाम-
च्छम्बट्कारायेति ॥३॥ तस्य शाखान्तरे वाक्यसमा-
प्तिः ॥४॥ अथ यदि वा वातो वायात्स्तनयेद्वा विद्यो-
तेत वावस्फूर्जेद्वैकां वर्चमेकं वा यजुरेकं वा समभिव्याह-

रेद्भूर्भुवस्सुवस्सत्यं तपः श्रद्धायां जुहोमीति वैतत्तेनो हैवास्यैतदहः स्वाध्याय उपात्तो भवति ॥५॥ एवं सत्यार्यसमयेनाविप्रतिषिद्धम् ॥६॥ अध्यायानध्यायं ह्युपदिशन्ति । तदनर्थकं स्याद्वाजसनेयिब्राह्मणं चेदवेक्षेत ॥७॥ आर्यसमयो ह्यगृह्यमाणकारणः ॥८॥ विद्यां प्रत्यनध्यायः श्रूयते न कर्मयोगे मन्त्राणाम् ॥९॥ ब्राह्मणोक्ता विधयस्तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते ॥१०॥ यत्र तु प्रीत्युपलब्धितः प्रवृत्तिर्न तत्र शास्त्रमस्ति ॥११॥ तदनुवर्तमानो नरकाय राध्यति ॥१२॥ अथ ब्राह्मणोक्ता विधयः ॥१३॥ तेषां महायज्ञा महासत्राणीति च संस्तुतिः ॥१४॥ अहरहर्भूतबलिर्मनुष्येभ्यो यथाशक्तिदानम् ॥१५॥

॥ (इति द्वादशी खण्डिका ॥ (प्र० १ प० ४ ख० १२) ॥

देवेभ्यः स्वाहाकार आकाष्ठात्पितृभ्यः स्वधाकार ओदपात्रादृषिभ्यः स्वाध्याय इति ॥१॥ पूजा वर्णज्यायसां कार्या ॥२॥ वृद्धतराणाञ्च ॥३॥ हृष्टो दर्पति हृप्तो धर्ममतिक्रामति धर्मातिक्रमे खलु पुनर्नरकः ॥४॥ न समावृत्ते समादेशो विद्यते ॥५॥ ओङ्कारस्स्वर्गद्वारं तस्माद्ब्रह्माध्येष्यमाण एतदादि प्रतिपद्येत ॥६॥ विकथां चान्यां कृत्वैवं लौकिक्या वाचा व्यावर्तते

ब्रह्म ॥७॥ यज्ञेषु चैतदादयः प्रसवाः ॥८॥ लोके च भूतिकर्मस्वेतदादीन्येव वाक्यानि स्युर्यथा पुण्याहं स्वस्त्यृद्धिमिति ॥९॥ नासमयेन कृच्छ्रं कुर्वीत त्रिश्श्रावणं त्रिस्सहवचनमिति परिहाप्य ॥१०॥ अविचिकित्सा यावद्ब्रह्म निगन्तव्यमिति हारीतः ॥११॥ न बहिर्वेदे गतिर्विद्यते ॥१२॥ समादिष्टमध्यापयन्तं यावदध्ययनमुपसङ्गृह्णीयात् ॥१३॥ नित्यमर्हन्तमित्येके ॥१४॥ न गतिर्विद्यते ॥१५॥ वृद्धानां तु ॥१६॥ ब्रह्मणि मिथो विनियोगे न गतिर्विद्यते ॥१७॥ ब्रह्म वर्धत इत्युपदिशन्ति ॥१८॥ निवेशे वृत्ते संवत्सरेसंवत्सरे द्वौद्वौ मासौ समाहित आचार्यकुले वसेद्भूयः श्रुतमिच्छन्निति श्वेतकेतुः ॥१९॥ एतेन ह्यहं योगेन भूयः पूर्वस्मात्कालाच्छ्रुतमकुर्वीति ॥२०॥ तच्छास्त्रैर्विप्रतिषिद्धम् ॥२१॥ निवेशे हि वृत्ते नैयमिकानि श्रूयन्ते ॥२२॥

॥ (इति त्रयोदशी खण्डिका) ॥ (प्र० १ प० ४ ख० १३) ॥

अग्निहोत्रमतिथयो यच्चान्यदेवं युक्तम् ॥१॥ अध्ययनार्थेन यं चोदयेन्न चैनं प्रत्याचक्षीत ॥२॥ न चास्मिन् दोषं पश्येत् ॥३॥ यदृच्छायामसंवृत्तौ गतिरेव तस्मिन् ॥४॥ मातरि पितर्याचार्यवच्छुश्रूषा ॥५॥ समावृत्तेन सर्वे गुरव उपसङ्ग्राह्याः ॥६॥ प्रोष्य च

समागमे ॥७॥ भ्रातृषु भगिनीषु च यथापूर्वमुपसंग्रहणम् ॥८॥ नित्या च पूजा यथोपदेशम् ॥९॥ ऋत्विक्छ्वशुरपितृव्यमातुलानवरवयसः प्रत्युत्थायाभिवदेत् ॥१०॥ तूष्णीं वोपसंगृह्णीयात् ॥११॥ दशवर्षं पौरसख्यं पञ्चवर्षं तु चारणम्। त्रिवर्षपूर्वः श्रोत्रियोऽभिवादनमर्हति ॥१२॥ ज्ञायमाने वयोविशेषे वृद्धतरायाभिवाद्यम् ॥१३॥ विषमगतायागुरवे नाभिवाद्यम् ॥१४॥ अन्वारुह्य वाभिवादयीत ॥१५॥ सर्वत्र तु प्रत्युत्थायाभिवादनम् ॥१६॥ अप्रयतेन नाभिवाद्यं तथा प्रयतायाप्रयतश्च न प्रत्यभिवदेत् ॥१७॥ पतिवयसः स्त्रियः ॥१८॥ न सोपानद्वेष्टितशिरा अवहितपाणिर्वाऽभिवादयीत ॥१९॥ सर्वनाम्ना स्त्रियो राजन्यवैश्यौ च ॥२०॥ न नाम्ना ॥२१॥ मातरमाचार्यदारं चेत्येके ॥२२॥ दशवर्षश्च ब्राह्मणः शतवर्षश्च क्षत्रियः। पितापुत्रौ स्म तौ विद्धि तयोस्तु ब्राह्मणः पिता ॥२३॥ कुशलमवरवयसं वयस्यं वा पृच्छेत् ॥२४॥ अनामयं क्षत्रियम् ॥२५॥ अनष्टं वैश्यम् ॥२६॥ आरोग्यं शूद्रम् ॥२७॥ नासम्भाष्य श्रोत्रियं व्यतिव्रजेत् ॥२८॥ अरण्ये च स्त्रियम् ॥२९॥

॥ (इति चतुर्दशी खण्डिका) प्र० १ प० ४ ख० १४ ॥

इति आपस्तम्बधर्मसूत्रेषु प्रथमप्रश्ने चतुर्थः पटलः ॥४॥

उपासने गुरूणां वृद्धानामतिथीनां होमे जप्यकर्मणि भोजन आचमने स्वाध्याये च यज्ञोपवीती स्यात् ॥१॥ भूमिगतास्वप्स्वाचम्य प्रयतो भवति ॥ २॥ यं वा प्रयत आचामयेत् ॥३॥ न वर्षधारास्वाचामेत् ॥४॥ तथा प्रदरोदके ॥५॥ तप्ताभिश्चाकारणात् ॥६॥ रिक्तपाणिर्वयस उद्यम्याप उपस्पृशेत् ॥७॥ शक्तिविषये न मुहूर्तमप्यप्रयतः स्यात् ॥८॥ नग्नो वा ॥९॥ नाप्सु सतः प्रयमणं विद्यते ॥१०॥ उत्तीर्य त्वाचामेत् ॥११॥ नाप्रोक्षितमिन्धनमग्नावादध्यात् ॥ १२॥ मूढस्वस्तरे चासंस्पृशन्नन्यानप्रयतान्प्रयतो मन्येत ॥१३॥ तथातृणकाष्ठेषु निखातेषु ॥१४॥ प्रोक्ष्य वास उपयोजयेत् ॥१५॥ शुनोपहतः सचेलोऽवगाहेत ॥१६॥ प्रक्षाल्य वा तं देशमग्निना संस्पृश्य पुनः प्रक्षाल्य पादौ चाचम्य प्रयतो भवति ॥१७॥ अग्निं नाप्रयत आसीदेत् ॥१८॥ इषुमात्रादित्येके ॥१९॥ न चैनमुपधमेत् ॥२०॥ खट्वायां च नोपदध्यात् ॥२१॥ प्रभूतैधोदके ग्रामे यत्रात्माधीनं प्रयमणं तत्र वासो धार्म्यो ब्राह्मणस्य ॥२२॥ मूत्रं कृत्वा पुरीषं वा मूत्रपुरीषलेपानन्नलेपानुच्छिष्टलेपान्रेतसश्च ये लेपास्तान् प्रक्षाल्य पादौ चाचम्य प्रयतो भवति ॥२३॥

॥ इति पञ्चदशी खण्डिका ॥ प० १ प० ५ ख० १५ ॥

तिष्ठन्नाचामेत्प्रह्वो वा ॥१॥ आसीनस्त्रिराचामे-
द्धृदयङ्गमाभिरद्भिः ॥२॥ त्रिरोष्ठौ परिमृजेत् ॥३॥ द्वि-
रित्येके ॥४॥ सकृदुपस्पृशेत् ॥५॥ द्विरित्येके ॥६॥
दक्षिणेन पाणिना सव्यं प्रोक्ष्य पादौ शिरश्चेन्द्रियाणी-
त्युपस्पृशेत् चक्षुषी नासिके श्रोत्रे च ॥७॥ अथाप
उपस्पृशेत् ॥८॥ भोक्ष्यमाणस्तु प्रयतोऽपि द्विराचामेद्द्वि-
परिमृजेत्सकृदुपस्पृशेत् ॥९॥ श्वावान्तपर्यन्तावोष्ठावु-
पस्पृश्याचामेत् ॥१०॥ न श्मश्रुभिरुच्छिष्टो भवत्य-
न्तरास्ये सद्भिः ॥११॥ यावन्न हस्तेनोपस्पृशति ॥१२॥
य आस्याद्बिन्दवः पतन्त उपलभ्यन्ते तेष्वाचमनं वि-
हितम् ॥१३॥ ये भूमौ न तेष्वाचामेदित्येके ॥१४॥ स्व-
प्ने क्षवथौ शिङ्घाणिकाश्रवालम्भे लोहितस्य केशानामग्ने-
र्गवां ब्राह्मणस्य स्त्रियाश्चालम्भे महापथं च गत्वामेध्यं
चोपस्पृश्याप्रयतं च मनुष्यं नीवीं च परिधायाप उप-
स्पृशेत् ॥१५॥ आर्द्रं वा शकृदोषधीर्भूमिं वा ॥१६॥
हिंसार्थेनासिना मांसं छिन्नमभोज्यम् ॥१७॥ दद्भिर-
पूपस्य नापच्छिन्द्यात् ॥१८॥ यस्य कुले म्रियेत न तत्रा-
निर्दशे भोक्तव्यम् ॥१९॥ तथानुत्थितायां सूतिका-
याम् ॥२०॥ अन्तश्शवे च ॥२१॥ अप्रयतोपहतमन्न-
मप्रयतं न त्वभोज्यम् ॥२२॥ अप्रयतेन तु शूद्रेणोप-
हृतमभोज्यम् ॥२३॥ यस्मिंश्चान्ने केशस्स्यात् ॥२४॥

अन्यद्वा मेध्यम् ॥२५॥ अमेध्यैरवमृष्टम् ॥२६॥ कीटोऽमेध्यसेवी ॥२७॥ मूषिकलाङ्गं वा ॥२८॥ पदा वोपहतम् ॥२९॥ सिचा वा॥३०॥शुना वापपात्रेण वा दृष्टम् ॥३१॥ सिचा वोपहतम् ॥३२॥ दास्या वा नक्तमाहृतम् ॥३३॥

॥ इति षोडशी खण्डिका ( प्र० १ प० ५ ख० १६ ) ॥

भुञ्जानं वा यत्र शूद्र उपस्पृशेत् ॥१॥ अनर्हद्भिर्वा समानपङ्क्तौ॥२॥भुञ्जानेषु वा यत्रानूत्थायोच्छिष्टं प्रयच्छेदाचामेद्वा ॥३॥ कुत्सयित्वा वा यत्रान्नं दद्युः॥४॥ मनुष्यैरवघ्रातमन्यैर्वामेध्यैः ॥५॥ न नावि भुञ्जीत ॥६॥ तथा प्रासादे ॥७॥ कृतभूमौ तु भुञ्जीत॥८॥ अनाप्रीते मृन्मये भोक्तव्यम्॥९॥ आप्रीतं चेदभिदग्धे ॥१०॥परिमृष्टं लौहं प्रयतम् ॥११॥ निर्लिखितं दारुमयम् ॥१२॥ यथागमं यज्ञे ॥१३॥ नापणीयमन्नमश्नीयात् ॥१४॥ तथा रसानाममांसमधुलवणानीति परिहाप्य ॥१५॥ तैलसर्पिषी तूपयोजयेदुदकेऽवधाय॥१६॥कृतान्नं पर्युषितमखाद्यापेयानाद्यम्॥१७॥शुक्तं च॥१८॥ फाणितपृथुकतण्डुलकरम्बभरुजसक्तुशाकमांसपिष्टक्षीरविकारौषधिवनस्पतिमूलफलवर्जम् ॥ १९ ॥ शुक्तं चापरयोगम् ॥२०॥ सर्वं मद्यमपेयम्॥२१॥ त-

शैलूकं पयः ॥२२॥ उष्ट्रीक्षीरमृगीक्षीरसन्धिनीक्षीरयमसूक्षीराणीति ॥२३॥ धेनोश्चानिर्दशायाः ॥२४॥ तथा कीलालौषधीनां च ॥२५॥ कलञ्जपलाण्डुपरारीकाः ॥२६॥ यच्चान्यत्परिचक्षते ॥२७॥ क्याकुभोज्यमिति हि ब्राह्मणम् ॥२८॥ एकखुरोष्ट्रगवयग्रामसूकरशरभगवाम् ॥२९॥ धेन्वनडुहोर्भक्ष्यम् ॥३०॥ मेध्यमानडुहमिति वाजसनेयकम् ॥३१॥ कुक्कुटो विकिराणाम् ॥३२॥ प्लवः प्रतुदाम् ॥३३॥ क्रव्यादो हंसभासचक्रवाकसुपर्णाश्च कुञ्चक्रौञ्च वार्ध्राणसलक्ष्मणवर्जम् ॥३४॥ पञ्चनखानां गोधाकच्छपश्वाविट्छल्यकखड्गशशपूतिखषवर्जम् ॥३५॥ अभक्ष्यश्चेटो मत्स्यानाम् ॥३६॥ सर्पशीर्षी मृदुरः क्रव्यादो ये चान्ये विकृता यथा मनुष्यशिरसः ॥३७॥

॥ (इति सप्तदशी खण्डिका) ॥ (प्र० १ प० ५ ख० १७) ॥

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां प्रथमप्रश्ने पञ्चमः पटलः ॥ ५ ॥

मध्वामं मांसं मांसं भूमिर्मूलफलानि रक्षा गव्यूतिर्निवेशनं युग्यघासश्चोग्रतः प्रतिग्राह्याणि ॥१॥ एतान्यपि नानन्तेवास्याहृतानीति हारीतः ॥२॥ आमं वा गृह्णीरन् ॥३॥ कृतान्नस्य वा विरसस्य ॥४॥ न सुभिक्षाः स्युः ॥५॥ स्वयमप्यवृत्तौ सुवर्णं दत्वा पशुं वा भुञ्जीत ॥६॥ नात्यन्तमन्ववस्येत् ॥७॥ वृ-

त्तिं प्राप्य विरमेत् ॥ ८ ॥ त्रयाणां वर्णानां क्षत्रियप्रभृतीनां समावृत्तेन न भोक्तव्यं प्रकृत्या ब्राह्मणस्य भोक्तव्यम् ॥ ९ ॥ कारणादभोज्यम् ॥ १० ॥ यत्राप्रायश्चित्तं कर्मासेवते प्रायश्चित्तवति ॥ ११ ॥ चरितनिर्वेषस्य भोक्तव्यम् ॥ १२ ॥ सर्ववर्णानां स्वधर्मे वर्तमानानां भोक्तव्यं शूद्रवर्जमित्येके ॥ १३ ॥ तस्यापि धर्मोपनतस्य ॥ १४ ॥ सुवर्णं दत्वा पशुं वा भुञ्जीत नात्यन्तमन्ववस्येद्वृत्तिं प्राप्य विरमेत् ॥ १५ ॥ सङ्घान्नमभोज्यम् ॥ १६ ॥ परिक्रुष्टं च ॥ १७ ॥ सर्वेषां च शिल्पाजीवानाम् ॥ १८ ॥ ये च शस्त्रमाजीवन्ति ॥ १९ ॥ ये चाधिम् ॥ २० ॥ भिषक् ॥ २१ ॥ वार्धुषिकः ॥ २२ ॥ दीक्षितोऽक्रीतराजकः ॥ २३ ॥ अग्नीषोमीयसंस्थायामेव ॥ २४ ॥ हुतायां वा वपायां दीक्षितस्य भोक्तव्यम् ॥ २५ ॥ यज्ञार्थे वा निर्दिष्टे शेषान्भुञ्जीरन्निति हि ब्राह्मणम् ॥ २६ ॥ क्लीबः ॥ २७ ॥ राज्ञां प्रैषकरः ॥ २८ ॥ अहविर्याजी ॥ २९ ॥ चारी ॥ ३० ॥ अविधिना च प्रव्रजितः ॥ ३१ ॥ यश्चाग्नीनपास्यति ॥ ३२ ॥ यश्च सर्वान्वर्जयते सर्वान्नी च श्रोत्रियो निराकृतिर्वृषलीपतिः ॥ ३३ ॥

॥ (इति अष्टादशी खण्डिका ॥ (प० १ प० ६ ख० १८) ॥

मत्त उन्मत्तो बद्धोऽणिकः प्रत्युपविष्टो यश्च प्रत्युपवेशयते तावन्तं कालम् ॥ १ ॥ क आश्यान्नः ॥ २ ॥

य ईप्सेदिति कण्वः ॥३॥ पुण्य इति कौत्सः ॥ ४ ॥ यः कश्चिद्दद्यादिति वार्ष्यायणिः ॥ ५ ॥ यदि हि रजः स्थावरं पुरुषे भोक्तव्यमथ चेच्चलं दानेन निर्दोषो भवति ॥ ६ ॥ शुद्धा भिक्षा भोक्तव्यैककुणिकौ काण्वकुत्सौ तथा पुष्करसादिः ॥७॥ सर्वतोपेतं वार्ष्यायणीयम् ॥ ८ ॥ पुण्यस्येप्सतो भोक्तव्यम् ॥९॥ पुण्यस्याप्यनीप्सतो न भोक्तव्यम् ॥ १० ॥ यतःकुतश्चाभ्युद्यतं भोक्तव्यम् ॥११॥ नानियोगपूर्वमिति हारीतः ॥१२॥ अथ पुराणे श्लोकावुदाहरन्ति—उद्यतामाहृतां भिक्षां पुरस्तादप्रवेदिताम् । भोज्यां मेने प्रजापतिरपि दुष्कृतकारिणः ॥ न तस्य पितरोऽश्नन्ति दश वर्षाणि पञ्च च । न च हव्यं वहत्यग्निर्यस्तामभ्यधिमन्यते ॥ इति ॥१३॥ चिकित्सकस्य मृगयोश्शल्यकृन्तस्य पाशिनः । कुलटायाष्षण्डकस्य च तेषामन्नमनाद्यम् ॥१४॥ अथाप्युदाहरन्ति—अन्नादे भ्रूणहा मार्ष्टि अनेना अभिशंसति । स्तेनः प्रमुक्तो राजनि याचन्ननृतसङ्करे ॥ इति ॥१५॥

इति एकोनविंशतितमी खण्डिका प्र० १ प० ६ ख० १९

इति आपस्तम्बीयधर्मसूत्रेषु प्रथमप्रश्ने षष्ठः पटलः ॥ ६ ॥

—

नेमं लौकिकमर्थं पुरस्कृत्य धर्मांश्चरेत् ॥१॥ निष्फला ह्यभ्युदये भवन्ति ॥ २ ॥ तद्यथाम्रे फलार्थे नि

मित्ते छाया गन्ध इत्यनूत्पद्येते । एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते ॥३॥ नो चेदनूत्पद्यन्ते न धर्महानिर्भवति ॥४॥ अनसूयुर्दुर्भप्रलम्भः स्यात्कुहककशठनास्तिकबालवादेषु ॥५॥ न धर्माधर्मौ चरत आवं स्व इति न देवगन्धर्वा न पितर इत्याचक्षतेऽयं धर्मोऽयमधर्म इति ॥६॥ यं त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मो यं गर्हन्ते सोऽधर्मः ॥ ७ ॥ सर्वजनपदेष्वेकान्तसमाहितमार्याणां वृत्तं सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामदाम्भिकानां वृत्तसादृश्यं भजेत ॥८॥ एवमुभौ लोकावभिजयति ॥ ९ ॥ अविहिता ब्राह्मणस्य वणिज्या ॥१०॥ आपदि व्यवहरेत पण्यानामपण्यानि व्युदस्यन् ॥ ११ ॥ मनुष्यान्रसान्रागान्गन्धानन्नं चर्म गवां वशां श्लेष्मोदके तोक्मकिण्वे पिप्पलीमरीचे धान्यं मांसमायुधं सुकृताशां च ॥ १२॥ तिलतण्डुलांस्त्वेव धान्यस्य विशेषेण न विक्रीणीयात् ॥१३॥ अविहितश्चैतेषां मिथो विनिमयः ॥१४॥ अन्नेन चान्नस्य मनुष्याणां च मनुष्यै रसानां च रसैर्गन्धानां च गन्धैर्विद्यया च विद्यानाम् ॥ १५ ॥ अक्रीतपण्यैर्व्यवहरेत ॥१६॥

इति विंशतितमी खण्डिका ॥ प्र० १ प० ७ ख० २०

मुञ्जबल्बजैर्मूलफलैः ॥१॥ तृणकाष्ठैरविकृतैः ॥२॥ नात्यन्तमन्ववस्येत् ॥३॥ वृत्तिं प्राप्य विरमेत् ॥४॥ न पतितैः संव्यवहारो विद्यते ॥५॥ तथाऽपपात्रैः ॥६॥ अथ पतनीयानि ॥७॥ स्तेयमाभिशस्त्यं पुरुषवधो ब्रह्मोज्झं गर्भशातनं मातुः पितुरिति योनिसम्बन्धे सहापत्ये स्त्रीगमनं सुरापानमसंयोगसंयोगः ॥८॥ गुर्वीसखिं गुरुसखिं च गत्वान्यांश्च परतल्पान् ॥९॥ नागुरुतल्पे पततीत्येके ॥१०॥ अधर्माणां तु सततमाचारः ॥११॥ अथाशुचिकराणि ॥१२॥ शूद्रगमनमार्यस्त्रीणाम् ॥१३॥ प्रतिषिद्धानां मांसभक्षणम् ॥१४॥ शुनो मनुष्यस्य च कुक्कुटसूकराणां ग्राम्याणां क्रव्यादसाम् ॥१५॥ मनुष्याणां मूत्रपुरीषप्राशनम् ॥१६॥ शूद्रोच्छिष्टमपपात्रागमनं चार्याणाम् ॥१७॥ एतान्यपि पतनीयानीत्येके ॥१८॥ अतोऽन्यानि दोषवन्त्यशुचिकराणि भवन्ति ॥१९॥ दोषं बुद्ध्वा न पूर्वः परेभ्यः पतितस्य समाख्याने स्याद्वर्जयेत्त्वेनं धर्मेषु ॥२०॥

इति सप्तमी खण्डिका । (प्र० १ प० ७ खं० २१)

इति आपस्तम्बीयधर्मसूत्रेषु सप्तमः पटलः ॥ ७ ॥

ओं॰ अध्यात्मिकान्योगाननुतिष्ठेन्न्यायसंहिताननैश्चारिकान् ॥१॥ आत्मलाभान्न परं विद्यते ॥२॥ न

त्रात्मलाभीयाञ्छ्लोकानुदाहरिष्यामः ॥३॥ पूः प्राणिनः सर्व एव गुहाशयस्याहन्यमानस्य विकल्मषस्याचलं चलनिकेतं येऽनुतिष्ठन्ति तेऽमृताः ॥४॥ यदिदमिदिहेदिह लोके विषयमुच्यते विधूय कविरेतदनुतिष्ठेद्गुहाशयम् ॥५॥ आत्मन्नेवाहमलब्ध्वैतद्धितं सेवस्व नाहितम् । अथान्येषु प्रतीच्छामि साधुष्ठानमनपेक्षया । महान्तं तेजस्कायं सर्वत्र निहितं प्रभुम् ॥६॥ सर्वभूतेषु यो नित्यो विपश्चिदमृतो ध्रुवः । अनङ्गोऽशब्दोऽशरीरोऽस्पर्शश्च महाञ्छुचिः । स सर्वं परमा काष्ठा स वैषुवतं स वै वैभाजनं पुरम् ॥७॥ तं योऽनुतिष्ठेत्सर्वत्र प्राध्वं चास्य सदाचरेत् । दुर्दर्शं निपुणं युक्तो यः पश्येत्स मोदेत विष्टपे । इति ॥८॥

॥ (इति द्वाविंशतितमी खण्डिका ॥ (प्र० १ प० ८ खं० २२) ॥

आत्मन् पश्यन् सर्वभूतानि न मुह्येच्चिन्तयन् कविः । आत्मानं चैव सर्वत्र यः पश्येत्स वै ब्रह्मा नाकपृष्ठे विराजति ॥१॥ निपुणोऽणीयान् बिसोर्णाया यस्सर्वमावृत्य तिष्ठति । वर्षीयांश्च पृथिव्या ध्रुवः सर्वमारभ्य तिष्ठति । स इन्द्रियैर्जगतोऽस्य ज्ञानादन्योऽनन्यस्य ज्ञेयात्परमेष्ठी विभाजः । तस्मात्कायाः प्रभवन्ति सर्वे स मूलं शाश्वतिकः स नित्यः ॥२॥ दोषाणां

तु निर्घातो योगमूल इह जीविते । निर्हृत्य भूतदाहीयान् क्षेमं गच्छति पण्डितः ॥३॥ अथ भूतदाहीयान्दोषानुदाहरिष्यामः ॥४॥ क्रोधो हर्षो रोषो लोभो मोहो दम्भो द्रोहो मृषोद्यमत्याशपरीवादावसूया काममन्यू अनात्म्यमयोगस्तेषां योगमूलो निर्घातः ॥५॥ अक्रोधोऽहर्षोऽरोषोऽलोभोऽमोहोऽदम्भोऽद्रोहः सत्यवचनमनत्याशोऽपैशुनमनसूया संविभागस्त्याग आर्जवं मार्दवं शमो दमः सर्वभूतैरविरोधो योग आर्यमानृशंस्यं तुष्टिरिति सर्वाश्रमाणां समयपदानि तान्यनुतिष्ठन्विधिना सार्वगामी भवति ॥६॥

॥ इति त्रयोविंशतितमी खण्डिका (प्र० १ प० ८ ख० २३) ॥

इति चापस्तम्बधर्मसूत्रे प्रथमप्रश्ने अष्टमः पटलः ॥ ८ ॥

क्षत्रियं हत्वा गवां सहस्रं वैरयातनार्थं दद्यात् ॥१॥ शतं वैश्ये ॥२॥ दश शूद्रे ॥३॥ ऋषभश्चात्राधिकः सर्वत्र प्रायश्चित्तार्थः ॥४॥ स्त्रीषु चैतेषामेवम् ॥५॥ पूर्वयोर्वर्णयोर्वेदाध्यायं हत्वा सवनगतं वाभिशस्तः ॥६॥ ब्राह्मणमात्रं च ॥७॥ गर्भं च तस्याविज्ञातम् ॥८॥ आत्रेयीं च स्त्रियम् ॥९॥ तस्य निर्वेषः ॥१०॥ आरण्यके कुटिं कृत्वा वाग्यतः शवशिरोध्वजोऽर्धशाणीपक्षमधोनाभ्युपरिजान्वाच्छाद्य ॥११॥ तस्य पन्था अन्त

रा वर्त्मनि ॥१२॥ दृष्ट्वा चान्यमुत्क्रामेत् ॥१३॥ खण्डेन लोहितकेन शरावेण ग्रामे प्रतिष्ठेत ॥१४॥ कोऽभिशस्ताय भिक्षामिति सप्तागाराणि चरेत् ॥१५॥ सा वृत्तिः ॥१६॥ अलब्धोपवासः ॥१७॥ गाश्च रक्षेत् ॥१८॥ तासां निष्क्रमणप्रवेशने द्वितीयो ग्रामेऽर्थः ॥१९॥ द्वादश वर्षाणि व्रतमेतच्चरित्वा सिद्धः सद्भिः सम्प्रयोगः ॥२०॥ आजिपथे वा कुटिं कृत्वा ब्राह्मणगव्योऽपजिगीषमाणो वसेत्त्रिः प्रतिराद्धोऽपजित्य वा मुक्तः ॥२१॥ आश्वमेधिकं वावभृथमवेत्य मुच्यते ॥२२॥ धर्मार्थसन्निपातेऽर्थग्राहिण एतदेव ॥२३॥ गुरुं हत्वा श्रोत्रियं वा कर्मसमाप्तमेतेनैव विधिनोत्तमादुच्छ्वासाच्चरेत् ॥२४॥ नास्यास्मिँल्लोके प्रत्यापत्तिर्विद्यते कल्मषं तु निर्हण्यते ॥२५॥

॥ (इति चतुर्विंशतितमी खण्डिका) ॥ (प्र० १ प० ९ ख० २४) ॥

गुरुतल्पगामी सवृषणं शिश्नं परिवास्याञ्जलावाधाय दक्षिणां दिशमनावृत्तिं व्रजेत् ॥१॥ ज्वलितां वा सूर्मिं परिष्वज्य समाप्नुयात् ॥२॥ सुरापोऽग्निस्पर्शां सुरां पिबेत् ॥३॥ स्तेनः प्रकीर्णकेशोंऽसे मुसलमाधाय राजानं गत्वा कर्माचक्षीत । तेनैनं हन्याद्वधे मोक्षः ॥४॥ अनुज्ञातेऽनुज्ञातारमेन

स्पृशेति ॥५॥ अग्निं वा प्रविशेत् ॥६॥ तीक्ष्णं वा तप आयच्छेत् ॥७॥ भक्तापचयेन वात्मानं समाप्नुयात् ॥८॥ कृच्छ्रसंवत्सरं वा चरेत् ॥९॥ अथाप्युदाहरन्ति ॥१०॥ स्तेयं कृत्वा सुरां पीत्वा गुरुदारं च गत्वा ब्रह्महत्यामकृत्वा । चतुर्थकाला मितभोजिनः स्युरपोऽभ्युपेयुः सवनानुकल्पम् । स्थानासनाभ्यां विहरन्त एते त्रिभिर्वर्षैरपपापं नुदन्ते ॥११॥ प्रथमं वर्णं परिहाप्य प्रथमं वर्णं हत्वा संग्रामं गत्वावतिष्ठेत तत्रैनं हन्युः ॥१२॥ अपि वा लोमानि त्वचं मांसमिति हावयित्वाग्निं प्रविशेत् ॥१३॥ वायसप्रचलाकबर्हिणचक्रवाकहंसभासमण्डूकनकुलडेरिकाश्वहिंसायां शूद्रवत्प्रायश्चित्तम् ॥१४॥

॥ इति पञ्चविंशतितमी खण्डिका ॥ (प्र० १ प० ९ ख० २५) ॥

धेन्वनडुहोश्चाकारणात् ॥१॥ धुर्यवाहप्रवृत्तौ चेतरेषां प्राणिनाम् ॥२॥ अनाक्रोश्यमाक्रुश्यानृतं वोक्त्वा त्रिरात्रमक्षीराक्षारालवणभोजनम् ॥३॥ शूद्रस्य सप्तरात्रमभोजनम् ॥४॥ स्त्रीणां चैवम् ॥५॥ येष्वाभिशस्त्यं तेषामेकाङ्गं छित्त्वाप्राणहिंसायाम् ॥६॥ अनार्यपैशुनप्रतिषिद्धाचारेष्वभक्ष्याभोज्यापेयप्राशने । शूद्रायां च रेतः सिक्त्वा योनौ च दोषवति कर्मा-

भिसन्धिपूर्वं कृत्वानभिसन्धिपूर्वं वाब्लिङ्गाभिरप उपस्पृशेद्वारुणीभिरन्यैर्वा पवित्रमन्त्रैर्यथा कर्माभ्यासः ॥७॥ गर्दभेनावकीर्णी निर्ऋतिं पाकयज्ञेन यजेत ॥८॥ तस्य शूद्रः प्राश्नीयात् ॥९॥ मिथ्याधीतप्रायश्चित्तम् ॥१०॥ संवत्सरमाचार्यहिते वर्तमानो वाचं यच्छेत्स्वाध्याय एवोत्सृजमानो वाचमाचार्य आचार्यदारे वा भिक्षाचर्ये च ॥११॥ एवमन्येष्वपि दोषवत्स्वपतनीयेषूत्तराणि यानि वक्ष्यामः ॥१२॥ काममन्युभ्यां वा जुहुयात्कामोऽकार्षीन्मन्युरकार्षीदिति ॥१३॥ जपेद्वा ॥१४॥ पर्वणि वा तिलभक्ष उपोष्य वा श्वोभूत उदकमुपस्पृश्य सावित्रीं प्राणायामशस्सहस्रकृत्व आवर्तयेदप्राणायामशो वा ॥१५॥

॥ इति पञ्चविंशतितमी खण्डिका ॥ प्र० १ प० ९ ख० २६ ॥

श्रावण्यां पौर्णमास्यां तिलभक्ष उपोष्य श्वो वा भूते महानदमुदकमुपस्पृश्य सावित्र्या समित्सहस्रमादध्याज्जपेद्वा ॥१॥ इष्टियज्ञक्रतून्वा पवित्रार्थानाहरेत् ॥२॥ अभोज्यं भुक्त्वा नैष्पुरीष्यम् ॥३॥ तत्सप्तरात्रेणावाप्यते ॥४॥ हेमन्तशिशिरयोर्वोभयोस्सन्ध्योर्वोदकमुपस्पृशेत् ॥५॥ कृच्छ्रद्वादशरात्रं वा चरेत् ॥६॥ त्र्यहमनक्ताश्यदिवाशी ततस्त्र्यहं त्र्यहमयाचि-

तद्व्रतस्त्र्यहं नाश्नाति किंचनेति कृच्छ्रद्वादशरात्रस्य विधिः ॥७॥ एतमेवाभ्यस्येत्संवत्सरं स कृच्छ्रसंवत्सरः ॥८॥ अथापरं बह्वन्यमपपतनीयानि कृत्वा त्रिभिरनश्नत्पारायणैः कृतप्रायश्चित्तो भवति ॥९॥ अनार्यां शयने बिभ्रद्ददद्वृद्धिं कषायपः । अब्राह्मण इव वन्दित्वा तृणेष्वासीत पृष्ठतः ॥१०॥ यदेकरात्रेण करोति पापं कृष्णं वर्णं ब्राह्मणः सेवमानश्चतुर्थकाल उदकाभ्यवायी त्रिभिर्वर्षैस्तदपहन्ति पापम् ॥११॥

॥ इति सप्तविंशतितमी खण्डिका ॥ प्र० १ प० ९ ख० २७ ॥

॥ इति चापस्तम्बधर्मसूत्रेषु प्रथमप्रश्ने नवमः पटलः ॥९॥

---

यथा कथा च परपरिग्रहमभिमन्यते स्तेनो ह भवतीति कौत्सहारीतौ तथा कण्वपुष्करसादी ॥१॥ सन्त्यपवादाः परपरिग्रहेष्विति वार्ष्यायणिः ॥२॥ शम्योषा युग्यघासो न स्वामिनः प्रतिषेधयन्ति ॥३॥ अतिव्यवहारो व्यृद्धो भवति ॥४॥ सर्वत्रानुमतिपूर्वमिति हारीतः ॥५॥ न पतितमाचार्यं ज्ञातिं वा दर्शनार्थो गच्छेत ॥६॥ न चास्माद्भोगानुपयुञ्जीत ॥७॥ यदृच्छासंनिपात उपसंगृह्य तूष्णीं व्यतिव्रजेत ॥८॥ माता पुत्रत्वस्य भूयांसि कर्माण्यारभते तस्यां शुश्रूषा

नित्यां पतितायामपि ॥९॥ न तु धर्मसन्निवापः स्यात् ॥१०॥ अधर्माहृतान्भोगाननुज्ञाय न वयं चाधर्मश्चेत्यभिव्याहृत्याधोनाभ्युपरिजान्वाच्छाद्य त्रिषवणमुदकमुपस्पृशन्नक्षीराक्षारलवणं भुञ्जानो द्वादश वर्षाणि नागारं प्रविशेत् ॥११॥ ततः सिद्धिः ॥१२॥ अथ सम्प्रयोगस्स्यादार्यैः ॥१३॥ एतदेवान्येषामपि पतनीयानाम् ॥१४॥ गुरुतल्पगामी तु सुषिरां सूर्मिं प्रविश्योभयत आदीप्याभिदहेदात्मानम् ॥१५॥ मिथ्यैतादिति हारीतः ॥१६॥ यो ह्यात्मानं परं वाभिमन्यतेऽभिशस्त एव स भवति ॥१७॥ एतेनैव विधिनोत्तमादुच्छ्वासाच्चरेन्नास्यास्मिँल्लोके प्रत्यापत्तिर्विद्यते कल्मषं तु निर्हण्यते ॥१८॥ दारव्यतिक्रमी खराजिनं बहिर्लोम परिधाय दारव्यतिक्रमिणे भिक्षामिति सप्तागाराणि चरेत् । सा वृत्तिः षण्मासान् ॥१९॥ स्त्रियास्तु भर्तृ(र्तु)व्यतिक्रमे कृच्छ्रद्वादशरात्राभ्यासस्तावन्तं कालम् ॥२०॥

॥ इति अष्टाविंशतितमी खण्डिका । (प्र० १ प० १० ख० २८ ॥)

अथ भ्रूणहा श्वाजिनं खराजिनं वा बहिर्लोम परिधाय पुरुषशिरः प्रतीपानार्थमादाय खट्वाङ्गं दण्डार्थे कर्मनामधेयं प्रब्रुवाणश्चङ्क्रमेत को भ्रूणघ्ने

भिक्षामिति । ग्रामे प्राणवृत्तिं प्रतिलभ्य शून्यागारं वृक्षमूलं वाभ्युपाश्रयेन्न हि म आर्यैः सम्प्रयोगो विद्यते ॥१॥ एतेनैवोत्तमादुच्छ्वासाच्चरेत् नास्यास्मिँल्लोके प्रत्यापत्तिर्विद्यते । कल्मषं तु निर्हण्यते ॥२॥ यः प्रमत्तो हन्ति प्राप्तं दोषफलम् ॥३॥ सह सङ्कल्पेन भूयः ॥४॥ एवमन्येष्वपि दोषवत्सु कर्मसु ॥५॥ तथा पुण्यक्रियासु ॥६॥ परीक्षार्थोऽपि ब्राह्मण आयुधं नाददीत ॥७॥ यो हिंसार्थमभिक्रान्तं हन्ति मन्युरेव मन्युं स्पृशति न तस्मिन् दोष इति पुराणे ॥८॥ अथाभिशस्ताः समवसाय चरेयुर्धार्म्यमिति सांशित्येतरेतरयाजका इतरेतराध्यापका मिथो विवहमानाः ॥९॥ पुत्रान् सन्निष्पाद्य ब्रूयुर्विप्रव्रजतास्मदेवं ह्यस्मत्स्वार्याः सम्प्रत्यपत्स्यतेति ॥१०॥ अथापि न सेन्द्रियः पततीति ॥११॥ तदेतेन वेदितव्यमङ्गहीनो हि साङ्गं जनयतीति ॥१२॥ मिथ्यैतदिति हारीतः ॥१३॥ दधिधानीसधर्मा स्त्री भवति ॥१४॥ यो हि दधिधान्यामप्रयतं पय आतच्य मन्थति न तेन धर्मकृत्यं क्रियत एवमशुचि शुक्लं यन्निवर्तते न तेन सह सम्प्रयोगो विद्यते ॥१५॥ अभिचारानुव्याहारावशुचिकरावपतनीयौ ॥१६॥ पतनीयाविति हारीतः ॥१७॥ पतनीयवृत्तिस्त्वशुचिकराणां द्वादशमासान्

द्वादशार्धमासान् द्वादश द्वादशाहान् द्वादश सप्ताहान् द्वादश त्र्यहान् द्वादशाहं सप्ताहं त्र्यहमेकाहम् ॥१८॥ इत्यशुचिकरनिर्वेषो यथा कर्माभ्यासः ॥१९॥

॥ इति एकोनत्रिंशत्तमी खण्डिका । (प्र० १ प० १० ख० २९ ॥)

इति आपस्तम्बधर्मसूत्रे प्रथमप्रश्ने दशमः पटलः ॥१०॥

विद्यया स्नातीत्येके ॥१॥ अथाव्रतेनाष्टाचत्वारिंशत्परीमाणेन ॥२॥ विद्याव्रतेनं चेत्येके ॥३॥ तेषु सर्वेषु स्नातकवद्वृत्तिः ॥४॥ समाधिविशेषाच्छ्रुतिविशेषाच्च पूजायां फलविशेषः ॥५॥ अथ स्नातकव्रतानि ॥६॥ पूर्वेण ग्रामान्निष्क्रमणप्रवेशनानि शीलयेदुत्तरेण वा ॥७॥ सन्ध्योश्च बहिर्ग्रामादासनं वाग्यतश्च ॥८॥ विप्रतिषेधे श्रुतिलक्षणं बलीयः ॥९॥ सर्वान्रागान्वाससि वर्जयेत् ॥१०॥ कृष्णं च स्वाभाविकम् ॥११॥ अनूद्भासि वासो वसीत ॥१२॥ अप्रतिकृष्टं च शक्तिविषये ॥१३॥ दिवा च शिरसः प्रावरणं वर्जयेन्मूत्रपुरीषयोः कर्म परिहाप्य ॥१४॥ शिरस्तु प्रावृत्य मूत्रपुरीषे कुर्यात् भूम्यां किञ्चिदन्तर्धाय ॥१५॥ छायायां मूत्रपुरीषयोः कर्म वर्जयेत् ॥१६॥ स्वां तु छायामवमेहेत ॥१७॥ न सोपानन्मूत्रपुरीषे

कुर्वीत् ॥१८॥ कृष्टे ॥१९॥ पथि ॥२०॥ अप्सु च ॥२१॥ तथा ष्ठेवनमैथुनयोः ॥२२॥ कर्माप्सु वर्जयेत् ॥२३॥ अग्निम् ॥२४॥ आदित्यम् ॥२५॥ अपः ॥२६॥ ब्राह्मणम् ॥२७॥ गां देवताश्च ॥२८॥ अभिमुखो मूत्रपुरीषयोः कर्म वर्जयेत् ॥२९॥ अश्मानं लोष्टमार्द्रानोषधिवनस्पतीनूर्ध्वानाच्छिद्य मूत्रपुरीषयोः शुन्धने वर्जयेत् ॥३०॥ अग्निमादित्यमपो ब्राह्मणं गा देवता द्वारं प्रति पादं च शक्तिविषये नाभिप्रसारयीत ॥३१॥ अथाप्युदाहरन्ति ॥३२॥

॥ इति त्रिंशत्तमी खण्डिका ॥ (प्र० १ प० ११ ख० ३० ॥)

प्राङ्मुखोऽन्नानि भुञ्जीतोच्चरेद्दक्षिणामुख उदङ्मुखो मूत्रं कुर्यात्प्रत्यक्पादावनेजनमिति ॥१॥ आराच्चावसथान्मूत्रपुरीषे कुर्याद्दक्षिणां दिशं दक्षिणापरां वा ॥२॥ अस्तमिते च बहिर्ग्रामादारादावसथाद्वा मूत्रपुरीषयोः कर्म वर्जयेत् ॥३॥ देवताभिधानं चाप्रयतः ॥४॥ पुरुषं चोभयोर्देवतानां राज्ञश्च ॥५॥ ब्राह्मणस्य गोरिति पदोपस्पर्शनं वर्जयेत् ॥६॥ हस्तेन चाकारणात् ॥७॥ गोर्दक्षिणानां कुमार्याश्च परीवादान्वर्जयेत् ॥८॥ स्तृहतीं च गां नाचक्षीत ॥९॥ संसृष्टां च वत्सेनानिमित्ते ॥१०॥ नाधेनुमधेनुरिति ब्रूयात् ॥११॥

धेनूभव्येत्येव ब्रूयात् ॥१२॥ न भद्रं भद्रमिति ब्रूयात् ॥१३॥ पुण्यं प्रशस्तमित्येवं ब्रूयात् ॥१४॥ वत्सतन्तीं च नोपरिगच्छेत् ॥१५॥ प्रेङ्खावन्तरेण च नातीयात् ॥१६॥ नासौ मे सपत्न इति ब्रूयाद्यदसौ मे सपत्न इति ब्रूयाद्द्विषन्तं भ्रातृव्यं जनयेत् ॥१७॥ नेन्द्रधनुरिति परस्मै प्रब्रूयात् ॥१८॥ न पततः सञ्चक्षीत ॥१९॥ उद्यन्तमस्तं यन्तं चादित्यं दर्शने वर्जयेत् ॥२०॥ दिवादित्यः सत्त्वानि गोपायति नक्तं चन्द्रमास्तस्मादमावास्यायां निशायां स्वाधीय आत्मनो गुप्तिमिच्छेत् प्रायत्यब्रह्मचर्यकालेचर्ययें च ॥२१॥ सह ह्येतां रात्रिं सूर्याचन्द्रमसौ वसतः ॥२२॥ न कुसृत्या ग्रामं प्रविशेत् ॥२३॥ यदि प्रविशेन्नमो रुद्राय वास्तोष्पतय इत्येतामृचं जपेदन्यां वा रौद्रीम् ॥२४॥ नाब्राह्मणायोच्छिष्टं प्रयच्छेत् ॥२५॥ यदि प्रयच्छेद्दन्तान्स्कुप्त्वा तस्मिन्नवधाय प्रयच्छेत् ॥२६॥ क्रोधादींश्च भूतदाहीयान्दोषान्वर्जयेत ॥२७॥

॥ (इति एकत्रिंशत्तमी खण्डिका) प्र० १ प० ११ ख० ३१ ॥

प्रवचनयुक्तो वर्षाशरदं मैथुनं वर्जयेत् ॥१॥ मिथुनीभूय च न तया सह सर्वां रात्रिं शयीत ॥२॥

शयामश्चाध्यापनं वर्जयेत् ॥३॥ न च तस्यां शय्या-
यामध्यापयेद्यस्यां शयीत ॥४॥ अनाविःस्त्रगनुलेप-
णस्स्यात् ॥५॥ सदा निशायां दारं प्रत्यलङ्कुर्वीत ॥
६॥ सशिरा वमज्जनमप्सु वर्जयेत् ॥७॥ अस्तमि-
ते च स्नानम् ॥८॥ पालाशमासनं पादुके दन्तप्रक्षा-
लनमिति च वर्जयेत् ॥९॥ स्तुतिं च गुरोस्समक्षं
यथा सुस्नातमिति ॥१०॥ आ निशाया जागरणम्
॥११॥ अनध्यायो निशायामन्यत्र धर्मोपदेशाच्छिष्ये-
भ्यः ॥१२॥ मनसा वा स्वयम् ॥१३॥ ऊर्ध्वमर्धरात्रा-
दध्यापनम् ॥१४॥ नापररात्रमुत्थायानध्याय इति सं-
विशेत् ॥१५॥ काममपाश्शयीत ॥१६॥ मनसा वाधी-
यीत ॥१७॥ क्षुद्रान् क्षुद्राचरितांश्च देशान्न सेवेत ॥
१८॥ सभास्समाजांश्च ॥१९॥ समाजं चेद्गच्छेत्प्रदक्षि-
णीकृत्यापेयात् ॥२०॥ नगरप्रवेशनानि च वर्जयेत् ॥
२१॥ प्रश्नं च न विब्रूयात् ॥२२॥ अथाप्युदाहरन्ति ॥
२३॥ मूलं तूलं वृहति दुर्विवक्तुः प्रजां पशूनायतनं
हिनस्ति। धर्मप्रह्रादन कुमालनाय रुदन् ह मृत्युर्व्यु-
वाच प्रश्नम्। इति ॥२४॥ गार्दभं यानमारोहणे वि-
षमारोहणावरोहणानि च वर्जयेत् ॥२५॥ बाहुभ्यां च
नदीतरणम् ॥२६॥ नावं च सांशयिकीम् ॥२७॥ तृण-

च्छेदनलोष्टविमर्दनष्ठेवनानि चाकारणात् ॥२८॥ यच्चान्यत्परिचक्षते यच्चान्यत्परिचक्षते ॥२९॥

॥ ( इति द्वात्रिंशत्तमी खण्डिका ) ॥ (प्र० १ प० ११ ख० ३२) ॥

॥ इति चापस्तम्बधर्मसूत्रवृत्तौ प्रथमप्रश्ने एकादशः पटलः ॥

॥ प्रथमप्रश्नश्च समाप्तः ॥

---

## ॥ द्वितीयप्रश्नप्रारम्भः ॥

---

पाणिग्रहणादधि गृहमेधिनोर्व्रतम् ॥१॥ कालयोर्भोजनम् ॥२॥ अतृप्तिश्चान्नस्य ॥३॥ पर्वसु चोभयोरुपवासः ॥४॥ औपवस्तमेव कालान्तरे भोजनम् ॥५॥ तृप्तिश्चान्नस्य ॥६॥ यच्चैनयोः प्रियं स्यात्तदेतस्मिन्नहनि भुञ्जीयाताम् ॥७॥ अधश्च शयीयाताम् ॥८॥ मैथुनवर्जनं च ॥९॥ श्वो भूते स्थालीपाकः ॥१०॥ तस्योपचारः पार्वणेन व्याख्यातः ॥

११॥ नित्यं लोक उपदिशन्ति ॥१२॥ यत्र क्व चा-
ग्निमुपसमाधास्यन् स्यात्तत्र प्राचीरुदीचीश्च तिस्र-
स्तिस्रो रेखा लिखित्वाद्भिरवोक्ष्याग्निमुपसमिन्ध्यात् ॥
१३॥ उत्सिच्यैतदुदकमुत्तरेण पूर्वेण वान्यदुपदध्यात्
॥१४॥ नित्यमुदधानान्यद्भिररिक्तानि स्युर्गृहमेधिनो
व्रतम् ॥१५॥ अहन्यसंवेशनम् ॥१६॥ ऋतौ च सन्निपातो
दारेणानुव्रतम् ॥१७॥ अन्तरालेऽपि दार एव ॥१८॥
ब्राह्मणवचनाच्च संवेशनम् ॥१९॥ स्त्रीवाससैव सन्नि-
पातस्स्यात् ॥२०॥ यावत्सन्निपातं चैव सहशय्या ॥
२१॥ ततो नाना ॥२२॥ उदकोपस्पर्शनम् ॥२३॥

इति प्रथमा खण्डिका ॥ प्र २ प १ खं०

अपि श्वा लेपान्प्रक्षाल्याचम्य प्रोक्षणमङ्गानाम् ॥१॥
सर्ववर्णानां स्वधर्मानुष्ठाने परमपरिमितं सुखम् ॥२॥
ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं वर्णं बलं
मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यते त-
च्चक्रवदुभयोर्लोकयोः सुख एव वर्तते ॥३॥ यथौषधि-
वनस्पतीनां बीजस्य क्षेत्रकर्मविशेषे फलपरिवृद्धिरेव-
म् ॥४॥ एतेन दोषफलपरिवृद्धिरुक्ता ॥५॥ स्तेनोऽ-
भिशस्तो ब्राह्मणो राजन्यो वैश्यो वा परस्मिँल्लोके
परिमिते निरये वृत्ते जायते चाण्डालो ब्राह्मणः पौ-

ल्कसो राजन्यो वैणो वैश्यः ॥६॥ एतेनान्य दोष-
फलैः कर्मभिः परिध्वंसा दोषफलासु योनिषु जाय-
न्ते वर्णपरिध्वंसायाम् ॥७॥ यथा चाण्डालोपस्पर्शने
सम्भाषायां दर्शने च दोषस्तत्र प्रायश्चित्तम् ॥८॥
अवगाहनमपामुपस्पर्शने सम्भाषायां ब्राह्मणसम्भा-
षा दर्शने ज्योतिषां दर्शनम् ॥९॥

॥ इति द्वितीया खण्डिका ॥ (प्र० २ प० १ ख० २) ॥

॥ इति चापस्तम्बीयधर्मसूत्रे द्वितीयप्रश्ने प्रथम पटल. ॥ १ ॥

आर्याः प्रयता वैश्वदेवेऽन्नसंस्कर्तारः स्युः ॥१॥
भाषां कासं क्षवथुमित्यभिमुखोऽन्नं वर्जयेत् ॥२॥ के-
शानङ्गं वासश्चालभ्याप उपस्पृशेत् ॥३॥ आर्याधिष्ठि-
ता वा शूद्राः संस्कर्तारः स्युः ॥४॥ तेषां स एवाचमन-
कल्पः ॥५॥ अधिकमहरहः केशश्मश्रुलोमनखवाप-
नम् ॥६॥ उदकोपस्पर्शनं च सह वाससा ॥७॥ अ-
पि वाष्टमीष्वेव पर्वसु वा वपेरन् ॥८॥ परोक्षमन्नं
संस्कृतमग्नावधिश्रित्याद्भिः प्रोक्षेत्तद्देवपवित्रमित्याचक्षते
॥९॥ सिद्धेऽन्ने तिष्ठन् भूतमिति स्वामिने प्रब्रूयात् ॥
१०॥ तत्सुभूतं विराडन्नं तन्मा क्षायीति प्रतिवचनः
॥११॥ गृहमेधिनो यदशनीयस्य होमा बलयश्च स्व-
र्गपुष्टिसंयुक्ताः ॥१२॥ तेषां मन्त्राणामुपयोगे द्वादशा-

हमधश्शय्या ब्रह्मचर्यं क्षारलवणवर्जनं च ॥१३॥ उत्तमस्यैकरात्रमुपवासः ॥ १४ ॥ बलीनां तस्य तस्य देशे संस्कारो हस्तेन परिमृज्यावोक्ष्य न्युप्य पश्चात्परिषेचनम् ॥१५॥ औपासने पचने वा षड्भिराद्यैः प्रतिमन्त्रं हस्तेन जुहुयात् ॥१६॥ उभयतः परिषेचनं यथा पुरस्तात् ॥ १७॥ एवं बलीनां देशेदेशे समवेतानां सकृत्सकृदन्ते परिषेचनम् ॥१८॥ सति सूपसंसृष्टेन कार्याः ॥ १९॥ अपरेणाग्निं सप्तमाष्टमाभ्यामुदगपवर्गम् ॥२०॥ उदधानसन्निधौ नवमेन ॥२१॥ मध्येऽगारस्य दशमैकादशाभ्यां प्रागपवर्गम् ॥२२॥ उत्तरपूर्वे देशेऽगारस्योत्तरैश्चतुर्भिः ॥२३॥

॥ इति तृतीया खण्डिका ॥ प्र २ प ४ ख ३ ॥

शय्यादेशे कामलिङ्गेन ॥१॥ देहल्यामन्तरिक्षलिङ्गेन ॥२॥ उत्तरेणापिधान्याम् ॥३॥ उत्तरैर्ब्रह्मसदने ॥४॥ दक्षिणतः पितृलिङ्गेन प्राचीनावीत्यवाचीनपाणिः कुर्यात् ॥५॥ रौद्र उत्तरो यथा देवताभ्यः ॥६॥ तयोर्नाना परिषेचनं धर्मभेदात् ॥७॥ नक्तमेवोत्तमेन वैहायसम् ॥८॥ य एतानव्यग्रो यथोपदेशं कुरुते नित्यः स्वर्गः पुष्टिश्च ॥९॥ अग्रं च देयम् ॥१०॥ अतिथीनेवाग्रे भोजयेत् ॥११॥ बालान्वृद्धान्रोगसम्बन्धान्स्त्रीश्चान्तर्वत्नीः ॥१२॥ काले स्वामिनावन्नार्थिनं न प्रत्याचक्षी-

ल्कसो राजन्यो वैणो वैश्यः ॥६॥ एतेनान्ये दोषफलैः कर्मभिः परिध्वंसा दोषफलासु योनिषु जायन्ते वर्णपरिध्वंसायाम् ॥७॥ यथा चाण्डालोपस्पर्शने सम्भाषायां दर्शने च दोषस्तत्र प्रायश्चित्तम् ॥८॥ अवगाहनमपामुपस्पर्शने सम्भाषायां ब्राह्मणसम्भाषा दर्शने ज्योतिषां दर्शनम् ॥९॥

॥ इति द्वितीया खण्डिका ॥ प्र० २ प० १ ख० २ ॥

॥ इति चापस्तम्बीयधर्मसूत्रे द्वितीयप्रश्ने प्रथमः पटलः ॥ १ ॥

आर्याः प्रयता वैश्वदेवेऽन्नसंस्कर्तारः स्युः ॥१॥ भाषां कासं क्षवथुमित्यभिमुखोऽन्नं वर्जयेत् ॥२॥ केशानङ्गं वासश्चालभ्याप उपस्पृशेत् ॥३॥ आर्याधिष्ठिता वा शूद्राः संस्कर्तारः स्युः ॥४॥ तेषां स एवाचमनकल्पः ॥५॥ अधिकमहरहः केशश्मश्रुलोमनखवापनम् ॥६॥ उदकोपस्पर्शनं च सह वाससा ॥७॥ अपि वाष्टमीष्वेव पर्वसु वा वपेरन् ॥८॥ परोक्षमन्नं संस्कृतमग्नावधिश्रित्याद्भिः प्रोक्षेत्तद्देवपवित्रमित्याचक्षते ॥९॥ सिद्धेऽन्ने तिष्ठन् भूतमिति स्वामिने प्रब्रूयात् ॥१०॥ तत्सुभूतं विराडन्नं तन्मा क्षायीति प्रतिवचनः ॥११॥ गृहमेधिनो यदशनीयस्य होमा बलयश्च स्वर्गपुष्टिसंयुक्ताः ॥१२॥ तेषां मन्त्राणामुपयोगे द्वादशा-

ह्मधश्शय्या ब्रह्मचर्यं क्षारलवणवर्जनं च ॥१३॥ उत्तमस्यैकरात्रमुपवासः ॥ १४ ॥ बलीनां तस्य तस्य देशे संस्कारो हस्तेन परिमृज्यावोक्ष्य न्युप्य पश्चात्परिषेचनम् ॥१५॥ औपासने पचने वा षड्भिराद्यैः प्रतिमन्त्रं हस्तेन जुहुयात् ॥१६॥ उभयतः परिषेचनं यथा पुरस्तात् ॥१७॥ एवं बलीनां देशेदेशे समवेतानां सकृत्सकृदन्ते परिषेचनम् ॥१८॥ सति सूपसंसृष्टेन कार्याः ॥१९॥ अपरेणाग्निं सप्तमाष्टमाभ्यामुदगपवर्गम् ॥२०॥ उदधानसन्निधौ नवमेन ॥२१॥ मध्येऽगारस्य दशमैकादशाभ्यां प्रागपवर्गम् ॥२२॥ उत्तरपूर्वे देशेऽगारस्योत्तरैश्चतुर्भिः ॥२३॥

॥ इति तृतीया खण्डिका ॥ प्र० २ प० २ ख० ३

शय्यादेशे कामलिङ्गेन ॥१॥ देहल्यामन्तरिक्षलिङ्गेन ॥२॥ उत्तरेणापिधान्याम् ॥३॥ उत्तरैर्ब्रह्मसदने ॥४॥ दक्षिणतः पितृलिङ्गेन प्राचीनावीत्यवाचीनपाणिः कुर्यात् ॥५॥ रौद्र उत्तरो यथा देवताभ्यः ॥६॥ तयोर्नाना परिषेचनं धर्मभेदात् ॥७॥ नक्तमेवोत्तमेन वैहायसम् ॥८॥ य एतानव्यग्रो यथोपदेशं कुरुते नित्यः स्वर्गः पुष्टिश्च ॥९॥ अग्रं च देयम् ॥१०॥ अतिथीनेवाग्रे भोजयेत् ॥११॥ बालान्वृद्धान्रोगसम्बन्धान्स्त्रीश्चान्तर्वत्नीः ॥१२॥ काले स्वामिनावन्नार्थिनं न प्रत्याचक्षी-

यातम् ॥१३॥ अभावे भूमिरुदकं तृणानि कल्याणी वागित्येतानि वै सतोऽगारे न क्षीयन्ते कदाचनेति ॥१४॥ एवंवृत्तावनन्तलोकौ भवतः ॥१५॥ ब्राह्मणायानधीयानायासनमुदकमन्नमिति देयं न प्रत्युत्तिष्ठेत् ॥१६॥ अभिवादनायैवोत्तिष्ठेदभिवाद्यश्चेत् ॥१७॥ राजन्यवैश्यौ च ॥१८॥ शूद्रमभ्यागतं कर्मणि नियुञ्ज्यात् ॥१९॥ अथास्मै दद्यात् ॥२०॥ दासा वा राजकुलादाहृत्यातिथिवच्छूद्रं पूजयेयुः ॥२१॥ नित्यमुत्तरं वासः कार्यम् ॥२२॥ अपि वा सूत्रमेवोपवीतार्थे ॥२३॥ यत्र भुज्यते तत्समूह्य निर्हृत्यावोक्ष्य तं देशममत्रेभ्यो लेपान् सङ्कृष्याद्भिः संसृज्योत्तरतः शुचौ देशे रुद्राय निनयेदेवं वास्तु शिवं भवति ॥२४॥ ब्राह्मण आचार्यः स्मर्यते तु ॥२५॥ आपदि ब्राह्मणेन राजन्ये वैश्ये वाध्ययनम् ॥२६॥ अनुगमनं च पश्चात् ॥२७॥ तत ऊर्ध्वं ब्राह्मण एवाग्रे गतौ स्यात् ॥२८॥

॥ इति चतुर्थी खण्डिका । प्र० २ प० २ ख० ४ ॥

सर्वविद्यानामप्युपनिषदामुपाकृत्यानध्ययनं तदहः ॥१॥ अधीत्य चाविप्रक्रमणं सद्यः ॥२॥ यदि त्वरेत गुरोः समीक्षायां स्वाध्यायमधीत्य कामं गच्छेदेवमुभयोः शिवं भवति ॥३॥ समावृत्तं चेदाचार्योऽभ्यागच्छेत्तमभिमुखोऽभ्यागम्य तस्योपसङ्ग्रहणं न

बीभत्समान उदकमुपस्पृशेत् पुरस्कृत्यापस्थाप्य यथोपदेशं पूजयेत् ॥४॥ आसने शयने भक्ष्ये भोज्ये वाससि वा संनिहिते निहीनतरवृत्तिः स्यात् ॥५॥ तिष्ठन् सव्येन पाणिनानुगृह्याचार्यमाचामयेत् ॥६॥ अन्यं वा समुदेतम् ॥७॥ स्थानगमनचङ्क्रमणस्मितेष्वनुचिकीर्षन् ॥८॥ संनिहिते मूत्रपुरीषवातकर्मोच्चैर्भाषाहासष्ठीवनदन्तस्कवननिःशृङ्खणभ्रूक्षेपणतालननिष्ठ्यानीति ॥९॥ दारे प्रजायां चोपस्पर्शनभाषाविस्रम्भपूर्वाः परिवर्जयेत् ॥१०॥ वाक्येन वाक्यस्य प्रतिघातमाचार्यस्य वर्जयेच्छ्रेयसां च ॥११॥ सर्वभूतपरीवादाक्रोशांश्च ॥१२॥ विद्यया च विद्यानाम् ॥१३॥ यया विद्यया न विरोचेत पुनराचार्यमुपेत्य नियमेन साधयेत् ॥१४॥ उपाकरणाद्योत्सर्जनादध्यापयितुर्नियमो लोमसंहरणं मांसं श्राद्धं मैथुनमिति वर्जयेत् ॥१५॥ ऋत्वे वा जायाम् ॥१६॥ यथागमं शिष्येभ्यो विद्यासम्प्रदाने नियमेषु च युक्तः स्यादेवं वर्तमानः पूर्वापरान् सम्बन्धानात्मानं च क्षेमे युनक्ति ॥१७॥ मनसा वाचा प्राणेन चक्षुषा श्रोत्रेण त्वक्शिश्नोदरारम्भणानामावारान् परीवृञ्जानोऽमृतत्वाय कल्पते ॥१८॥

इति पञ्चमी खण्डिका ॥ (प्र० २ प० २ ख० ५)

॥ इत्यापस्तम्बधर्मसूत्रे द्वितीयप्रश्ने द्वितीयः पटलः ॥२॥

उन्मत्ताचारसंशये धर्मार्थमागतमग्निमुपसमाधाय जातिमाचारं च पृच्छेत ॥१॥ साधुतां चेत्प्रतिजानीतेऽग्निरुपद्रष्टा वायुरुपश्रोताऽऽदित्योऽनुख्याता साधुतां चेत्प्रतिजानीते साध्वस्मा अस्तु वितथ एष एनस इत्युक्त्वा शास्तुं प्रतिपद्येत ॥२॥ अग्निरिव ज्वलन्नतिथिरभ्यागच्छति ॥३॥ धर्मेण वेदानामेकैकां शाखामधीत्य श्रोत्रियो भवति ॥४॥ स्वधर्मयुक्तं कुटुम्बिनमभ्यागच्छति धर्मपुरस्कारो नान्यप्रयोजनः सोऽतिथिर्भवति ॥५॥ तस्य पूजायां शान्तिः स्वर्गश्च ॥६॥ तमभिमुखोऽभ्यागम्य यथावयस्समेत्य तस्यासनमाहारयेत् ॥७॥ शक्तिविषये नाबहुपादमासनं भवतीत्येके ॥८॥ तस्य पादौ प्रक्षालयेच्छूद्रमिथुनावित्येके ॥९॥ अन्यतरोऽभिषेचने स्यात् ॥१०॥ तस्योदकमाहारयेन्मृण्मयेनेत्येके ॥११॥ नोदकमाहारयेदसमावृत्तः ॥१२॥ अध्ययनसंवृत्तिश्चात्राधिका ॥१३॥ सान्त्वयित्वा तर्पयेद्रसैर्भक्ष्यैरद्भिरवराध्र्येनेति ॥१४॥ आवसथं दद्यादुपरिशय्यामुपस्तरणमुपधानं सावस्तरणमभ्यञ्जनं चेति ॥१५॥ अन्नसंस्कर्तारमाहूय व्रीहीन् यवान्वा तदर्थान्निर्वपेत ॥१६॥ उद्धृतान्यन्नान्यवेक्षेतेदं भूया३ इदा३मिति ॥१७॥ भूय उद्धरेत्येव ब्रूयात् ॥१८॥ द्विषन्द्विषतो वा नान्नमश्नीयाद्दोषेण वा मीमां-

समेतस्य मीमांसितस्य वा ॥ १९ ॥ पाप्मानं हि स तस्य भक्षयतीति विज्ञायते ॥२०॥

॥ (इति षष्ठी खण्डिका ॥ (प्र० २ प० ३ ख० ६) ॥

स एष प्राजापत्यः कुटुम्बिनो यज्ञो नित्यप्रततः ॥१॥ योऽतिथीनामग्निः स आहवनीयो यः कुटुम्बे स गार्हपत्यो यस्मिन्पच्यते सोऽन्वाहार्यपचनः ॥२॥ ऊर्जं पुष्टिं प्रजां पशूनिष्टापूर्तमिति गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ॥३॥ पय उपसेचनमन्नमग्निष्टोमसम्मितं सर्पिषोक्थ्यसम्मितं मधुनातिरात्रसम्मितं मांसेन द्वादशाहसम्मितमुदकेन प्रजावृद्धिरायुश्च ॥४॥ प्रियाप्रियाश्चातिथयः स्वर्गं लोकं गमयन्तीति विज्ञायते ॥५॥ स यत्प्रातर्मध्यंदिने सायमिति ददाति सवनान्येव तानि भवन्ति ॥६॥ यदनुतिष्ठत्युदवस्यत्येव तत् ॥७॥ यत्सान्त्वयति सा दक्षिणा प्रशंसा ॥८॥ यत्संसाधयति ते विष्णुक्रमाः ॥९॥ यदुपावर्तते सोऽवभृथः ॥१०॥ इति ब्राह्मणम् ॥११॥ राजानं चेदतिथिरभ्यागच्छेच्छ्रेयसीमस्मै पूजामात्मनः कारयेत् ॥१२॥ आहिताग्निं चेदतिथिरभ्यागच्छेत्स्वयमेनमभ्युदेत्य ब्रूयाद्व्रात्य क्वावात्सीरिति व्रात्योदकमिति व्रात्य तर्पयन्त्विति ॥१३॥ पुराग्निहोत्रस्य होमादुपांशु जपेद्व्रात्य

यथा ते मनस्तथास्त्विति व्रात्य यथा ते वशस्तथास्त्विति व्रात्य यथा ते प्रियं तथास्त्विति व्रात्य यथा ते निकामस्तथास्त्विति ॥१४॥ यस्योद्धृतेष्वहुतेष्वग्निष्वतिथिरभ्यागच्छेत्स्वयमेनमभ्युदेत्य ब्रूयात् व्रात्यातिसृज होष्यामीत्यतिसृष्टेन होतव्यमनतिसृष्टे चेज्जुहुयाद्दोषं ब्राह्मणमाह ॥१५॥ एकरात्रं चेदतिथीन्वासयेत्पार्थिवांल्लोकानभिजयति द्वितीययान्तरिक्ष्यांस्तृतीयया दिव्यांश्चतुर्थ्या परावतो लोकानपरिमिताभिरपरिमितांल्लोकानभिजयतीति विज्ञायते ॥१६॥ असमुदेतश्चेदतिथिर्ब्रुवाण आगच्छेदासनमुदकमन्नं श्रोत्रियाय ददामीत्येव दद्यादेवमस्य समृद्धं भवति ॥१७॥

॥ इति सप्तमी खण्डिका (प्र० २ प० ३ ख० ७) ॥

इति चापस्तम्बीयधर्मसूत्रेषु द्वितीयप्रश्ने तृतीयः पटलः ॥३॥

येन कृतावसथः स्यादतिथिर्न तं प्रत्युत्तिष्ठेत्प्रत्यवरोहेद्वा पुरस्ताच्चेदभिवादितः ॥१॥ शेषभोज्यतिथीनां स्यात ॥ २ ॥ न रसान् गृहे भुञ्जीतानवशेषमतिथिभ्यः ॥ ३ ॥ नात्मार्थमभिरूपमन्नं पाचयेत् ॥४॥ गोमधुपर्कार्हो वेदाध्यायः ॥ ५ ॥ आचार्य ऋत्विक्स्नातको राजा वा धर्मयुक्तः ॥ ६ ॥ आचार्यायर्त्विजे श्वशुराय राज्ञ इति परिसंवत्सरादुपतिष्ठद्भ्यो गौर्मधुपर्कश्च ॥७॥ दधिमधुसंसृष्टं मधुपर्कः पयो वा मधु-

संसृष्टम् ॥८॥ अभावे उदकम् ॥९॥ षडङ्गो वेदः ॥
१०॥ छन्दः कल्पो व्याकरणं ज्योतिषं निरुक्तं शीक्षा
छन्दोविचितिरिति ॥ ११ ॥ शब्दार्थारम्भाणां तु क-
र्मणां समाम्नायस्समाप्तौ वेदशब्दस्तत्र सङ्ख्या विप्रति-
षिद्धा ॥१२॥ अङ्गानां तु प्रधानैरव्यपदेश इति न्या-
यवित्समयः ॥१३॥ अतिथिं निराकृत्य यत्रगते भो-
जने स्मरेत्ततो विरम्योपोष्य ॥१४॥

॥ इति अष्टमी खण्डिका (प्र० २ प० २ ख० ८) ॥

श्वो भूते यथामनसं तर्पयित्वा संसाधयेत् ॥
१॥ यानवन्तमा यानात् ॥२॥ यावन्नानुनासीया-
दितरः ॥३॥ अपत्नीभार्यां सीम्नो निवर्तेत ॥४॥ स-
र्वान्वैश्वदेवे भागिनः कुर्वीता श्वचण्डालेभ्यः ॥५॥
नानर्हेभ्यो दद्यादित्येके ॥६॥ उपेतः स्त्रीणामनुपेत-
स्य चोच्छिष्टं वर्जयेत् ॥७॥ सर्वाण्युदकपूर्वाणि दा-
नानि ॥८॥ यथाश्रुति विहारे ॥९॥ ये नित्यभाक्ति-
कास्तेषामनुपरोधेन संविभागो विहितः ॥१०॥ का-
ममात्मानं भार्यां पुत्रं वोपरुन्ध्यान्न त्वेव दासकर्म-
करम् ॥११॥ तथा चात्मनोऽनुपरोधं कुर्याद्यथा कर्म-
सु समर्थस्स्यात् ॥१२॥ अथाप्युदाहरन्ति— 'अष्टौ
ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनः । द्वात्रिंशतं

गृहस्थस्यापरिमितं ब्रह्मचारिणः । आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः । अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नतामिति ॥१३॥

॥ इति नवमी खण्डिका । (प्र० २ प० ४ ख० ९ ॥)
इति चापस्तम्बधर्मसूत्रेषु द्वितीयप्रश्ने चतुर्थः पटलः ॥४॥

---

भिक्षणे निमित्तमाचार्यो विवाहो यज्ञो मातापित्रोर्बुभूर्षार्हतश्च नियमविलोपः ॥१॥ तत्र गुणान् समीक्ष्य यथाशक्ति देयम् ॥२॥ इन्द्रियप्रीत्यर्थस्य तु भिक्षणमनिमित्तम् ॥३॥ तस्मान्न तदाद्रियेत ॥४॥ स्वकर्म ब्राह्मणस्याध्ययनमध्यापनं यज्ञो याजनं दानं प्रतिग्रहणं दायाद्यं शिलोञ्छः ॥५॥ अन्यच्चापरिगृहीतम् ॥६॥ एतान्येव क्षत्रियस्याध्यापनयाजनप्रतिग्रहणानीति परिहाप्य दण्डयुद्धाधिकानि ॥७॥ क्षत्रियवद्वैश्यस्य दण्डयुद्धवर्जं कृषिगोरक्ष्यवाणिज्याधिकम् ॥८॥ नाननूचानमृत्विजं वृणीते न पणमाणम् ॥९॥ अयाज्योऽनधीयानः ॥१०॥ युद्धे तद्योगा यथोपायमुपादेशन्ति तथा प्रतिपत्तव्यम् ॥११॥ न्यस्तायुधप्रकीर्णकेशप्राञ्जलिपराङ्मवृत्तानामार्या वधं परिचक्षते ॥१२॥ शास्त्रैरधिगतानामिन्द्रियदौर्बल्याद्विप्रतिपन्नानां शास्ता निर्वेषमुपदिशेद्यथाकर्म यथोक्तम् ॥१३॥ तस्य चेच्छास्त्रमतिप्र-

वर्तेरन् ॥१४॥ राजानं गमयेत् ॥१५॥ राजा पुरोहितं धर्मार्थकुशलम् ॥१६॥ स ब्राह्मणान्नियुञ्ज्यात् ॥१७॥ बलविशेषेण वधदास्यवर्जं नियमैरुपशोषयेत् ॥१८॥

॥ इति दशमी खण्डिका ( प्र० २ प० ५ ख० १० ) ॥

इतरेषां वर्णानामाप्राणविप्रयोगात्समवेक्ष्य तेषां कर्माणि राजा दण्डं प्रणयेत् ॥१॥ न च सन्देहे दण्डं कुर्यात् ॥ २ ॥ सुविचितं विचित्या दैवप्रश्नेभ्यो राजा दण्डाय प्रतिपद्येत ॥३॥ एवंवृत्तो राजोभौ लोकावभिजयति ॥४॥ राज्ञः पन्था ब्राह्मणेनासमेत्य ॥ ५॥ समेत्य तु ब्राह्मणस्यैव पन्थाः ॥६॥ यानस्य भाराभिनिहितस्यातुरस्य स्त्रिया इति सर्वैर्दातव्यः ॥७॥ वर्णज्यायसां चेतरैर्वर्णैः ॥८॥ अशिष्टपतितमत्तोन्मत्तानामात्मस्वस्त्ययनार्थेन सर्वैरेव दातव्यः ॥९॥ धर्मचर्यया जघन्यो वर्णः पूर्वंपूर्वं वर्णमापद्यते जातिपरिवृत्तौ ॥१०॥ अधर्मचर्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ ॥ ११ ॥ धर्मप्रजासम्पन्ने दारे नान्यां कुर्वीत ॥१२॥ अन्यतराभावे कार्या प्रागग्न्याधेयात् ॥१३॥ आधाने हि सती कर्मभिस्सम्बध्यते येषामेतदङ्गम् ॥१४॥ सगोत्राय दुहितरं न प्रयच्छेत् ॥१५॥ मातुश्च योनिसम्बन्धेभ्यः ॥१६॥ ब्राह्मे

विवाहे बन्धुशीलश्रुतारोग्याणि बुध्वा प्रजां सहत्वक
र्मभ्यः प्रतिपादयेच्छक्तिविषयेणालंकृत्य ॥१७॥ आर्षे
दुहितृमते मिथुनौ गावौ देयौ ॥१८॥ दैवे यज्ञतन्त्र
ऋत्विजे प्रतिपादयेत् ॥१९॥ मिथः कामात्सांवर्तेते स
गान्धर्वः ॥२०॥

॥ इति एकादशी खण्डिका (प्र० २ प० ५ ख० ११) ॥

शक्तिविषयेण द्रव्याणि दत्वावहेरन् स आसुरः
॥१॥ दुहितृमतः प्रोथयित्वावहेरन् स राक्षसः ॥२॥ ते-
षां त्रय आद्याः प्रशस्ताः पूर्वःपूर्वः श्रेयान् ॥३॥ य-
थायुक्तो विवाहस्तथा युक्ता प्रजा भवति ॥४॥ पाणिस-
मूढं ब्राह्मणस्य नाप्रोक्षितमभितिष्ठेत् ॥५॥ अग्निं ब्रा-
ह्मणं चान्तरेण नातिक्रामेत् ॥६॥ ब्राह्मणांश्च ॥७॥
अनुज्ञाप्य वातिक्रामेत् ॥८॥ अग्निमपश्च न युगपद्धा-
रयीत् ॥९॥ नानाग्नीनां च सन्निवापं वर्जयेत् ॥१०॥
प्रतिमुखमग्निमाह्रियमाणं नाप्रतिष्ठितं भूमौ प्रदक्षिणी-
कुर्यात् ॥११॥ पृष्ठतश्चात्मनः पाणी न संश्लेषयेत् ॥१२॥
स्वपन्नभिनिर्मुक्तो नाश्वान्वाग्यतो रात्रिमासीत श्वो
भूत उदकमुपस्पृश्य वाचं विसृजेत् ॥१३॥ स्वपन्नभ्यु-
दितो नाश्वान्वाग्यतोऽहस्तिष्ठेत् ॥१४॥ आतमितोः
प्राणमायच्छेदित्येके ॥१५॥ स्वप्नं वा पापकं दृष्ट्वा ॥

१६॥ अर्थं वा सिसाधयिषन् ॥१७॥ नियमातिक्रमे चान्यस्मिन् ॥१८॥ दोषफलसंशये न तत्कर्तव्यम् ॥१९॥ एवमध्यायानध्याये ॥२०॥ न संशये प्रत्यक्षवद्ब्रूयात् ॥ २१॥ अभिनिर्मुक्ताभ्युदितकुनखीश्यावदाग्रादिधिषुदिधिषूपतिपर्याहितपरिशिष्टपरिवित्तपरिविन्नपरिविविदानेषु चोत्तरोत्तरस्मिन्नशुचिकरनिर्वेषो गरीयान् गरीयान् ॥ २२॥ तच्च लिङ्गं चरित्वोद्धार्यमित्येके ॥२३॥

॥ इति द्वादशी खण्डिका ॥ (प्र० २ प० ५ ख० १२) ॥
इति चापस्तम्बधर्मसूत्रेषु द्वितीयप्रश्ने पञ्चमः पटलः ॥५॥

---

सवर्णापूर्वशास्त्रविहितायां यथर्तु गच्छतः पुत्रास्तेषां कर्मभिस्सम्बन्धः ॥१॥ दायेन चाव्यतिक्रमश्चोभयोः ॥२॥ पूर्ववत्यामसंस्कृतायां वर्णान्तरे च मैथुने दोषः ॥३॥ तत्रापि दोषवान् पुत्र एव ॥४॥ उत्पादयितुः पुत्र इति हि ब्राह्मणम् ॥५॥ अथाप्युदाहरन्ति—इदानीमिवाहं जनक स्त्रीणामीर्ष्यामि नो पुरा । यदा यमस्य सादने जनयितुः पुत्रमब्रुवन् । रेतोधाः पुत्रं नयति परेत्य यमसादने । तस्माद्भार्यां रक्षन्ति बिभ्यन्तः पररेतसः । अप्रमत्ता रक्षथ तन्तुमेतं मा वः क्षेत्रे परबीजानि वाप्सुः । जनयितुः पुत्रो भवति साम्पराये मोघं वेत्ता कुरुते तन्तुमेत-

मिति ॥६॥ दृष्टो धर्मव्यतिक्रमस्साहसं च पूर्वेषाम् ॥७॥ तेषां तेजोविशेषेण प्रत्यवायो न विद्यते ॥८॥ तदन्वीक्ष्य प्रयुञ्जानस्सीदत्यवरः ॥९॥ दानं क्रयधर्मश्चापत्यस्य न विद्यते ॥१०॥ विवाहे दुहितृमते दानं काम्यं धर्मार्थं श्रूयते तस्माद्दुहितृमतेऽतिरथं शतं देयं तन्मिथुया कुर्यादिति तस्यां क्रयशब्दस्संस्तुतिमात्रं धर्माद्धि सम्बन्धः ॥११॥

॥ इति त्रयोदशी खण्डिका (प्र० २ प० ६ ख० १३) ॥

एकधनेन ज्येष्ठं तोषयित्वा जीवन् पुत्रेभ्यो दायं व्यभजेत् समं क्लीबमुन्मत्तं पतितं च परिहाप्य ॥१॥ पुत्राभावे यः प्रत्यासन्नः सपिण्डः ॥२॥ तदभाव आचार्य आचार्याभावे अन्तेवासी हृत्वा तदर्थेषु धर्मकृत्येषु वोपयोजयेत् ॥३॥ दुहिता वा ॥४॥ सर्वाभावे राजा दायं हरेत् ॥५॥ ज्येष्ठो दायाद इत्येके ॥६॥ देशविशेषे सुवर्णं कृष्णा गावः कृष्णं भौमं ज्येष्ठस्य ॥७॥ रथः पितुः परिभाण्डं च गृहे ॥८॥ अलङ्कारो भार्याया ज्ञातिधनं चेत्येके ॥९॥ तच्छास्त्रैर्विप्रतिषिद्धम् ॥१०॥ मनुः पुत्रेभ्यो दायं व्यभजदित्यविशेषेण श्रूयते ॥११॥ अथापि तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाययन्तीत्येकवच्छ्रूयते

॥१२॥ अथापि नित्यानुवादमविधिमाहुर्न्यायविदो यथा तस्मादजावयः पशूनां सहचरन्तीति । तस्मात् स्नातकस्य मुखं रेफायतीव । तस्मात् बस्तश्च श्रोत्रियश्च स्त्रीकामतमावितिं ॥१३॥ सर्वे हि धर्मयुक्ता भागिनः ॥१४॥ यस्त्वधर्मेण द्रव्याणि प्रतिपादयति ज्येष्ठोऽपि तमभागं कुर्वीत ॥१५॥ जायापत्योर्न विभागो विद्यते ॥१६॥ पाणिग्रहणाद्धि सहत्वं कर्मसु ॥१७॥ तथा पुण्यफलेषु द्रव्यपरिग्रहेषु च ॥१८॥ न हि भर्तुर्विप्रवासे नैमित्तिके दाने स्तेयमुपदिशन्ति ॥१९॥

॥ इति चतुर्दशी खण्डिका । (प्र०२ प०६ ख०१४) ॥

एतेन देशकुलधर्मा व्याख्याताः ॥१॥ मातुश्च योनिसम्बन्धेभ्यः पितुश्चासप्तमाद्यावता वा सम्बन्धो ज्ञायते तेषां प्रेतेषूदकोपस्पर्शनं गर्भान्परिहाप्यापरिसंवत्सरान् ॥२॥ मातापितरावेव तेषु भर्तारश्च ॥३॥ भार्यायां परमगुरुसंस्थायां चाकालमभोजनम् ॥४॥ आतुरव्यञ्जनानि कुर्वीरन् ॥५॥ केशान्प्रकीर्य पांसूनोप्यैकवाससो दक्षिणामुखास्सकृदुपमज्ज्योत्तीर्योपविशन्त्येवं त्रिः ॥६॥ तत्प्रत्ययमुदकमुत्सिच्याप्रतीक्षा ग्राममेत्य यत्स्त्रिय आ-

हुस्तत्कुर्वन्ति ॥ ७ ॥ इतरेषु चैतदेके उपदिशन्ति ॥ ८ ॥ शुचीन्मन्त्रवतस्सर्वकृत्येषु भोजयेत् ॥ ९ ॥ देशतः कालतः शौचतः सम्यक्प्रतिग्रहीतृत इति दानानि प्रतिपादयति ॥ १० ॥ यस्याग्नौ न क्रियते यस्य चाग्रं न दीयते न तद्भोक्तव्यम् ॥ ११ ॥ न क्षारलवणहोमो विद्यते ॥ १२ ॥ तथावरान्नसंसृष्टस्य च ॥ १३ ॥ अहविष्यस्य होम उदीचीनमुष्णं भस्मापोह्य तस्मिञ्जुहुयात्तद्धुतमहुतं चाग्नौ भवति ॥ १४ ॥ न स्त्री जुहुयात् ॥ १५ ॥ नानुपेतः ॥ १६ ॥ आन्नप्राशनाद्गर्भा नाप्रयता भवन्ति ॥ १७ ॥ आ परिसंवत्सरादित्येके ॥ १८ ॥ यावता वा दिशो न प्रजानीयुः ॥ १९ ॥ ओपनयनादित्यपरम् ॥ २० ॥ अत्र ह्यधिकारश्शास्त्रैर्भवति ॥ २१ ॥ सा निष्ठा ॥ २२ ॥ स्मृतिश्च ॥ २३ ॥

॥ इति पञ्चदशी खण्डिका (प्र० २ प० ६ ख० १५) ॥

इति चापस्तम्बीयधर्मसूत्रेषु द्वितीयप्रश्ने षष्ठः पटलः ॥ ६ ॥

सह देवमनुष्या अस्मिँल्लोके पुरा बभूवुः । अथ देवाः कर्मभिर्दिवं जग्मुरहीयन्त मनुष्याः । तेषां ये तथा कर्माण्यारभन्ते सह देवैर्ब्रह्मणा चामुष्मिन्लोके भवन्ति । अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच । प्रजानिश्श्रेयसाय च ॥ १ ॥ तत्र पितरो देवता ब्राह्मणा-

स्त्वाहवनीयार्थे ॥ २ ॥ मासिमासि कार्यम् ॥ ३ ॥ अपरपक्षस्यापराह्णः श्रेयान् ॥ ४ ॥ तथापरपक्षस्य जघन्यान्यहानि ॥ ५ ॥ सर्वेष्वेवापरपक्षस्याहस्सु क्रियमाणे पितॄन् प्रीणाति । कर्तुस्तु कालाभिनियमात्फलविशेषः ॥ ६ ॥ प्रथमेऽहनि क्रियमाणे स्त्रीप्रायमपत्यं जायते ॥ ७ ॥ द्वितीये स्तेनाः ॥ ८ ॥ तृतीये ब्रह्मवर्चसिनः ॥ ९ ॥ चतुर्थे क्षुद्रपशुमान् ॥ १० ॥ पञ्चमे पुमांसो बह्वपत्यो न चानपत्यः प्रमीयते ॥ ११ ॥ षष्ठेऽध्वशीलोऽक्षशीलश्च ॥ १२ ॥ सप्तमे कर्षे राद्धिः ॥ १३ ॥ अष्टमे पुष्टिः ॥ १४ ॥ नवम एकखुराः ॥ १५ ॥ दशमे व्यवहारे राद्धिः ॥ १६ ॥ एकादशे कृष्णायसं त्रपुसीसम् ॥ १७ ॥ द्वादशे पशुमान् ॥ १८ ॥ त्रयोदशे बहुपुत्रो बहुमित्रो दर्शनीयापत्यो युवमारिणस्तु भवन्ति ॥ १९ ॥ चतुर्दश आयुधे राद्धिः ॥ २० ॥ पञ्चदशे पुष्टिः ॥ २१ ॥ तत्र द्रव्याणि तिलमाषा व्रीहियवा आपो मूलफलानि च ॥ २२ ॥ स्नेहवति त्वेवान्ने तीव्रतरा पितॄणां प्रीतिर्द्राघीयांसं च कालम् ॥ २३ ॥ तथा धर्माहृतेन द्रव्येण तीर्थप्रतिपन्नेन ॥ २४ ॥ संवत्सरं गव्येन प्रीतिः ॥ २५ ॥ भूयांसमतो माहिषेण ॥ २६ ॥ एतेन ग्राम्यारण्यानां पशूनां मांसं मेध्यं व्याख्यातम् ॥ २७ ॥

[illegible]

खड्गोपस्तरणे खड्गमांसेनानन्त्यं कालम् ॥ १ ॥ तथा शतबलेर्मत्स्यस्य मांसेन ॥ २ ॥ वार्ध्राणसस्य च ॥ ३ ॥ प्रयतः प्रसन्नमनाः संसृष्टे भोजयेद्ब्राह्मणान् ब्रह्मविदो योनिगोत्रमन्त्रान्तेवास्यसम्बन्धान् ॥ ४ ॥ गुणहान्यां तु परेषां समुदेतः सोदर्योऽपि भोजयितव्यः ॥ ५ ॥ एतेनान्तेवासिनो व्याख्याताः ॥ ६ ॥ अथाप्युदाहरन्ति ॥ ७ ॥ सम्भोजनी नाम पिशाचभिक्षा नैषा पितॄन् गच्छति नोत देवान् । इहैव सा चरति क्षीणपुण्या शालान्तरे गौरिव नष्टवत्सा ॥ ८ ॥ इहैव सम्भुञ्जती दक्षिणा कुलात्कुलं विनश्यतीति ॥ ९ ॥ तुल्यगुणेषु वयोवृद्धः श्रेयान् द्रव्यकृशश्चेप्सन् ॥ १० ॥ पूर्वेद्युर्निवेदनम् ॥ ११ ॥ अपरेद्युर्द्वितीयम् ॥ १२ ॥ तृतीयमामन्त्रणम् ॥ १३ ॥ त्रिःप्रायमेके श्राद्धमुपदिशन्ति ॥ १४ ॥ यथाप्रथममेवं द्वितीयं तृतीयं च ॥ १५ ॥ सर्वेषु वृत्तेषु सर्वतस्समवदाय शेषस्य ग्रासावरार्ध्यं प्राश्नीयाद्यथोक्तम् ॥ १६ ॥ उदीच्यवृत्तिस्त्वासनगतानां हस्तेषूदपात्रानयनम् ॥ १७ ॥ उद्ध्रियतामग्नौ च क्रियतामित्यामन्त्रयते ॥ १८ ॥ काममुद्ध्रियतां काममग्नौ च क्रियतामित्यतिसृष्ट उद्धरेज्जुहुयाच्च ॥ १९ ॥ श्वभिरपपात्रैः श्राद्धस्य दर्शनं परिचक्षते ॥ २० ॥ श्वित्रिः शिपिविष्टः परतल्पगाम्यायुधी-

यपुत्रश्शूद्रोत्पन्नो ब्राह्मण्यामित्येते श्राद्धं भुञ्जानाः प-
ङ्क्तिदूषणा भवन्ति ॥२१॥ त्रिमधुस्त्रिसुपर्णस्त्रिणाचि-
केतश्चतुर्मेधः पञ्चाग्निर्ज्येष्ठसामिको वेदाध्याय्यनूचान-
पुत्रः श्रोत्रिय इत्येते श्राद्धं भुञ्जानाः पङ्क्तिपावना भ-
वन्ति ॥ २२ ॥ न च नक्तं श्राद्धं कुर्वीत ॥२३॥ आ-
रब्धे चाभोजनमासमापनादन्यत्र राहुदर्शनात् ॥२४॥

॥ इति सप्तदशी खण्डिका (प्र० २ प० ७ ख० १७) ॥

इति चापस्तम्बीयधर्मसूत्रेषु द्वितीयप्रश्ने सप्तमः पटलः ॥७॥

विल्वयनं मथितं पिण्याकं मधु मांसं च वर्जयेत
॥ १ ॥ कृष्णधान्यं शूद्रान्नं ये चान्ये नाद्यसम्मताः
॥ २ ॥ अहविष्यमनृतं क्रोधं येन च क्रोधयेत् स्मृति-
मिच्छन् यशो मेधां स्वर्गं पुष्टिं द्वादशैतानि वर्जयेत्
॥ ३ ॥ अधोनाभ्युपरिजान्वाच्छाद्य त्रिषवणमुदक-
मुपस्पृशन्ननग्निपक्ववृत्तिरच्छायोपगस्त्थानासनिकस्सं-
वत्सरमेतद्व्रतं चरेदेतदष्टाचत्वारिंशत्सम्मितमित्याचक्षते
॥४॥ नित्यश्राद्धम् ॥ ५ ॥ बहिर्ग्रामाच्छुचयः शुचौ दे-
शे संस्कुर्वन्ति ॥ ६ ॥ तत्र नवानि द्रव्याणि ॥ ७ ॥
यैरन्नं संस्क्रियते येषु च भुज्यते ॥ ८ ॥ तानि च भु-
क्तवद्भ्यो दद्यात् ॥ ९ ॥ समुदेतांश्च भोजयेत् ॥ १० ॥
न चातद्गुणायोच्छिष्टं प्रयच्छेत् ॥ ११ ॥ एवं संवत्सर-

म् ॥ १२ ॥ तथामुत्तमं लोहितच्छागेन ॥ १३ ॥ स्नानं च कारयेत्प्रतिच्छन्नम् ॥ १४ ॥ तस्योत्तरार्धे ब्राह्मणान् भोजयेत् ॥ १५ ॥ उभयान्पश्यति ब्राह्मणांश्च भुञ्जानान्स्नाने च पितॄनित्युपदिशन्ति ॥ १६ ॥ कृताकृतमत ऊर्ध्वम ॥ १७ ॥ श्राद्धेन तृप्तिं निवेदयन्ते पितरः ॥ १८ ॥ तिष्येण पुष्टिकामः ॥ १९ ॥

॥ इति अष्टादशी खण्डिका ॥ (प्र० २ प० ८ ख० १८) ॥

गौरसर्षपाणां चूर्णानि कारयित्वा तैः पाणिपादं प्रक्षाल्य मुखं कर्णौ प्राश्य च यद्वातो नाभिवाति तदासनोऽजिनं वस्तस्य प्रथमः कल्पो वाग्यतो दक्षिणामुखो भुञ्जीत ॥ १ ॥ अनायुष्यं त्वेवंमुखस्य भोजनं मातुरित्युपदिशन्ति ॥ २ ॥ औदुम्बरश्चमसः सुवर्णनाभः प्रशस्तः ॥ ३ ॥ न चान्येनापि भोक्तव्यः ॥ ४ ॥ यावद्ग्रासं सन्नयन्नस्कन्दयन्नापजिहीत वा कृत्स्नं ग्रासं ग्रसीत सहाङ्गुष्ठम् ॥ ५ ॥ न च मुखशब्दं कुर्यात् ॥ ६ ॥ पाणिं च नावधूनुयात् ॥ ७ ॥ आचम्य चोर्ध्वौ पाणी धारयेदाप्रोदकीभावात् ॥ ८ ॥ ततोऽग्निमुपस्पृशेत् ॥ ९ ॥ दिवा च न भुञ्जीतान्यन्मूलफलेभ्यः ॥ १० ॥ स्थालीपाकानुद्देश्यानि च वर्जयेत् ॥ ११ ॥ सोत्तराच्छादनश्चैव यज्ञोपवीती भुञ्जीत ॥ १२ ॥ नैयमिकं तु श्राद्धं

स्नेहवदेव ब्रूयात् ॥१३॥ माषमांसमिति प्रथमः कल्पः ॥१४॥ अभावे तैलं शाकमिति ॥१५॥ मघासु चाधिकं श्राद्धकल्पेन सर्पिर्ब्राह्मणान् भोजयेत् ॥१६॥

॥ इति एकोनविंशतितमी खण्डिका । (प्र० २ प० ८ ख० १९) ॥

मासि श्राद्धे तिलानां द्रोणंद्रोणं येनोपायेन शक्नुयात् तेनोपयोजयेत् ॥१॥ समुदेतांश्च भोजयेन्न चानर्हायोच्छिष्टं दद्युः ॥ २ ॥ उदगयन आपूर्यमाणपक्षस्यैकरात्रमवरार्ध्यमुपोष्य तिष्येण पुष्टिकामः स्थालीपाकं श्रपयित्वा महाराजमिष्ट्वा तेन सर्पिष्मता ब्राह्मणं भोजयित्वा पुष्ट्यर्थेन सिद्धिं वाचयीत ॥ ३ ॥ एवमहरहरापरस्मात्तिष्यात् ॥ ४ ॥ द्वौ द्वितीये ॥५॥ त्रींस्तृतीये ॥ ६ ॥ एवं संवत्सरमभ्युच्चयेन ॥ ७ ॥ महान्तं पोषं पुष्यति ॥ ८ ॥ आदित एवोपवासः ॥ ९ ॥ आत्ततेजसं भोजनं वर्जयेत् ॥ १० ॥ भस्मतुषाधिष्ठानम् ॥ ११ ॥ पदा पादस्य प्रक्षालनमधिष्ठानं च वर्जयेत् ॥ १२ ॥ प्रेङ्खोलनं च पादयोः ॥ १३ ॥ जानुनि चात्याधानं जङ्घायाः ॥ १४ ॥ नखैश्च नखवादनम् ॥ १५ ॥ स्फोटनानि चाकारणात् ॥ १६ ॥ यच्चान्यत्परिचक्षते ॥ १७ ॥ योक्ता च धर्मयुक्तेषु द्रव्यपरिग्रहेषु च ॥ १८ ॥ प्रतिपादयिता च तीर्थे ॥ १९ ॥ यन्ता चातीर्थे

यतो न भयं स्यात् ॥ २० ॥ सङ्ग्रहीता च मनुष्यान् ॥ २१ ॥ भोक्ता च धर्माविप्रतिषिद्धान् भोगान् ॥ २२ ॥ एवमुभौ लोकावभिजयति ॥ २३ ॥

॥ इति विंशतितमी खण्डिका (प्र० २ प० ८ ख० २०) ॥

इति चापस्तम्बीयधर्मसूत्रेषु द्वितीयप्रश्ने अष्टमः पटलः ॥८॥

चत्वार आश्रमा गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थ्यमिति ॥१॥ तेषु सर्वेषु यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छति ॥ २ ॥ सर्वेषामुपनयनप्रभृति समान आचार्यकुले वासः ॥ ३ ॥ सर्वेषामनूत्सर्गो विद्यायाः ॥ ४ ॥ बुद्ध्वा कर्माणि यत्कामयते तदारभेत ॥ ५ ॥ यथा विद्यार्थस्य नियम एतेनैवान्तमनूपसीदत आचार्यकुले शरीरन्यासो ब्रह्मचारिणः ॥ ६ ॥ अथ परिव्राजः ॥७॥ अत एव ब्रह्मचर्यवान् प्रव्रजति ॥ ८ ॥ तस्योपदिशन्ति ॥ ९ ॥ अनग्निरनिकेतस्स्यादशर्माशरणो मुनिः स्वाध्याय एवोत्सृजमानो वाचं ग्रामे प्राणवृत्तिं प्रतिलभ्यानिहोऽनमुत्रश्चरेत् ॥ १० ॥ तस्य मुक्तमाच्छादनं विहितम् ॥११॥ सर्वतः परिमोक्षमेके ॥ १२ ॥ सत्यानृते सुखदुःखे वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत् ॥ १३ ॥ बुद्धे क्षेमप्रापणम् ॥ १४ ॥ तच्छास्त्रैर्विप्रतिषिद्धम् ॥ १५ ॥ बुद्धे चेत्क्षेमप्रापणमिहैव न दुःखमुपलभेत ॥ १६ ॥ एतेन परं व्याख्यातम् ॥ १७ ॥

अथ वानप्रस्थः ॥ १८ ॥ अत एव ब्रह्मचर्यवान् प्रव्रजति ॥ १९ ॥ तस्योपदिशन्त्येकाग्निरनिकेतस्स्यादशर्माशरणो मुनिः स्वाध्याय एवोत्सृजमानो वाचम् ॥ २० ॥

॥ इति एकविंशतितमी खण्डिका (प्र० २ प० ११ ख० २१) ॥

तस्यारण्यमाच्छादनं विहितम् ॥ १ ॥ ततो मूलैः फलैः पर्णैस्तृणैरिति वर्तयंश्चरेत् ॥ २ ॥ अन्ततः प्रवृत्तानि ॥ ३ ॥ ततोऽपो वायुमाकाशमित्यभिनिश्रयेत् ॥ ४ ॥ तेषामुत्तर उत्तरस्संयोगः फलतो विशिष्टः ॥ ५ ॥ अथ वानप्रस्थस्यैवानुपूर्व्यमेक उपदिशन्ति ॥ ६ ॥ विद्यां समाप्य दारं कृत्वाग्नीनाधाय कर्माण्यारभते सोमावरार्ध्यानि यानि श्रूयन्ते ॥ ७ ॥ गृहान् कृत्वा सदारस्सप्रजस्सहाग्निभिर्बहिर्ग्रामाद्वसेत् ॥ ८ ॥ एको वा ॥ ९ ॥ शिलोञ्छेन वर्तयेत् ॥ १० ॥ न चात ऊर्ध्वं प्रतिगृह्णीयात् ॥ ११ ॥ अभिषिक्तश्च जुहुयात् ॥ १२ ॥ शनैरपोऽभ्युपेयादभिघ्नन्नभिमुख आदित्यमुदकमुपस्पृशेत् ॥ १३ ॥ इति सर्वत्रोदकोपस्पर्शनविधिः ॥ १४ ॥ तस्य द्वन्द्वं द्रव्याणामेक उपदिशन्ति पाकार्थभोजनार्थवासिपरशुदात्रकाजानाम् ॥ १५ ॥ द्वन्द्वानामेकैकमादायेतराणि दत्वारण्यमवतिष्ठेत ॥ १६ ॥ तस्यारण्येनातऊर्ध्वं होमो वृत्तिः प्रतीक्षाच्छादनं च

॥ १७ ॥ येषु कर्मसु पुरोडाशाश्चरवस्तेषु कार्याः ॥ १८ ॥ सर्वं चोपांशु सह स्वाध्यायेन ॥ १९ ॥ नारण्यमभ्याश्रावयेत् ॥ २० ॥ अग्न्यर्थं शरणम् ॥ २१ ॥ आकाशे त्वयम ॥ २२ ॥ अनुपस्तीर्णे शय्यासने ॥ २३ ॥ नवे सस्ये प्राप्ते पुराणमनुजानीयात् ॥ २४ ॥

॥ इति द्वाविंशतितमी खण्डिका (प्र० २ प० ९ ख० ) ॥

भूयांसं वा नियममिच्छन्नन्वहमेव पात्रेण सायंप्रातरर्थमाहरेत् ॥ १ ॥ ततो मूलैः फलैः पर्णैस्तृणैरिति वर्तयंश्चरेदन्ततः प्रवृत्तानि ततोऽपो वायुमाकाशमित्यभिनिश्रयेत् । तेषामुत्तर उत्तरस्संयोगः फलतो विशिष्टः ॥ २ ॥ अथ पुराणे श्लोकावुदाहरन्ति—अष्टाशीतिसहस्राणि ये प्रजामीषिर ऋषयः । दक्षिणेनार्यम्णः पन्थानं ते श्मशानानि भेजिरे ॥ ३ ॥ अष्टाशीतिसहस्राणि ये प्रजां नेषिर ऋषयः । उत्तरेणार्यम्णः पन्थानं तेऽमृतत्वं हि कल्पते ॥ ४ ॥ इत्यूर्ध्वरेतसां प्रशंसा ॥ ५ ॥ अथापि सङ्कल्पसिद्धयो भवन्ति ॥ ६ ॥ यथा वर्षं प्रजादानं दूरेदर्शनं मनोजवता यच्चान्यदेवं युक्तम ॥ ७ ॥ तस्माच्छ्रुतितः प्रत्यक्षफलत्वाच्च विशिष्टानाश्रमानेतानेके ब्रुवते ॥ ८ ॥ त्रैविद्यवृद्धानां तु वेदाः प्रमाणमिति निष्ठा तत्र यानि श्रूयन्ते ॥ ९ ॥ व्री-

हिरण्यपश्वाज्यपयःकपालपत्नीसम्बन्धान्युच्चैर्नीचैः कार्यमिति तैर्विरुद्ध आचारोऽप्रमाणमिति मन्यन्ते ॥१०॥ यत्तु श्मशानमुच्यते नानाकर्मणामेषोऽन्ते पुरुषसंस्कारो विधीयते ॥ ११ ॥ ततः परमनन्त्यं फलं स्वर्ग्यशब्दं श्रूयते ॥ १२ ॥

इति त्रयोविंशतितमी खण्डिका ॥ प्र० २ प० ९ ख० २३ ॥

अथाप्यस्य प्रजातिममृतमाम्नाय आह । प्रजामनु प्रजायसे तदु ते मर्त्यामृतमिति ॥ १ ॥ अथापि स एवायं विरूढः पृथक्प्रत्यक्षेणोपलभ्यते दृश्यते चापि सारूप्यं देहत्वमेवान्यत ॥ २ ॥ ते शिष्टेषु कर्मसु वर्तमानाः पूर्वेषां साम्परायेण कीर्तिं स्वर्गं च वर्धयन्ति ॥३॥ एवमवरोऽवरः परेषाम् ॥ ४ ॥ आभूतसंप्लवात्ते स्वर्गजितः ॥ ५ ॥ पुनस्सर्गे बीजार्था भवन्तीति भविष्यत्पुराणे ॥ ६ ॥ अथापि प्रजापतेर्वचनम् ॥ ७ ॥ त्रयीं विद्यां ब्रह्मचर्यं प्रजातिं श्रद्धां तपो यज्ञमनुप्रदानम् । य एतानि कुर्वते तैरित्सह स्मो रजो भूत्वा ध्वंसतेऽन्यत्प्रशंसन्निति ॥ ८ ॥ तत्र ये पापकृतस्त एव ध्वंसन्ति यथा पर्णं वनस्पतेर्न परान् हिंसन्ति ॥९ ॥ नास्यास्मिँल्लोके कर्मभिस्सम्बन्धो विद्यते तथा परस्मिंस्तत्कर्मफलैः ॥१०॥ तदेतेन वेदितव्यम् ॥११॥ प्रजापते

ऋषीणामिति सर्गोऽयम् ॥ १२ ॥ तत्र ये पुण्यकृतस्तेषां प्रकृतयः परा ज्वलन्त्य उपलभ्यन्ते ॥ १३ ॥ स्यात्तु कर्मावयवेन तपसा वा कश्चित्सशरीरोऽन्तवन्तं लोकं जयति सङ्कल्पसिद्धिश्च स्यान्न तु तज्ज्यैष्ठ्यमाश्रमाणाम् ॥ १४ ॥

॥ चतुर्विंशतितमी खण्डिका ॥ प्र० २ प० ९ ख० २४ ॥

इति आपस्तम्बधर्मसूत्रेषु द्वितीयप्रश्ने नवमः पटलः ॥ ९ ॥

---

व्याख्याताः सर्ववर्णानां साधारणवैशेषिका धर्माः । राज्ञस्तु विशेषाद्वक्ष्यामः ॥१॥ दक्षिणाद्वारं वेश्म पुरं च मापयेत् ॥ २ ॥ अन्तरस्यां पुरि वेश्म ॥ ३ ॥ तस्य पुरस्तादावसथस्तदामन्त्रणमित्याचक्षते ॥ ४ ॥ दक्षिणेन पुरं सभा दक्षिणोदग्द्वारा यथोभयं सन्दृश्येत बहिरन्तरं चेति ॥ ५ ॥ सर्वेष्वेवाजस्रा अग्नयस्स्युः ॥ ६ ॥ अग्निपूजा च नित्या यथा गृहमेधे ॥ ७ ॥ आवसथे श्रोत्रियानभ्यागतानतिथीन् वासयेत् ॥ ८ ॥ तेषां यथागुणमावसथाः शय्यान्नपानं च विदेयम् ॥ ९ ॥ गुरूनमात्यांश्च नातिजीवेत् ॥ १० ॥ न चास्य विषये क्षुधा रोगेण हिमातपाभ्यां वावसीदेदभावाद्बुद्धिपूर्वं वा कश्चित् ॥ ११ ॥ सभाया मध्येऽधिदेवनमुद्धृत्यावोक्ष्याक्षान्निवपेद्युग्मान् वैभीतकान् यथार्थान् ॥ १२ ॥ आर्याः शुचयस्सत्यशीला दीवितारस्स्युः ॥ १३ ॥ आयुधग्रहणं

नृत्तगीतवादित्राणीति राजाधीनेभ्योऽन्यत्र न विद्येरन् ॥ १४ ॥ क्षेमकृद्राजा यस्य विषये ग्रामेऽरण्ये वा तस्करभयं न विद्यते ॥ १५ ॥

॥ इति पञ्चविंशतितमी कण्डिका प्र० २ प० १० ख० २५ ॥

भृत्यानामनुपरोधेन क्षेत्रं वित्तं च ददद्ब्राह्मणेभ्यो यथार्हमनन्ताँल्लोकानभिजयति ॥१॥ ब्राह्मणस्वान्यपजिगीषमाणो राजा यो हन्यते तमाहुरात्मयूपो यज्ञोऽनन्तदक्षिण इति ॥२॥ एतेनान्ये शूरा व्याख्याताः प्रयोजने युध्यमानास्तनुत्यजः ॥३॥ ग्रामेषु नगरेषु चार्याञ्छुचीन् सत्यशीलान् प्रजागुप्तये निदध्यात् ॥४॥ तेषां पुरुषास्तथागुणा एव स्युः ॥ ५ ॥ सर्वतो योजनं नगरं तस्करेभ्यो रक्ष्यम् ॥ ६ ॥ क्रोशो ग्रामेभ्यः ॥७॥ तत्र यन्मुष्यते तैस्तत्प्रतिदाप्यम् ॥८॥ धर्म्यं शुल्कमवहारयेत् ॥९॥ अकरः श्रोत्रियः ॥ १० ॥ सर्ववर्णानां च स्त्रियः ॥ ११ ॥ कुमाराश्च प्राग्व्यञ्जनेभ्यः ॥ १२ ॥ ये च विद्यार्था वसन्ति ॥ १३ ॥ तपस्विनश्च ये धर्मपराः ॥ १४ ॥ शूद्रश्च पादावनेक्ता ॥ १५ ॥ अन्धमूकबधिररोगाविष्टाश्च ॥ १६ ॥ ये व्यर्था द्रव्यपरिग्रहैः ॥ १७ ॥ अबुद्धिपूर्वमलंकृतो युवा परदारमनुप्रविशन् कुमारीं वा वाचा बाध्यः ॥ १८ ॥ बुद्धिपूर्वं तु दुष्टभावो दण्ड्यः ॥ १९ ॥ संनिपाते वृत्ते शिश्नस्यच्छेदनं

सवर्णस्य ॥ २० ॥ कुमार्यां तु स्वान्यादाय नाश्यः ॥ २१ ॥ अथ भृत्ये राज्ञाम् ॥ २२ ॥ रक्ष्ये चात ऊर्ध्वं मैथुनात् ॥ २३ ॥ निर्वेषाभ्युपाये तु स्वामिभ्योऽवसृजेत् ॥ २४ ॥

इति षड्विंशी कण्डिका ॥ प्र० २ प० १० ख० २६ ॥

चरिते यथापुरं धर्माधि सम्बन्धः ॥ १ ॥ सगोत्रस्थानीयाञ्च परेभ्यस्समाचक्षीत ॥ २ ॥ कुलाय हि स्त्री प्रदीयत इत्युपदिशन्ति ॥ ३ ॥ तदिन्द्रियदौर्बल्याद्विप्रतिपन्नम् ॥ ४ ॥ अविशिष्टं हि परत्वं पाणेः ॥ ५ ॥ तद्व्यतिक्रमे खलु पुनरुभयोर्नरकः ॥ ६ ॥ नियमारम्भणो हि वर्षीयानभ्युदय एवमारम्भणादपत्यात् ॥ ७ ॥ नाश्य आर्यश्शूद्रायाम् ॥ ८ ॥ वध्यश्शूद्र आर्यायाम् ॥ ९ ॥ दारं चास्य कर्शयेत् ॥ १० ॥ सवर्णायामन्यपूर्वायां सकृत्सन्निपाते पादः पततीत्युपदिशन्ति ॥ ११ ॥ एवमभ्यासे पादः पादः ॥ १२ ॥ चतुर्थे सर्वम् ॥ १३ ॥ जिह्वाच्छेदनं शूद्रस्यार्यं धार्मिकमाक्रोशतः ॥ १४ ॥ वाचि पथि शय्यायामासन इति समीभवतो दण्डताडनम् ॥ १५ ॥ पुरुषवधे स्तेये भूम्यादान इति स्वान्यादाय वध्यः ॥ १६ ॥ चक्षुर्निरोधस्त्वेतेषु ब्राह्मणस्य ॥ १७ ॥ नियमातिक्रमिणमन्यं वा रहसि बन्धयेत् ॥ १८ ॥ आसमापत्तेः ॥ १९ ॥ असमापत्तौ नाश्यः ॥ २० ॥

राज्ञा इति पाठान्तरम् ॥

आचार्यऋत्विक्स्नातको राजेति त्राणं स्युरन्यत्र वध्यात् ॥ २१ ॥

॥ इति सप्तविंशतितमी खण्डिका ॥ (प्र० २ प० १० ख० २७) ॥

॥ इति चापस्तम्बधर्मसूत्रेषु द्वितीयप्रश्ने दशमः पटलः ॥ १० ॥

क्षेत्रं परिगृह्योत्थानाभावात्फलाभावे यस्समृद्धस्स भावि तदपहार्यः ॥ १ ॥ अवशिनः कीनाशस्य कर्मन्यासे दण्डताडनम् ॥ २ ॥ तथा पशुपस्य ॥ ३ ॥ अवरोधनं चास्य पशूनाम् ॥ ४ ॥ हित्वा व्रजमादिनः कर्शयेत्पशून् ॥ ५ ॥ नातिपातयेदवरुध्य पशून्मारणे नाशने वा स्वामिभ्योऽवसृजेत् ॥ ६ ॥ प्रमादादारण्ये पशूनुत्सृष्टान् दृष्ट्वा ग्राममानीय स्वामिभ्योऽवसृजेत् ॥ ७ ॥ पुनः प्रमादे सकृदवरुध्य ॥ ८ ॥ तत ऊर्ध्वं न सूर्क्षेत् ॥ ९ ॥ परपरिग्रहमविद्वानाददान एधोदके मूले पुष्पे फले गन्धे ग्रासे शाके इति वाचा बाध्यः ॥ १० ॥ विदुषो वाससः परिमोषणम् ॥ ११ ॥ अदण्ड्यः कामकृते तथा प्राणसंशये भोजनमाददानः ॥ १२ ॥ प्राप्तनिमित्ते दण्डाकर्मणि राजानमेनस्स्पृशति ॥ १३ ॥

॥ इति अष्टाविंशतितमी खण्डिका (प्र० २ प० ११ ख० २८) ॥

प्रयोजयिता मन्ता कर्तेति स्वर्गनरकफलेषु कर्मसु भागिनः ॥ १ ॥ यो भूय आरभते तस्मिन् फलविशेषः ॥ २ ॥ कुटुम्बिनौ धनस्येशाते ॥ ३ ॥ तयोर-

नुमतेऽन्येऽपि तद्विधेषु वर्तेरन् ॥४॥ विद्याभिजनसम्पन्ना वृद्धा मेधाविनो धर्मेष्वविनिपातिनः ॥५॥ सन्देहे लिङ्गतो दैवेनेति विचित्य ॥६॥ पुण्याहे प्रातरग्नाविद्धेऽपामन्ते राजवत्युभयतस्समाख्याप्य सर्वानुमते मुख्यस्सत्यं प्रश्नं ब्रूयात् ॥७॥ अनृते राजा दण्डं प्रणयेत् ॥८॥ नरकश्चात्राधिकः साम्पराये ॥९॥ सत्ये स्वर्गस्सर्वभूतप्रशंसा च ॥१०॥ सा निष्ठा या विद्या स्त्रीषु शूद्रेषु च ॥११॥ आथर्वणस्य वेदस्य शेष इत्युपदिशन्ति ॥१२॥ कृच्छ्रा धर्मसमाप्तिस्समाम्नानेन लक्षणकर्मणा तु समाप्यते ॥१३॥ तत्र लक्षणम्। सर्वजनपदेष्वेकान्तसमाहितमार्याणां वृत्तं सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामदाम्भिकानां वृत्तसादृश्यं भजेत्। एवमुभौ लोकावभिजयति ॥१४॥ स्त्रीभ्यस्सर्ववर्णेभ्यश्च धर्मशेषान्प्रतीयादित्येक इत्येके ॥ ॥१५॥

॥ इति एकोनत्रिंशत्तमः खण्डः ॥ प्र० २ प० ११ ख० २९ ॥

॥ इति चापस्तम्बधर्मसूत्रेषु द्वितीयप्रश्ने एकादशः पटलः ॥११॥

॥ द्वितीयप्रश्नश्च समाप्तः ॥

---



शिवाभ्यां नमः

# ॥ आपस्तम्बप्रणीतं धर्मसूत्रम् ॥

## ॥ हरदत्तमिश्रविरचितया उज्ज्वलाख्यवृत्त्या सहितम् ॥

### प्रथमप्रश्नप्रारम्भः

मातामहमहाशैल महस्तदपितामहम् ।
कारणं जगतां वन्दे कण्ठादुपरि वारणम् ॥

प्रणिपत्य महादेवं हरदत्तेन धीमता ।
धर्माख्यप्रश्नयोरेषा क्रियते वृत्तिरुज्ज्वला ॥

ओम् ॥ * अथातः सामयाचारिकान्धर्मान् व्याख्यास्यामः ॥१॥
अथशब्द आनन्तर्ये । अतश्शब्दो हेतौ । उक्तानि श्रौतानि गार्ह्याणि च कर्माणि । तानि च वक्ष्यमाणान् धर्मानपेक्षन्ते । कथम् । 'आचान्तेन कर्म कर्तव्यं शुचिना कर्तव्य'मिति वचनादाचमनशौचादीनपेक्षन्ते । 'सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।' इति वचनात् सन्ध्यावन्दनम् । एवम् 'अशुचिकरनिर्वेषः ।' 'द्विजातिकर्मभ्यो हानिः पतनम्' इति वचनात् ब्रह्महत्यादिप्रायश्चित्तानि च१ एवमन्येष्वपि यथासम्भवमपेक्षा द्रष्टव्या । अतस्तदनन्तरम् । सामायाचारिकान्धर्मान् व्याख्यास्याम । पौरुषेयी व्यवस्था समयः । स च त्रिविधः । विधिर्नियमः प्रतिषेध इति । तत्र प्रवृत्तिप्रयोजनो विधिः । 'सन्ध्योश्च बहिर्ग्रामादासनं वाग्यतश्चे'त्यादिः (१-११-३-८) । निवृत्तिप्रयोजनाविनरौ । 'प्राङ्मुखोऽन्नानि भुञ्जीते'ति नियमविधिः (१-११-३१-१) । क्षुदुपघातार्था भोजने प्रवृत्तिः । शक्य च य-

१. 'आचान्तेन कर्तव्यं तथा शुचिना च पवित्रपाणिना च यज्ञोपवीतिना च कर्तव्यमिति वचनादाचमनादिचतुष्कमपेक्षन्ते ।' इति पाठान्तरम् ।

त्किञ्चनदिङ्मुखेनापि भुञ्जानेन 'क्षुदुपहन्तुम् । तत्र नियमः क्रियते प्राङ्मुख एव भुञ्जीत न दक्षिणामुख इति । परिसङ्ख्या तु नियमस्यैव कियानपि भेदः । एवं द्रव्यार्जने रागात्प्रवृत्तं प्रति नियमः क्रियते 'याजनाध्यापनप्रतिग्रहैरेव ब्राह्मणो द्रव्यमार्जयेत् न कृषिवाणिज्यादिने'ति । 'ब्राह्मणस्य गोरिति पदोपस्पर्शनं च वर्जये'दित्यादेः (१-११-३१-६) प्रतिषेधः । समयमूला आचारास्समयाचाराः तेषु भवाः सामयाचारिकाः । एवम्भूतान् धर्मानिति । कर्मजन्योऽभ्युदयनिश्रेयसहेतुरपूर्वाख्य आत्मगुणो धर्मः । तद्धेतुभूतकर्मव्याख्यानमेव तद्व्याख्यानम् । तत्र विधिषु तावद्विषयानुष्ठानाद्धर्म इति नास्ति विप्रतिपत्तिः । नियमेष्वपि नियमानुष्ठानाद्धर्म इति प्रतिषेधेष्वपि तत्र नञर्थानुष्ठानाद्धर्म इति केचित् । अत एव धर्मानित्यविशेषेणाह, अन्ये तु, विधिष्वेव धर्मः । इतरयोस्तु विपरीतानुष्ठानादधर्मः केवलं, न तु विषयानुष्ठानात् कश्चिद्धर्मः । 'न ह्यप्रतिगृह्णन्नपिबन्वा सुरां धार्मिक इति लोके प्रसिद्धः ; सूत्रे तु धर्मग्रहणमधर्मस्याप्युपलक्षणमिति स्थितिः ॥ इति ॥ १ ॥ किं च भोः समयोऽपि प्रमाणं, यदि प्रमाणमिदमपि प्रमाणं भवितुमर्हति 'चैत्यं वन्देत स्वर्गकामः । प्रगे भुञ्जीत । केशानुल्लुञ्छेत् । तिष्ठन् भुञ्जीत । न स्नाया'दिति । तत्राह— *धर्मज्ञसमयः प्रमाणम् ॥ २ ॥ न हि ब्रूमः समयमात्रं प्रमाणमिति । किं तर्हि । धर्मज्ञा ये मन्वादयस्तेषां समयः प्रमाणं धर्माधर्मयोः । कथं पुनरिदमवगतं मन्वादयो धर्मज्ञा न बुद्धादय इति । यद्युच्यते बुद्धादीनामतीन्द्रियेऽर्थे ज्ञानं न सम्भवतीति, मन्वादिष्वपि समानम् । अथ तेषां धर्मज्ञानातिशयादतीन्द्रियेऽपि ज्ञानं सम्भवतीति, तत् बुद्धादिष्वपि समानम् । यथाह—'सुगतो यदि धर्मज्ञः कपिलो नेति का प्रमा । तावुभौ यदि सर्वज्ञौ मतिभेदः कथं तयोः ॥' इति । वक्तव्यो वा विशेषः ॥ २ ॥ तमाह— *वेदाश्च ॥ ३ ॥ चोऽवधारणे । वेदा एव मूलप्रमाणं धर्माधर्मयोः । न च नित्यनिर्दोषेषु वेदेषूक्तोपालम्भसम्भवः । स्वतःप्रमाणस्य हि शब्दस्य न वक्तृदोषनिबन्धनमप्रामा-

१. 'धर्मज्ञसमयः प्रमाणं वेदाश्च' इति एकसूत्रतयैव क्वचित्पाठः ।

ण्यम् । तदिहास्मदादीनां धर्मज्ञसमयः प्रमाणं धर्मज्ञानां तु वेदाः प्रमाणम् । मनुरप्याह—'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् । आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥' गौतमोऽपि—'वेदो धर्ममूलं तद्विदां च स्मृतिशीले ।' इति । यद्यपि अप्रत्यक्षो वेदो मूलभूतोऽस्मदादिभिर्नोपलभ्यते । तथापि मन्वादिभिरुपलभ्यते इत्यनुमीयते । वक्ष्यति च 'तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते' इति ॥ ३ ॥ * **चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः** ॥ ४ ॥ ब्राह्मणाद्याश्चत्वारो वर्णसञ्ज्ञकाः । ते च सामयाचारिकैर्धर्मैरधिक्रियन्ते । चतुर्णामेवोपदेशेऽपि पुनश्चतुर्ग्रहणं यथाक्रमं चतुर्ष्वन्तर्भूतानामपि ग्रहणार्थम् । ततश्च 'ब्राह्मण क्षत्रियो वैश्य' इति बौधायनादिभिरुक्तानामनुलोमादीनामप्यत्र ग्रहणं मतम् । तथा च गौतमः प्रतिलोमानामेव धर्मेऽनधिकारमाह—'प्रतिलोमास्तु धर्महीनाः' इति ॥ ४ ॥

**तेषां पूर्वः पूर्वो जन्मतः श्रेयान्** ॥ ५ ॥ जन्मत इति वचनात् सद्वृत्तादपि शूद्राद्वैश्यस्त्वृत्तोऽपि श्रेयान् । एवं वैश्यात् क्षत्रियः क्षत्रियात् ब्राह्मणः ॥ ५ ॥ * **अशूद्राणामदुष्टकर्मणामुपायनं वेदाध्ययनमग्न्याधेयं फलवन्ति च कर्माणि** ॥ ६ ॥ शूद्रवर्जितानां त्रयाणां वर्णानामदुष्टकर्मणामुपायनादयो धर्माः । उपायनमुपनयनम् । नात्र त्रैवर्णिकानामुपनयनादि विधीयते । प्राप्तत्वात् । नापि शूद्राणां प्रतिषिध्यते । प्राप्त्यभावात् । तथाहि—उपनयनं तावद्गृह्ये 'गर्भाष्टमेषु ब्राह्मणमुपनयीते'त्यादिना त्रैवर्णिकानामेव विहितम् । इहापि तथैव विधास्यते । अध्ययनमपि 'उपेतस्याचार्यकुले ब्रह्मचारिवासम्' इत्यारभ्य विधानात् अनुपनीतस्याप्राप्तमेव । किं च 'श्मशानवच्छूद्रपतितावि'ति अध्ययननिषेधो वक्ष्यते । यस्य यस्य समीपे नाध्येयं स कथं स्वयमध्येतुमर्हति । अग्न्याधेयमपि 'वसन्ते ब्राह्मण'मित्यादि त्रैवर्णिकानामेव विहितम् । 'फलवन्ति चाग्निहोत्रादीनि कर्माणि त्रयाणां वर्णानां'मित्युक्तत्वात् त्रैवर्णिकानामेव नियतानि । विद्याग्न्यभावाच्च शूद्राणामप्रम-

'मन्वादय उपलब्धवन्त इत्यनुमीयते' इति पाठान्तरम् ।

'वर्णानामुपदेशेऽपि पुनश्चतुर्ग्रहणं यथाकथञ्चिच्चतुर्ष्वन्तर्भूतानामपी'ति पाठान्तरम् ।

क्तानि। उक्तो विद्याग्न्यभावः। तस्माद्दुष्टकर्मप्रतिषेधार्थं सूत्रम्। तथा शास्त्रान्तरे—'द्विजादिकर्मभ्यो हानिः पतन'मिति। अप्रतिषेधे तु दुष्टकर्मणामप्यधिकारो भवत्येव। फलवन्ति च कर्माणीत्यभिधानात् क्रियत इति कर्मेति निर्वचनात् 'प्रागुपनयनात् कामचारवादभक्ष' इति गौतमस्मरणं ब्रह्महत्यादिमहापातकव्यतिरिक्तविषयमित्यनुपेतस्यापि दुष्टकर्मत्वसम्भवात् अदुष्टकर्मणामुपनयनमुक्तम्। शूद्रप्रतिषेधस्तु प्राप्तानुवादः॥६॥ यथा ब्राह्मणादीनामुपनयनादयो धर्माः प्रधानभूताः तादृशं शूद्रस्य कर्माह—* **शुश्रूषा शूद्रस्येतरेषां वर्णानाम्** ॥७॥ इतरेषां ब्राह्मणादीनां वर्णानां या शुश्रूषा सा शूद्रस्य परमो धर्मः॥७॥ तत्र विशेषः—* **पूर्वस्मिन्पूर्वस्मिन्वर्णे निश्रेयसं भूयः** ॥८॥ सर्वप्रकारकृताया अपि वैश्यशुश्रूषायाः मात्रयापि कृता क्षत्रियशुश्रूषा बहुतरं फलं साधयति। एवं क्षत्रियशुश्रूषाया ब्राह्मणशुश्रूषा॥८॥ उपनयनं वेदाध्ययनमित्यादि यदुक्तं अस्मिन् क्रमे उपनयने विशेषमाह—* **उपनयनं विद्यार्थस्य श्रुतितः संस्कारः** ॥९॥ विद्या अर्थः प्रयोजनं यस्य स विद्यार्थः। तस्यायं श्रुतिविहितसंस्कारः उपनयनं नाम। 'विद्यार्थस्ये'ति वचनात् मूकादेर्न भवति। तथा च शङ्खलिखितौ 'नोन्मत्तमूकान् संस्कुर्यात्' इति। लिङ्गस्य विवक्षितत्वात् स्त्रिया अपि तन्न भवति। यद्यपि तस्याः 'अग्ने गृहपते' इत्यादिकया विद्यया अर्थः। श्रुतित इति वचनं तदतिक्रमे श्रौतातिक्रमप्रायश्चित्तप्राप्त्यर्थम्॥९॥ अनेकवेदाध्यायिनां वेदव्रतवदुपनयनमपि प्रतिवेदं भेदेन कर्तव्यमिति प्राप्ते उच्यते—* **सर्वेभ्यो वै वेदेभ्यः सावित्र्यनूच्यत इति हि ब्राह्मणम्** ॥१०॥ 'त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्। तदित्यृचोऽस्यास्सावित्र्याः परमेष्ठी प्रजापतिः॥' इति मनुः। तस्माच्चोपनयने यत्सावित्र्या अनुवचनं तन्मुखेन सर्ववेदा अनूक्ता भवन्तीत्यगृह्यमाणविशेषत्वादेकमेवोपनयनं सर्वार्थमिति। अस्मिन्नर्थे ब्राह्मणमपि भवति। ब्राह्मणमेव पठितम्॥ आथर्वणस्य वेदस्य पृथगुपनयनं कर्तव्यम्। तथा च तत्रैव श्रुतम् 'नान्यसंस्कृतो भृग्वङ्गिरसोऽधीयीते'ति॥१०॥ विद्वानेवोपनेताभिगम्यत इति विधातुमविदुषो निन्दामाह—* **तमसो वा एष तमः प्रविशति यमविद्वानुपनयते यश्चाविद्वानिति हि ब्राह्मणम्** ॥११॥

यथा कश्चित् तमसस्सकाशात्तम एव प्रविष्टो न किञ्चिज्जानाति एवमेषः यं माणवकमविद्वानुपनयते तथा यश्चाविद्वान्। उपनीयते इत्यपेक्ष्यते । यश्च स्वयमप्यविद्वान् सन्नुपनीयते सोऽपि तमस एव तमः प्रविशति। अस्मिन्नर्थे ब्राह्मणमपि भवतीति॥ ११॥ कीदृशस्तर्ह्युपनेताभिगम्यस्तमाह—*तस्मिन्नभिजनविद्यासमुदेतं समाहितं संस्कर्तारमीप्सेत् ॥ १२॥ अविच्छिन्नवेदवित्सम्बन्धे कुले जन्म अभिजनः। षड्भिरङ्गैस्सहैव यथावदर्थज्ञानपर्यन्तमधीतो वेदो विद्या। सर्वासम्भवे वेद एव वा । तस्मिन्नुपनयने कर्तव्ये ताभ्यां अभिजनविद्याभ्यां समुदेतं सम्पन्नम् । समाहितं विहितप्रतिषिद्धेष्ववहितमनसम्। संस्कर्तारमाचार्यमीप्सेत् । इच्छया करणं लक्ष्यते।आप्नुयादभिगच्छेदिति॥१२॥*तस्मिंश्चैव विद्याकर्मान्तमविप्रतिपन्ने धर्मेभ्यः ॥१३॥ तस्मिन्नेव चोपनेतरि विद्याकर्म विद्याग्रहणं कर्तव्यम् । आन्तमासमाप्तेः । अविप्रतिपन्ने धर्मेभ्यः । यद्याचार्यो धर्मेभ्यो न प्रच्युतो भवति । प्रच्युते तु तस्मिन्नसम्पर्कार्हे अन्यतोऽपि विद्याकर्म भवत्येव । येषां त्वाचार्यकरणविधिप्रयुक्तमध्ययनं तेषामेतन्नोपपद्यते । कथमुपनीयाध्यापयेन्नाचार्यकं भावयेदिति । सकृदुपनीतस्य माणवकस्य न पुनरुपनयनसंस्कारः सम्भवति । तं कथमन्योऽध्यापयेत् । एतेन मध्ये आचार्यमरणे माणवकस्य तदन्तमध्ययनं नाचार्यान्तरात् सम्भवतीति द्रष्टव्यम्॥१३॥ आचार्यशब्दनिर्वचनमाह—*यस्माद्धर्मानाचिनोति स आचार्यः ॥१४॥ यस्मात्पुरुषादयं माणवकः धर्मानाचिनोति शिक्षते स आचार्यः । 'अप्यक्षरसामान्यानि ब्रूयादि'ति चकारमात्रेणेदं निर्वचनम् । अनेन प्रकारेण माणवकमाचार्यः शौचाचारांश्च शिक्षयेदित्युक्तं भवति॥१४॥*तस्मै न द्रुह्येत्कदाचन॥१५॥ तस्मै एवम्भूताचार्याय कदाचन कदाचिदपि न द्रुह्येत् । तद्विषयमपकारं न कुर्यात् ॥१५॥ कस्मादित्यत आह— *स हि विद्यातस्तं जनयति ॥१६॥ स ह्याचार्यः तं माणवकं विद्यातो जनयति । यथा पिता मातृतः । 'अत्रास्य माता सावित्री पिता त्वाचार्य उच्यते । 'इति शास्त्रान्तरम्॥१६॥*तच्छ्रेष्ठं जन्म ॥१७॥

---

१. 'आचार्यविधिकरण' इति पाठान्तरम् ।
२. 'तदन्तमध्ययन' 'तदनन्तमध्ययनम' इति च क्वचित्पाठः ।

तद्विद्यातो जन्म श्रेष्ठं प्रशस्ततमम्। अभ्युदयनिःश्रेयसहेतुत्वात् ॥ १७ ॥ माता-पितृभ्यामाचार्यः श्रेष्ठ इत्याह— *शरीरमेव मातापितरौ जनयतः ॥ १८॥ मातापितरौ शरीरमात्रमेव काष्ठकुड्यादिसमं जनयतः। आचार्यस्तु, सर्वपुरुषार्थक्षमं रूपं जनयति। 'आचार्यः श्रेष्ठो गुरूणा'मिति गौतमः ॥ १८॥ *वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यं गर्भाष्टमेषु ब्राह्मणं गर्भैकादशेषु राजन्यं गर्भद्वादशेषु वैश्यम् ॥ १९ ॥ वसन्ते ब्राह्मणमित्यादि गृह्ये गतम् ॥ १९* ॥ अथ काम्यानि ॥ २० ॥ कामनिमित्तानि उपनयनानि वक्ष्यन्ते॥ २० ॥ *सप्तमे ब्रह्मवर्चसकाममष्टम आयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादश इन्द्रियकामं द्वादशे पशुकामम् ॥ २१ ॥ ब्रह्मवर्चसकाममित्यादीनि षट्सूत्राणि स्पष्टार्थानि। सर्वत्रोपनयीतेत्यपेक्ष्यते॥ २१॥ 'आचार्याधीनस्स्या'दित्यादीनि यानि ब्रह्मचारिणो व्रतानि वक्ष्यन्ते तेष्वसमर्थानां कुमाराणां वर्णक्रमेणानुकल्पमाह —*आषोडशाद्ब्राह्मणस्यानात्यय आद्वाविंशात्क्षत्रियस्याचतुर्विंशाद्वैश्यस्य ॥ २२ ॥ यथा व्रतेषु समर्थः स्याद्यानि वक्ष्यामः ॥ २३ ॥ आकारोऽभिविधौ। अत्ययोऽतिक्रमः। स एवाऽत्ययः तदभावोऽनात्ययः। याद‍ृच्छिको दीर्घः। आर्षो वा प्रयोगः। प्रकरणादुपनयनकालस्येति गम्यते। यथा व्रतेषु समर्थः स्यात् तथा एतावान् कालः प्रतीक्ष्यः। पूर्वमेव तु सामर्थ्ये सति अष्टवर्षाद्यतिक्रमे वक्ष्यमाणप्रायश्चित्तमेव भवति। एवं षोडशादिभ्य ऊर्ध्वं कियन्तञ्चित्कालमसमर्थानां पश्चात्सामर्थ्ये सति प्रायश्चित्तं भवत्येव॥ २२ २३॥ तदानीं प्रायश्चित्तमाह—*अतिक्रान्ते सावित्र्याः काल ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेत् ॥ २४ ॥ यस्य यः सावित्र्याः काल उक्तः, तदतिक्रमे त्रैविद्यकं त्र्यवयवा विद्या तामधीयते त्रैविद्याः तेषामिदं त्रैविद्यकम्। 'गोत्रचरणाद्वुञ्' चरणाद्धर्माम्नाययोरि'ति वुञ्। एवंभूतं ब्रह्मचर्यम् अग्निपरिचर्यामध्ययनं गुरुशुश्रूषामिति परिहाप्य सकलं ब्रह्मचर्यधर्मं चरेत्। कियन्तं कालम् ऋतुं कालाध्वनोरत्यन्तसंयोगे द्वितीया। ऋतुमिति वचनाद्वसन्तारम्भे प्रायश्चित्तारम्भमिच्छन्ति ॥ २४ ॥* अथोपनयनम् ॥ २५ ॥ एवं चरितव्रत उपनेतव्यः ॥ २५ ॥ ततस्संवत्सरमुदकोपस्पर्शनम् ॥ २६ ॥ ततः उपनयनादा-

रभ्य, संवत्सरमुदकोपस्पर्शनं स्नानं कर्तव्यम् । शक्तस्य त्रिषवणं स्नानम् । अन्यस्य यथाशक्ति ॥२६॥ *** अथाध्याप्यः ॥ २७॥** एवं चरितव्रतः पश्चा-दध्याप्यः॥२७॥ *** अथ यस्य पिता पितामह इत्यनुपेतौ स्यातां ते ब्रह्महसंस्तुताः ॥ २८ ॥** 'यस्य' माणवकस्य पिता पितामहश्चानुपेतौ स्यातां स्वयं च ते च तथाविधा माणवका ब्रह्महसंस्तुताः ब्रह्महण इत्येव कीर्तिताः ब्रह्मवादिभिः । अस्मिन् तच्छब्दयोगस्तद्धर्मप्राप्त्यर्थः । एवं च 'श्मशानवच्छूद्रपतिता'वित्यध्ययननिषेधप्रकरणे वक्ष्यते । ततश्च ब्रह्म यथा ब्रह्महसमीपे नाध्येयमेवमेषामपीति॥२८॥ ***तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत् ॥२९॥** तेषामेतेषामभ्यागमनमाभिमुख्येन गमनम् । मातापितृपुत्रदारशरीररक्षणार्थमपि वर्जयेत् । यद्यपि भिक्षा सर्वत्र अनिग्राह्येति वक्ष्यते । भोजनमुद्यतमपि वर्जयेत् । 'अपि दुष्कृतकारिण' इति सत्यपि वचने विवाहं च वर्जयेत् । यद्यपि 'स्त्रीरत्नं दुष्कुलादपी'ति मानवस्मरणम् ॥२९॥ ***तेषामिच्छतां प्रायश्चित्तम् ॥ ३० ॥** इच्छतामिति वचनान्न बलात्कारेण प्रायश्चित्तं कारयितव्यम्॥३०॥ ***यथा प्रथमेऽतिक्रम ऋतुरेवं संवत्सरः ॥ ३१ ॥** यथा प्रथमेऽतिक्रमे ब्रह्मचर्यस्य ऋतुःकालः एवमन्यस्मिन्नतिक्रमे संवत्सरः काल ॥३१॥ ***अथोपनयनं तत उदकोपस्पर्शनम्॥३२॥३३॥**गते॥३२॥ ॥३३॥ ॥ इति प्रथमा खण्डिका ॥ प्र० १ प० १ ख० १ ॥

---

******* सङ्ख्याय संवत्सरान्यावन्तोऽनुपेताः स्युः ॥ १ ॥** यदि पितैवानुपेतः ततः संवत्सरमेकं अथ पितामहोऽपि ततो द्वौ । अथ स्वयमपि यथाकालमनुपेतः ततः संवत्सरानिति ॥१॥ अथोदकोपस्पर्शने मन्त्राः,— ***सप्तभिः पावमानीभिर्यदन्ति यच्च दूरक इत्येताभिर्यजुष्पवित्रेण सामपवित्रेणाङ्गिरसेनेति॥२॥** पवमानः सोमो देवता यासां ताः पावमान्यः, यजुष्पवित्रेण 'आपो अस्मान्मातरः शुन्धन्त्वि'त्यनेन, सामपवित्रेण 'कया नश्चित्र आभुवदि'त्यादिगीतेन वामदेव्येन साम्ना, आङ्गिरसेन 'हंसः शुचिषदि'त्यनेन एतैरञ्जलिना शिरस्यपोऽवसिञ्चेत ॥२॥ *** अपि वा व्याहृतिभिरेव ॥ ३ ॥** पूर्वैः सह व्याहृतीनां विकल्पः ॥३॥ *** अथाध्या-**

प्यः ॥४॥ गतम् ॥ तत्र 'यस्य पिता पितामह' इत्युपक्रमे यस्येत्येकवचनमन्तेऽ'प्यध्याप्य' इति । मध्ये तु'श्मशानसंस्तुताः' तेषामभ्यागमनं तेषामिच्छतामिति बहुवचनम् । तत्रोपक्रमोपसंहारानुसारेण माणवकस्यैव प्रायश्चित्तमुपनयनमध्यापनं च । बहुवचनं तु तथाविधमाणवकबहुत्वापेक्षमित्यवोचाम ॥४॥ * **अथ यस्य प्रपितामहादि नानुस्मर्यत उपनयनं ते श्मशानसंस्तुताः** ॥ ५ ॥ प्रपितामहः पितामहः पिता स्वयं च यथाकालमिति । ते तथाविधा माणवकाः श्मशानसंस्तुताः । एतेन 'श्मशाने सर्वतः शम्याप्रासा'दित्यध्ययननिषेधात्तेषामपि सन्निधौ भवति ॥५॥ * **तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत्तेषामिच्छतां प्रायश्चित्तं द्वादशवर्षाणि त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनं तत उदकोपस्पर्शनं पावमान्यादिभिः** ॥ ६ ॥ गतम् । पावमान्यादिभिरित्यनेनैव प्रतिपूरुषं सङ्ख्याय संवत्सरानित्येतदपि द्रष्टव्यम् ॥६॥ * **अथ गृहमेधोपदेशनम्** ॥ ७ ॥ गृहमेधो गृह्यशास्त्रं गृहस्थधर्मो वा ॥७॥ * **नाध्यापनम्** ॥८॥ कृत्स्नस्यवेदस्य । किं तु गृह्यमन्त्राणामेवेति ॥८॥ * **ततः यो निवर्तते तस्य संस्कारो यथा प्रथमेऽतिक्रमे** ॥९॥ ततः एवं कृतप्रायश्चित्तात् गृहस्थीभूतात्ततो यो निवर्तते उत्पद्यते तस्योपनयनसंस्कारः कर्तव्यः । कथम् । यथा प्रथमेऽतिक्रमे ऋतु त्रैविद्यक ब्रह्मचर्यं चारयित्वेत्यर्थः ॥९॥ *ततं **ऊर्ध्वं प्रकृतिवत्** ॥ १० ॥ ततः यो निवर्तते तस्य प्रकृतिवत् यथाप्राप्तमुपनयनं कर्तव्यमिति । यस्य प्रपितामहस्य पितुरारभ्य नानुस्मर्यत उपनयनं तत्र प्रायश्चित्तं (चो) नोक्तम् । धर्मज्ञैरूह्यहेतत्यम् । एवं ततः पूर्वेष्वपि निरूपितमुपनयनम् ॥१०॥ अथाध्ययनविधिः—* **उपेतस्याचार्यकुले ब्रह्मचारिवासः** ॥ ११ ॥ एवं यथाविध्युपेतस्य ब्रह्मचारिणस्तत आचार्यकुले वासो भवति । ब्रह्म वेदस्तदर्थं व्रतं चरतीति ब्रह्मचारी । अध्ययनाङ्गानि व्रतानि चरता आचार्यकुले वस्तव्यमित्युक्तं भवति ॥११॥तत्रकालः—* **अष्टाचत्वारिंशद्वर्षाणि** ॥ १२ ॥ चतुर्णां वेदानामध्ययनकाल एषः प्रतिवेदं द्वादश॥१२॥* **पादूनम्** ॥१३॥ स एव कालः पादून वा प्रत्येतव्यः पादेनोनं पादूनम् । पररूपं कतन्तवत् । षट्त्रिंशद्वर्षाणि । प्रतिवेदं नव ॥ १३ ।

*अर्धेन ॥ १४ ॥ ऊनमिति समस्तमप्यपेक्षते । चतुर्विंशतिः वर्षाणि । प्रतिवेदं षट् ॥ १४ ॥ *त्रिभिर्वा ॥ १५ ॥ पादैरूनमिति प्रकरणाद्गम्यते । द्वादशवर्षाणि । प्रतिवेदं त्रीणि ॥ १५ ॥ *द्वादशावरार्ध्यम् ॥ १६ ॥ अवरार्ध्यशब्दोऽवरमात्रेत्येतस्मिन्नर्थे वर्तते । 'द्वादशवर्षाणि अवरमात्रा यथा भवति तथा ब्रह्मचारिणा गुरुकुले वस्तव्यमित्युक्तम् । पूर्वेणैव सिद्धे यो 'ब्रह्मचार्यतिमेधावी तथा चतुरोऽपि वेदानितोऽल्पीयसा कालेन गृह्णाति तेनाप्येतावन्तं कालं गुरुकुले वस्तव्यम् । 'विद्यया स्नाती'त्येतस्मिन्पक्षे नातित्वरितेन स्नातव्यमित्येवमर्थमिदमारभ्यते । एतेन एकस्य वेदस्य त्रीणि वर्षाणि ब्रह्मचर्यमवश्य भावीत्यर्थात्सिद्धम् । मनुरप्याह—'षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैविद्यकं व्रतम् । तदर्धिकं पादिकं वा ग्रहणान्तिकमेव वा ॥' इति । त्रयाणां वेदानां षट्त्रिंशत् । एकैकस्य द्वादश । तदर्धिकं त्रयाणामष्टादश । एकैकस्य षट् । पादिकं वा त्रयाणां नव । एकैकस्य त्रीणि । ग्रहणान्तिकमेव वेति एकैकस्य त्रिभ्य ऊर्ध्वमनियमः । न प्रागित्यर्थो द्रष्टव्य ॥ १६ ॥ *न ब्रह्मचारिणो विद्यार्थस्य परोपवासोऽस्ति ॥ १७ ॥ ब्रह्मचारिविद्यार्थयोरर्थ उक्तः । यो ब्रह्मचारी विद्यार्थो भवति न तेन दिवसमात्रमपि परस्य समीपे वस्तव्यम् । आचार्यस्य समीप एव वस्तव्यमित्युक्तं भवति । विद्यार्थस्येति वचनात् नैष्ठिकस्य कदाचिदन्यत्र वासो न दोषः । यद्वा द्विर्भोजननिवृत्तिरेवोपवासः । परलोकार्थ उपवासः परोपवासः विद्यार्थस्य न भवति । नैष्ठिकस्य तु दोषः । अत्र पक्षे 'आहिताग्निरनड्वानि'ति विद्यार्थिब्रह्मचारिविषयः ॥ १७ ॥ *अथ ब्रह्मचर्यविधिः ॥ १८ ॥ ब्रह्म वेदस्तदर्थं यद्व्रतं चरितव्यं तद्ब्रह्मचर्यं तदिदानीं क्रियते ॥ १८ ॥ *आचार्याधीनस्स्यादन्यत्र पतनीयेभ्यः ॥ १९ ॥ आचार्याधीनो भवेत्युपनयनान्ते यत् संशासनं तत्सिद्धेवाचार्याधीनतानूद्यते । 'अन्यत्र पतनीयेभ्य' इति विशेषं वक्ष्यामीति । करणे प्रत्ययः । अमुमराति ब्राह्मणमित्थं व्यापादयेत्याचार्येण चोदितोऽप्येवमादि न कुर्यादिति ॥ १९ ॥ *हितकारी गुरोरप्रतिलोमयन्वाचा ॥ २० ॥ आचार्येण [illegible] युक्तोऽपि तस्मै हितमेव कुर्यात् वाचा प्रातिलोम्यमकुर्वन् ॥ २० ॥ *अधासन

**शायी** ॥ २१ ॥ शयनं शायः । कृत्यल्युटो बहुलमिति वचनात् घञ् । अ-
ध आसनशायो यस्य सः अधासनशायी । गुरुसन्निधावध आसीत अधश्च श-
यीतेत्युक्तं भवति । अधश्शब्दस्य सवर्णदीर्घश्छान्दसः । अपपाठो वा । तृ-
णेषु प्रस्तरेषु चासनशयने शिष्टाचारसिद्धे ॥ २१ ॥ * **नानुदेश्यं भुञ्जीत** ॥ २२ ॥
अनुदेश्यं श्राद्धार्थं देवतार्थं वा उद्दिष्टं न भुञ्जीत ॥ २२ ॥ * **तथा क्षारलवणम-
धुमांसानि** ॥ २३ ॥ न भुञ्जीतेत्येव । क्षारादीनि गृह्ये गतानि ॥ २३ ॥ * **अदि-
वास्वापी** ॥ २४ ॥ न दिवा स्वप्स्यात् ॥ २४ ॥ * **अगन्धसेवी** ॥ २५ ॥ च-
न्दनादीनि गन्धद्रव्याणि न सेवेत ॥ २५ ॥ * **मैथुनं न चरेत्** ॥ २६ ॥ "उप
चारक्रिया केली स्पर्शो भूषणवाससाम् । एकशय्यासनं क्रीडा चुम्बना-
लिङ्गने तथा ॥" इत्यादेस्सर्वस्योपलक्षणं मैथुनग्रहणम् ॥ २६ ॥
* **उत्सन्नश्लाघः** ॥ २७ ॥ श्लाघा शोभा सा उत्सन्ना यस्य स
उत्सन्नश्लाघः । एवंभूतो भवेत् ।* मृत्कल्कादिना मुखादिकं उज्ज्वलं न
कुर्यात् । इति ॥ २७ ॥ * **अङ्गानि न प्रक्षालयीत** ॥ २८ ॥ स्नानसमये आ-
मलकादिभिर्न क्षालयेत् ॥ २८ ॥ * **प्रक्षालयीत त्वशुचिलिप्तानि गुरोरस-
न्दर्शने** ॥ २९ ॥ यानि तु मूत्रपुरीषाद्यशुचिलिप्तान्यङ्गानि तानि कामं मृदा-
द्भिः प्रक्षालयेत् । यावद्गन्धो लेपश्चापैति । तदपि गुरोरसन्दर्शने यत्र स्थि-
तः गुरुं न पश्यति । अत्र आचार्यप्रकरणे गुरुग्रहणात् पित्रादीनामपि ग्रहण
म् ॥ २९ ॥ * **नाप्सु श्लाघमानः स्नायाद्यदि स्नायाद्दण्डवत्प्लवेत्** ॥ ३० ॥
स्नाने प्राप्ते न श्लाघमानः स्नायात् । किं तु दण्डवदाप्लवेदित्युक्तम् । न
स्नानीयैर्मलापकर्षणं श्लाघा क्रीडा वा जले । अपर आह—'अङ्गानि न प्र-
क्षालयीते'त्यासमावर्तनान्नित्यस्नानस्य प्रतिषेधः । 'प्रक्षालयीत त्वशुचिलिप्ता
नी'ति नैमित्तिकस्य विधिः । 'नाप्सु श्लाघमानः स्नाया'दिति तत्रैव
श्लाघाप्रतिषेध इति ॥ ३० ॥ * **जटिलः** ॥ ३१ ॥ सर्वानेव केशान् जटां कृत्वा
बिभृयात् ॥ ३१ ॥ * **शिखाजटो वा वापयेदितरान्** ॥ ३२ ॥ अथवा शिखा-
मेव जटां कृत्वा इतरान्केशान् वापयेत् नापितेन ॥ ३२ ॥ * **मौञ्जी मेखला
त्रिवृद्ब्राह्मणस्य शक्तिविषये दक्षिणावृत्तानाम्** ॥ ३३ ॥ मुञ्जानां वि-

* 'विना शिरसा सुखार्थमुष्णाम्ब्वादिना शरीरं न प्रक्षालये'दिति पाठान्तरम् ।

कारो मौञ्जी । त्रिवृत । त्रिगुणा । एवम्भूता ब्राह्मणस्य मेखला भवति । सा च शक्तिविषये शक्तौ सत्यां प्रदक्षिणावृत्तानां प्रदक्षिणावृत्तानां कर्तव्या । तद्धितार्थे गुणभूतानामपि मुञ्जानामेवैतद्विशेषणम् ॥३३॥* ज्या राजन्यस्य ॥३४॥ स्पष्टम् ॥३४॥* मौञ्जी वायोमिश्रा ॥३५॥ अथवा अयोमिश्रा कांचित्तु कालायसेनं बद्धा मौञ्जी मेखला भवति राजन्यस्य ॥३५॥*आवीसूत्रं वैश्यस्य ॥३६॥ अविरूर्णायुः कम्बलप्रकृतिः तत्सम्बन्धिनी ऊर्णा आवी तत्कृतं सूत्रं आवीसूत्रम् । सा मेखला वैश्यस्य भवति ॥३६॥*सैरी तामली वेत्येके ॥३७॥ सीरा वाहयोक्तं रज्जुः । तामलो मूलोदकसंज्ञो वृक्षः । तस्य त्वचा ग्रथिता तामली ॥३७॥* पालाशो दण्डो ब्राह्मणस्य नैयग्रोधस्कन्धजोऽवाङ्ग्रो[1] राजन्यस्य बादर औदुम्बरो वा वैश्यस्य वार्क्षो दण्ड इत्यवर्णसंयोगेनैक[2] उपदिशन्ति ॥३८॥ पालाशो दण्ड इत्यादि गृह्ये गतम् ॥३८॥*वासः ॥३९॥ वक्ष्यते कौपीनमाच्छाद्यते येन तद्वासः । तद्वक्ष्यते ॥३९॥* शाणीक्षौमाजिनानि ॥४०॥ शाणस्य विकारः शाणी पटी । क्षुमा अतसी तस्या विकारः क्षौमम् । श्वेतपट्टाख्यवासोविशेष इत्यन्ये । अजिनं यस्य कस्यचिन्मेध्यस्य पशोः । त्रीण्येतानि वर्णानुपूर्व्येण वासांसि ॥४०॥* काषायं चैके वस्त्रमुपदिशन्ति ॥४१॥ एके आचार्या वस्त्रं त्वचोऽर्थाच्छाद्यमुपदिशन्ति । वस्त्रं कार्पासम् । काषायेण रक्तम् । ब्राह्मणस्येत्यर्थाद्गम्यते । इतरयोर्वक्ष्यमाणत्वात् ॥४१॥

इति द्वितीया खण्डिका ॥ प्र०१ प०१ ख० २ ॥

माञ्जिष्ठं राजन्यस्य ॥ १ ॥ माञ्जिष्ठया रक्तं माञ्जिष्ठम् ॥१॥ हारिद्रं वैश्यस्य ॥ २ ॥ हरिद्रया रक्तं हारिद्रम् ॥२॥ हारिणमैणेयं वा कृष्णं ब्राह्मणस्य ॥ ३ ॥ एतान्युत्तरीयाणि । 'बस्ताजिन'मिति वक्ष्यमाणत्वात् इहाप्यजिनमिति गम्यते । 'अजिनमुत्तरमुत्तरये'त्युपनयने यदजिनमुक्तं धार्यं तद्धारणं ब्राह्मणस्य । हरिणो मृगस्तस्य विकारः हारिणम् । ऐणेयं वा कृ-

---

1 अवाङ्ग्र = 'अवाचीनमग्रं यस्य दण्डस्य' इति तात्पर्यदर्शने व्याख्यातम् ।

2 अवर्णसंयोगेन = सर्वेषां वर्णानामविशेषेण इत्यर्थः ।

ष्णम् । एणी मृगी तस्या विकार ऐणेयम् । एण्या ढञ् । द्विविधा एणाः । कृष्णाश्च गौराश्च । अतो विशेष्यते कृष्णमैणेयमिति ॥३॥ अस्मिन् पक्षे विशेषमाह — *** कृष्णं चेदनुपस्तीर्णासनशायी स्यात्** ॥ ४ ॥ कृष्ण चेद्बिभृयात् न हारिणं ततस्तस्मिन्ननुपस्तीर्णे नासीत न च शयीत । अयं तावदर्थः । शब्दनिर्वाह 'स्त्वधासनशायी'त्यत्र कृतः ॥४॥ * **रौरवं राजन्यस्य** ॥ ५ ॥ रुरुर्बिन्दुमान्मृग ॥ ५ ॥ * **बस्ताजिनं वैश्यस्य** ॥ ६ ॥ बस्तश्छागः ॥ ६ ॥ * **आविकं सार्ववर्णिकम्** ॥ ७ ॥ अविरूर्णायुः । स एवाविकः । तस्य चर्माविकं तत्सर्वेषामेव वर्णानाम् । अस्य हारिणादिभिर्विकल्पः ॥७॥ * **कम्बलश्च** ॥ ८ ॥ अयमप्याविक एव । प्रावरणमेव सर्वेषाम् ॥८॥ 'काषायं चैके वस्त्रमुपदिशन्ती'त्यारभ्य वासांसि अजिनानि च विहितानि । तत्र कामवशेन विशेषमाह— ***ब्रह्मवृद्धिमिच्छन्नजिनान्येव वसीत क्षत्रवृद्धिमिच्छन्वस्त्राण्येवोभयवृद्धिमिच्छन्नुभयमिति हि ब्राह्मणम्** ॥ ९ ॥ ब्रह्मवृद्धिः ब्राह्मणवृद्धिः क्षत्रवृद्धिः क्षत्रियवृद्धिः ॥ ९ ॥ अथ स्वपक्षमाह— *** अजिनं त्वेवोत्तरं धारयेत्** ॥ १० ॥ उत्तरमुत्तरीयम् । तदजिनमेव धारयेत् ॥ १० ॥ * **अनृत्तदर्शी** ॥ ११ ॥ नृत्त न पश्येत् ॥ ११ ॥ * **सभाः समाजांश्चागन्ता** ॥ १२ ॥ द्यूतादिस्थानं सभा । उत्सवादिषु समवायः समाजः । तान्सभास्समाजांश्च ताच्छील्येन न गच्छेत् । यदृच्छया गमने न दोषः ॥ १२ ॥ * **अजनवादशीलः** ॥ १३ ॥ जनवादः परिवादः लोकवार्ता वा तच्छीलो न स्यात् ॥ ॥ १३ ॥ * **रहःशीलः** ॥ १४ ॥ सति निभवे रहःशील स्यात् ॥ १४ ॥ ***गुरोरुदाचारेष्वकर्ता स्वैरिकर्माणि** ॥ १५ ॥ येषु प्रदेशेषु गुरुरुदाचरति पौनःपुन्येन चरति तेषु स्वैरिकर्माणि मूत्रप्रसाधनादीनि न कुर्यात् ॥ १५ ॥ ***स्त्रीभिर्यावदर्थसम्भाषी** ॥ १६ ॥ स्त्रीभिस्सह यावत्प्रयोजनं तावदेव सम्भाषेत । न प्रसक्तानुप्रसक्तमतिचिरम् । 'बलवानिन्द्रियग्रामो विद्वांसमपि कर्षती'ति । अतिबालाभिरतिवृद्धाभिश्च न दोषः ॥ १६ ॥ * **मृदुः** ॥ १७ ॥ क्षमावान् ॥ १७ ॥ * **शान्तः** ॥ १८ ॥ इन्द्रियाणामसद्विषये प्रवृत्त्यभावः शमः । तद्वान् शान्तः ॥ १८ ॥ * **दान्तः** ॥ १९ ॥ विहितेषु कर्मस्वग्लानिर्दमः । तद्वान् दान्तः ॥ १९ ॥ * **ह्रीमान्** ॥ २० ॥ ह्रीर्लज्जा ॥

२० ॥ *दृढधृतिः ॥ २१ ॥ लोभे नष्टे मृते वा धृतावेवावस्थितः स्यात्, न हृष्येत् न विषीदेत् ॥ २१ ॥ *अग्लास्नुः ॥ २२ ॥ उत्साहसम्पन्नः । ग्लाजिस्थश्च स्नुः । अत्रानुस्वारः छान्दसोऽपपाठो वा ॥ २२ ॥ * अक्रोधनः ॥ २३ ॥ न कस्मैचिदपि कुप्येत् ॥ २३ ॥ * अनसूयुः ॥ २४ ॥ परभाग्यानुसन्तापः असूया । तच्छीलो न स्यात् ॥ २४ ॥ *सर्वं लाभमाहरन् गुरवे सायं प्रातरमत्रेण भिक्षाचर्यं चरेद्भिक्षमाणोऽन्यत्रापपात्रेभ्योऽभिशस्ताच्च ॥ २५ ॥ अपपात्राः प्रतिलोमाः रजकादयः । अपगतानि हि तेषां पात्राणि पाकार्थानि चतुर्भिर्वर्णैस्सह । अभिशस्तान्वक्ष्य'त्यथ पतनीयानी'त्यादिना । तानुभयान्वर्जयित्वा अन्यत्र भिक्षेत । भिक्षमाणः सर्वं लाभं यच्च यावच्च लब्धं गोहिरण्यादि तत्सर्वं गुरवे आहरेत् । एवं अहरहः कुर्वन् सायं प्रातरमत्रेण न हस्तादिना भिक्षाचर्यं भिक्षाचरणं चरेत् कुर्यात् । 'सायं प्रात' रिति वचनान्न सायं गृहीतेन प्रातराशः नापि प्रातर्गृहीतेन सायमाशः ॥ २५ ॥ अथ भिक्षाप्रत्याख्यानं निन्दितुं ब्राह्मणमाकृष्यते—* स्त्रीणां प्रत्याचक्षाणानां समाहितो ब्रह्मचारीष्टं दत्तं हुतं प्रजां पशून्ब्रह्मवर्चसमन्नाद्यं वृङ्क्ते । तस्मादु ह वै ब्रह्मचारिसङ्घं चरन्तं न प्रत्याचक्षीतापि हैष्वेवंविध एवंव्रतः स्यादिति हि ब्राह्मणम् ॥ २६ ॥ व्याख्यातः समाहितः । समाहितो ब्रह्मचारी याभिः भिक्षा प्रत्याख्यायते तासां प्रत्याचक्षाणानां स्त्रीणामिष्टं यागैरार्जितं धर्मं दत्तं दानेनार्जितं धर्मं हुतं दर्विहोमैश्च गार्ह्यैरार्जितं सर्वमेव धर्मं वृङ्क्ते आच्छिनत्ति । यस्मादेवं तस्मात् ब्रह्मचारिसङ्घं चरन्तं न प्रत्याचक्षीत । उह वा इति निपातौ वाक्यालङ्कारार्थौ । अपि ह शब्दौ कदाचिदित्येतमर्थं द्योतयतः । एषु सङ्घीभूतेषु ब्रह्मचारिषु कदाचिदेवंविधः समाहित एवंव्रतः 'अथ ब्रह्मचर्यविधि'रित्यारभ्य यान्युक्तानि तद्वान् ब्रह्मचारी स्यात् । सम्भावने लिङ् । सम्भवेत् । तस्मान्न प्रत्याचक्षीतेत्येवं ब्राह्मणं भवतीति ॥ २६ ॥ *नानुमानेन. भैक्षमुच्छिष्टं दृष्टश्रुताभ्यां तु ॥ २७ ॥ भिक्षाणां समूहो भैक्षम् । न तल्लिङ्गाभासेनोच्छिष्टं मन्तव्यम् । किं तु दृष्टश्रुताभ्यामेव । दृष्टमात्मनः प्रत्यक्षम् । श्रुतमाप्तोपदेशः ताभ्यामेव तदुच्छिष्टमवगन्तव्यम् । अयमंशः प्राप्तानुवादः पूर्वमंशं

विधातुम्। यथा 'नानुवषट्करोत्यपि वोपांश्वनुवषट्कुर्वीत्। इति॥२७॥ ***भवत्पूर्वया ब्राह्मणो भिक्षेत** ॥२८॥ ब्राह्मणो ब्रह्मचारी भवत्पूर्वया वाचा भिक्षेत भिक्षां याचेत 'भवति भिक्षां देही'ति ॥२८॥ ***भवन्मध्यया राजन्यः** ॥२९॥ 'भिक्षां भवति देही'ति राजन्यो भिक्षेत ॥२९॥ ***भवदन्त्यया वैश्यः** ॥३०॥ 'भिक्षां देहि भवती'ति॥३०॥ सर्वं लाभमाहरेन् गुरव इत्युक्तम्। अथाहृतं किं कर्तव्यमित्यत आह—***तत्समाहृत्योपनिधायाचार्याय प्रब्रूयात्** ॥३१॥ तत्र भैक्षं समाहृत्य समीपे निधायाचार्याय प्रब्रूयात् इत्थमित्थमाहृतमिति ॥३१॥***तेन प्रदिष्टं भुञ्जीत** ॥ ३२ ॥ तेन आचार्येण प्रदिष्ट सोम्य० त्वमेव भुङ्क्ष्वेत्युक्तं भुञ्जीत ॥ ३२ ॥***विप्रवासे गुरोराचार्यकुलाय** ॥ ३३ ॥ यदि गुरुर्विप्रोषितोऽसन्निहितः स्यात तत् आचार्यकुलायाचार्यस्य यत्कुलं भार्यापुत्रादि तस्मै ब्रूयात् । तेन प्रदिष्टं भुञ्जीत ॥ ३३ ॥***तैर्विप्रवासेऽन्येभ्योऽपि श्रोत्रियेभ्यः** ॥३४॥ तैस्स्वकुलैस्सह विप्रवासे अन्येभ्योऽपि श्रोत्रियेभ्यः प्रब्रूयात् । तैः प्रदिष्टं भुञ्जीतेति विपरिणामेनान्वयः । गौतमोऽप्याह—'असन्निधौ तद्भार्यापुत्राय ब्रह्मचारिभिः' इति ॥३४॥***नात्मप्रयोजनश्चरेत्** ॥ ३५ ॥ आत्मा प्रयोजनं प्रयोजकः यस्य स आत्मप्रयोजन । एवं भिक्षां न चरेत् आत्मार्थं न चरेदित्यर्थः । अस्य प्रयोजनं यदा श्रोत्रिया अपि न लभ्यन्ते तदा 'प्रोषितो भैक्षादग्नौ कृत्वा भुञ्जीते'ति वक्ष्यमाणमप्रोषितेऽपि यथा स्यादिति ॥ ३५ ॥***भुक्त्वा स्वयममत्रं प्रक्षालयीत** ॥३६ ॥ अमत्रं भोजनपात्रम्। भुक्त्वेति सन्निधानात् तत्स्वयमेव प्रक्षालयीत प्रक्षालयेत् । भिक्षापात्रस्यान्येन प्रक्षालने न दोषः। उभयोरपि पात्रयोरित्यन्ये ॥३६॥***न चोच्छिष्टं कुर्यात्** ॥३७॥ यावच्छक्नोति भोक्तु तावदेव भोजनपात्रे कृत्वा भुञ्जीत ॥ ३७ ॥***अशक्तौ भूमौ निखनेत्** ॥ ३८॥ भोजने प्रवृत्तो यदि तावद्भोक्तुं न शक्नुयात् तदा तदन्नं भूमौ निखनेत् ॥ ३८ ॥***अप्सु वा प्रवेशयेत्** ॥ ३९ ॥ प्रक्षिपेत् ॥ ३९ ॥***आर्याय वा पर्यवदध्यात्** ॥४०॥ आर्यस्त्रैवर्णिकः तस्मै अनुपनीताय पर्यवदध्यात् सर्वमेकस्मिन्पात्रेऽवधाय तत्समीपे भूमौ स्थापयेत् ॥ ४० ॥***अन्तर्धिने वा शूद्राय** ॥४१॥ अन्त-

धीनमन्तर्धिः सोऽस्यास्तीति । व्रीह्यादिभ्यादिनिः । अन्तर्धी दासः । अन्तर्हितं हि तस्य शूद्रत्वम् । आशौचेषु स्वामितुल्यत्वात् । प्रकरणादाचार्यस्येति गम्यते । आचार्यदासाय वा शूद्राय पर्यवदध्यात् ॥ ४१ ॥ *प्रोषितो भैक्षादग्नौ कृत्वा भुञ्जीत ॥ ४२ ॥ यदि शिष्य आचार्यार्थमात्मार्थं वा प्रोषितः स्यात् । तदा भैक्षात् किञ्चिदादायाग्नौ कृत्वा प्रक्षिप्य शेषं भुञ्जीत । श्रोत्रियाणां सद्भावे असद्भावे च 'अन्येभ्योऽपि श्रोत्रियेभ्य' इत्येतत्र भवति । यदि स्यात्तत्रैवायं ब्रूया'त्तदभावेऽग्नौ कृत्वा भुञ्जीते'ति । यद्यपि तत्राचार्यस्य प्रवासः तथापि न्यायसाम्याच्छिष्यस्यापि विप्रवासो भविष्यति ॥ ४२ ॥ अथ ब्रह्मचारिणो यज्ञ विधातु हविरादीनि सम्पादयति—*भैक्षं हविषा संस्तुतं तत्राचार्यो देवतार्थे ॥ ४३ ॥ भैक्षं हविष्येन संस्तुतं कीर्तितम् । तत्र तस्मिन् हविषि आचार्यो देवतार्थे देवताकार्ये तत्प्रीत्यर्थत्वात्तस्य ॥ ४३ ॥ *आहवनीयार्थे च ॥ ४४ ॥ तस्य जठराग्नौ हूयमानत्वात् ॥ ४४ ॥ *तं भोजयित्वा ॥ ४५ ॥ गतम् ॥ ४५ ॥

॥ इति तृतीया खण्डिका ॥ प्र० १ प० १ ख० ३ ॥

---

*यदुच्छिष्टं प्राश्नाति ॥ १ ॥ अनुवादेषु सर्वत्र विधिः कल्प्यते । तं भोजयेत् । भोजयित्वा तस्योच्छिष्टं प्राश्नीयात् प्राश्नाति । अकारपाठश्छान्दसः । शादिति चुत्वप्रतिषेधात् ॥ १ ॥ *हविरुच्छिष्टमेव तत् ॥ २ ॥ इडाभक्षणादिस्थानीयमित्यर्थः ॥ २ ॥ *यदन्यानि द्रव्याणि यथालाभमुपहरति दक्षिणा एव ताः ॥ ३ ॥ यदन्यानि द्रव्याणि गवादीनि भिक्षाचरणे लब्धानि समिदादीनि च स्वयमाहृतानि यथालाभमुपहरति दक्षिणा एव ताः । दक्षिणासामानाधिकरण्यात्ता इत्युक्तम् ॥ ३ ॥ *स एष ब्रह्मचारिणो यज्ञो नित्यप्रततः ॥ ४ ॥ स एष एवंभूतो यज्ञः ब्रह्मचारिणा नित्यं प्रतायते । एवं कुर्वता ब्रह्मचारिणा यज्ञ एव नित्यं क्रियत इत्यर्थः ॥ ४ ॥ *न चास्मै श्रुतिविप्रतिषिद्धमुच्छिष्टं दद्यात् ॥ ५ ॥ अस्मै शिष्याय आचार्यः श्रुतिविप्रतिषिद्धमुच्छिष्टं न दद्यात् । शास्त्रविप्रतिषिद्धमुच्छिष्टं न दद्यात् ॥ ५ ॥ किं पुनस्तत्—*यथा क्षारलवणमधुमांसानीति ॥ ६ ॥

यथेतिवचनात् 'श्रुतिविप्रतिषिद्ध'मिति लक्षणतः प्रतिषेधाच्च क्षारादिग्रहणमेवंविधस्योपलक्षणम् ॥ ६ ॥ * **एतेनान्ये नियमा व्याख्याताः** ॥ ७ ॥ अभ्यङ्गशेषो गन्धशेषो माल्यशेष इत्यादयो ब्रह्मचारिणः प्रतिषिद्धाः आचार्येण न देया इत्युक्तं भवति ॥ ७ ॥ केचित्तु श्रुतिविप्रतिषिद्धमाचार्यशेषमुपयुञ्जाना दृश्यन्ते पूर्वैः पूर्वैः आचारः प्रमाणमिति वदन्तः । तान्निराकरोति—* **श्रुतिर्हि बलीयस्यानुमानिकादाचारात्** ॥ ८ ॥ अनुमानाय प्रभवतीत्यानुमानिकः । आचाराद्धि श्रुतिः स्मृतिर्वाऽनुमीयते । तस्मादानुमानिकादाचारात्प्रत्यक्षश्रुतिर्बलीयसी । तद्विरोधे तु नानुमातुं शक्यते । अनुमानबाधित इति न्यायात् । एवं च व्रतता ब्रह्मचारिणः क्षारलवणादिप्रतिषेधः प्रत्यक्षब्राह्मणमूल इति दर्शितं भवति । यद्यपि क्षारादिप्रतिषेधश्रुतेरुच्छिष्टव्यतिरिक्तो विषयः सम्भवति । तथापि सङ्कोचोऽपि तस्या अविशेषप्रवृत्ताया आनुमानिकादाचारादयुक्तः ॥ ८ ॥ ननु परस्परविरुद्धा अपि श्रुतय उपलभ्यन्ते 'गृह्णाति न गृह्णाती'ति । तत्किमाचारात् सङ्कोचिका श्रुतिर्नानुमीयते । अत आह —* **दृश्यते चापि प्रवृत्तिकारणम्** ॥ ९ ॥ स्यादेवं अयमाचारो गृह्यमाणकारणः स्यात् । गृह्यते तु कारणं किं तत् ॥ ९ ॥ * **प्रीतिर्ह्युपलभ्यते** ॥ १० ॥ क्षारादिभोजने भुञ्जानस्य प्रीतिर्भवति । ततश्च प्रीत्युपलब्धितः प्रवृत्तिर्न तत्र शास्त्रमस्ति । तदनुवर्तमानो नरकाय राध्यतीति न्यायान्न सङ्कोचिका श्रुतिरनुमीयत इति ॥ १० ॥ * **पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोक्तव्यम्** ॥ ११ ॥ स्पष्टम् ॥ ११ ॥ ***धर्मविप्रतिपत्तावभोज्यम्** ॥ १२ ॥ यदि तयोर्धर्माद्विप्रतिपत्तिरपायो भवति ततो न भोज्यम् । यद्वा भुञ्जानस्य ब्रह्मचारिणो धर्मविप्रतिषेधो भवति मधुमांसादिमिश्रत्वेन ततो न भोज्यमिति ॥ १२ ॥ * **सायं प्रातरुदकुम्भमाहरेत्** ॥ १३ ॥ आचार्यस्य स्नानपानाद्यर्थम् ॥ १३ ॥ ***सदारण्यादेधानाहृत्याधो निदध्यात्** ॥ १४ ॥ सदा प्रत्यहमरण्यात् न विप्रादिगृहात् एधान् काष्ठादीनि आचार्यगृहे पाकाद्यर्थमाहरेत् आहृत्य चाधो निदध्यात् । अधोनिधानमाचार्यपुत्रादिषु पतनशङ्कया । अपर आह—आत्मनस्समिदाधानार्थमिध्माहरणमिति । उक्तं गृह्ये —'एवमन्यस्मिन्नपि सदारण्यादेधानाहृत्य' इति

तदनुवादेनाधोनिधानम॒ विधीयते दृष्टार्थमदृष्टार्थं वेति ॥ १४ ॥ *नास्तमिते समिद्धारो गच्छेत् ॥१५॥ * अस्तमिते आदित्ये समिध आहर्तुं न गच्छेत् । चोरव्याघ्रादिसम्भवात् । 'समिद्धार' इति 'अण् कर्मणि च' ति तुमनर्थे अणूप्रत्ययः ॥ १५ ॥ *अग्निमिद्धा परिसमूह्य समिध आदध्यात्सायं प्रातर्यथोपदेशम् ॥ १६ ॥ परिसमूहनं परितो मार्जनम् । विप्रकीर्णस्याग्नेरेकीकरणमित्यन्ये । यथोपदेशं यथा गृह्य उक्तं, तथा समिध आदध्यात् ॥१६॥ गृह्ये विहितमपि समिदाधानं विधीयते सर्वाचरणार्थम् । सायं प्रातरित्यादिकान्विशेषान्वक्ष्यामीति चाह—*सायमेवाग्निपूजेत्येके ॥ १७ ॥ एके आचार्यास्सायमेवाग्निपूजा कार्या, न प्रातरिति मन्यन्ते ॥ १७ ॥ *समिद्धमग्निं पाणिना परिसमूहेन्न समूहन्या ॥ १८ ॥ समिदाधाने समिद्धमग्निं पाणिनैव परिसमूहेत् । न समूहन्या । समूहनी सम्मार्जनी दर्भनिर्मिता वेदाकृतिः । आचारात् ॥१८॥ *प्राक्तु याथाकामी ॥१९॥ प्राक्समिदाधानात् परिसमूहने याथाकामी 'भवति' यथाकामस्य भावो याथाकामी । ष्यञ् षित्त्वादीकारः॥१९॥*नाग्न्युदकशेषेण वृथाकर्माणि कुर्वीताचामेद्वा॥२०॥अग्निपरिचर्यायां परिसमूहने परिषचने च यदुपयुक्तमुदकं, तच्छेषेण वृथाकर्माणि अदृष्टप्रयोजनरहितानि पादप्रक्षालनादीनि न कुर्वीत। नाप्याचामेत् ।अवृथाकर्मत्वादस्य पुनःप्रतिषेधः ॥ २० ॥ * पाणिसंक्षुब्धेनोदकेनैकपाण्यावर्जितेन च नाचामेत् ॥२१॥ 'पाणिसंक्षुब्ध' पाणिना संक्षोभितं तेनोदकेन नाचामेत्। इदं तटाकादिषु स्वयमाचमने । यदा पर आचामयति, तदा एकेन पाणिना यदावर्जितं तेन नाचामेत्। किं तु उभाभ्यां हस्ताभ्यां करकादि गृहीत्वा यदावर्जितमुदकं, तेनैवाचामेत् । एवं च स्वयं वामहस्तावर्जितेनापि नाचामेत् ( अलाबुपात्रेण नालिकेरजेन वैणवेन चर्ममयेन ताम्रमयेन वा पात्रेणाचमनमाचरन्ति शिष्टाः ) ॥२१॥ *स्वप्नं च वर्जयेत् ॥२२॥ पूर्वं 'मदिवास्वापी'त्यनेन दिवास्वप्नप्रतिषेधः । अनेन रात्रावपि यावदाचार्यो न स्वपिति, तावन्त कालं स्वापः प्रतिषिध्यते। स्वप्नकथनं वर्जयेदित्येके ॥ २२ ॥ अथाहरहराचार्यं गोपायेद्धर्मार्थयुक्तैः कर्मभिः ॥२३॥ अथ स्वप्नस्य प्रकृतत्वात् स्वप्नानन्तरं ब्राह्मे मुहूर्ते उत्थायेत्यर्थः । अहरहः नित्यमाचार्यं

गोपायेत् रक्षेत् । किं दण्डादि गृहीत्वा नेत्याह—धर्मार्थयुक्तैः कर्मभिः । धर्मयुक्तानि कर्माणि समित्कुशपुष्पाहरणादीनि अर्थयुक्तानि युग्यघासाहरणादीनि ॥ २३ ॥ *स गुप्त्वा संविशन्ब्रूयाद्धर्मगोपायमाजूगुपमहमिति ॥२४॥ स ब्रह्मचारी न्याय्यादुत्थानात् न्याय्याच्च संवेशनात् एवमाचार्यं गुप्त्वा संविशन् शयनं भजन् 'धर्मगोपाय माजूगुपमह' मितीमं मन्त्रं ब्रूयात् । धर्मं गोपायतीति धर्मगोपायः आचार्यः तमहमाजूगुपमाभिमुख्येन रक्षितवानस्मि, इदानीं तु संविशामीति मन्त्रार्थः । अपर आहु—हे धर्म मा मां गोपाय रक्ष आजूगुपमहमाचार्यमेतावन्तं कालमिति ॥२४॥ *प्रमादादाचार्यस्य बुद्धिपूर्वं वा नियमातिक्रमं रहसि बोधयेत् ॥ २५ ॥ प्रमादोऽनवधानम् । प्रमादात् बुद्धिपूर्वं वा आचार्यस्य यो नियमातिक्रमस्तं रहसि बोधयेत् । इत्थमयं नियमः पूज्यपादैरतिक्रम्यत इति ॥ २५ ॥ * अनिवृत्तौ स्वयं कर्माण्यारभेत ॥ २६ ॥ यदि बोधितोऽप्याचार्यस्ततो न निवर्तते, ततः स्वयमेव कर्तव्यानि ब्रह्मयज्ञादीनि कर्माण्यारभेत कुर्यात् ॥ २६ ॥ * निवर्तयेद्वा ॥ २७ ॥ प्रसह्य वा स्वयं निवर्तयेत् । पित्रादिभिर्वा निवर्तयेत् ॥ २७ ॥ *अथ यः पूर्वोत्थायी जघन्यसंवेशी तमाहुर्न स्वपितीति ॥ २८ ॥ यः पूर्वमाचार्यादुत्तिष्ठति प्रतिबुध्यते । जघन्यशब्दः पश्चादर्थे । जघन्यश्च संविशति, त ब्रह्मचारिणं न स्वपितीति धर्मज्ञा आहुः । प्रयोजनमुपनयने 'मा सुषुप्था' इति संशासनस्यायमर्थः । न स्वापस्यात्यन्ताभाव इति । अथशब्दश्च वाक्योपक्रमे ॥ २८ ॥ *स य एवं प्रणिहितात्मा ब्रह्मचार्यत्रैवास्य सर्वाणि कर्माणि फलवन्त्यवाप्तानि भवन्ति यान्यपि गृहमेधे ॥ २९ ॥ 'आचार्याधीनः स्या' दित्यारभ्य यस्य नियमा उक्ताः, स ब्रह्मचारी, एवमुक्तेन प्रकारेण। प्रकर्षेण निहित आचार्यकुले स्थापित आत्मा येन स तथोक्तः । प्रकर्षश्च आत्मनस्तत्रैव शरीरन्यासः । वक्ष्यति च 'आचार्यकुले शरीरन्यास' इति । अस्यैवंविधस्य ब्रह्मचारिणः अत्रैव ब्रह्मचर्याश्रमे सर्वाणि फलवन्ति ज्योतिष्टोमादीनि कर्माणि अवाप्तानि भवन्ति । तत्फलावाप्तिरेव तदवाप्तिः । यान्य-

पि कर्माणि गृहमेधे गृह्यशास्त्रे विवाहाद्यष्टकान्तानि, तान्यवाप्तानि भवन्ति । तदेवं नैष्ठिकब्रह्मचारिविषयमिदं सूत्रम् ॥ २९ ॥

॥ इति तुरीया खण्डिका ॥ प्र०१-प०१-ख०४ ॥

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां प्रथमप्रश्ने प्रथमः पटलः ॥ १ ॥

---

*नियमेषु तपश्शब्दः ॥ १ ॥ 'आचार्याधीनः स्या'दित्यादयो ये नियमाः अस्मिन्ब्रह्मचारिप्रकरणे, तपश्शब्दस्तेषु द्रष्टव्यः, न कृच्छ्रादिषु ॥ १ ॥ *तदतिक्रमे विद्याकर्म निःस्रवति ब्रह्म सहापत्यादेतस्मात् ॥ २ ॥ तेषां नियमानामतिक्रमे विद्याकर्म विद्याग्रहणं ब्रह्म निःस्रवति गृहीतं वेदं निःस्रावयति । कुतः, एतस्मान्नियमातिक्रमेणाध्येतुः पुरुषात् । न केवलात् । किं तर्हि, सहापत्यात् अपत्येन सह वर्तत इति सहापत्यः । 'वोपसर्जनस्ये'ति समासाभावे रूपम् । अपत्यादपि ब्रह्म निःसारयति । यद्यप्यपत्यं नियमातिक्रमि न भवति, तथापि पितृदोषादेव ततोऽपि ब्रह्म निस्सारयति । नियमातिक्रमेण विद्याग्रहणं कुर्वतः पुरुषात् सहापत्यात् गृहीतं ब्रह्म निस्सरतीति ब्रह्मयज्ञादिषूपयुज्यमानमप्यकिञ्चित्करं भवतीत्यर्थो विवक्षितः । स्रवतेः सकर्मप्रयोगो भाष्ये दृष्टः । 'स्रवत्युदकं कुण्डिकेति । (विसृजति गम्यत इति)' । अपर आह—तदतिक्रमे विद्याकर्म निस्स्रवतीति नियमातिक्रमेण विद्याग्रहणं न कर्तव्यम् । कुतः, निस्स्रवति ब्रह्म निस्सारयतीत्यर्थः, शेषं समानमिति । विद्याकर्म निस्स्रवति ब्रह्म च निस्स्रवतीत्यन्ये । कुर्वत इति वाध्याहार्यम् । तदतिक्रमेण विद्याकर्म कुर्वतो ब्रह्म निस्स्रवतीति ॥ २ ॥ न केवलमकिञ्चित्करं नियमातिक्रमेण विद्याग्रहणम् । प्रत्युतानर्थकारीत्याह—*कर्तपत्यमनायुष्यं च ॥ ३ ॥ कर्त इति श्वभ्राभिधायी नरक उपलक्ष्यते । पतत्यनेनेति पत्यम् । एवंभूतं विद्याग्रहणं नरकपातहेतुर्भवति । अनायुष्यं च अनायुष्करं च ॥ ३ ॥ तस्मादृषयोऽवरेषु न जायन्ते नियमातिक्रमात् ॥ ४ ॥ अत एवावरेषु अर्वाचीनेषु कलियु-

गर्वातिषु ऋषयो न जायन्ते मन्त्रदृशो न भवन्ति । नियमातिक्रमस्येदानी-मवर्जनीयत्वात् ॥४॥ कथं तर्ह्यद्यत्वे अतिक्रान्तोऽपि नियमानल्पेनैव यत्नेन चतुरो गृह्णाति वेदान् युगान्तरे सम्यगनुष्ठितस्य नियमकर्मणः फलविशेषे-णेत्याह—*श्रुतर्षयस्तु भवन्ति केचित्कर्मफलशेषेण पुनःसम्भवे ॥५॥ पुनस्सम्भवः पुनर्जन्म ॥५॥ अत्रोदाहरणम्—* यथा श्वेतकेतुः ॥६॥ श्वे-तकेतुर्ह्यल्पेनैव कालेन चतुरो वेदाञ्जग्राह । तथा छान्दोग्यम्—"श्वेतकेतुर्हारु-णेय आस तं ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्मत्कुलीनोऽन-नूच्य ब्रह्मबन्धुरिव भवतीति । स ह द्वादशवर्ष उपेत्य चतुर्विंशतिवर्षस्सर्वान्वे-दानधीत्य महामना अनूचानमानिस्स्तब्ध एयाये"ति ॥६॥ एवं नियमातिक्रमे दोषमुक्त्वा तदनुष्ठाने सिद्धिमाह—*यत्किंच समाहितोऽब्रह्म प्याचार्या-दुपयुङ्क्ते ब्रह्मवदेव तस्मिन् फलं भवति ॥७॥ अब्रह्मपि अब्रह्मापि । प-ररूपम् । कतन्तवत् । अपेर्वा अकारलोपः । पिहितपिनद्धादिवत् । वेदव्य-तिरिक्तमपि यत्किञ्चित् विषमन्त्रादि समाहितो नियमवान् भूत्वा आचा-र्यादुपयुङ्क्ते गृह्णाति तस्मिन् वेदव्यतिरिक्ते ब्रह्मवदेव फलं भवति ॥ ७ ॥ निग्रहानुग्रहशक्तिरप्यस्य भवतीत्याह—* अथो यत्किञ्च मनसा वा-चा चक्षुषा वा सङ्कल्पयन्ध्यायत्याहाभिविपश्यति वा तथैव तद्भवती-त्युपदिशन्ति ॥८॥ अथो अपि च यत्किञ्च निग्रहात्मक वा सङ्कल्पयन् चिकीर्षन् मनसा निर्दयेन शिवेन वा ध्यायति इत्थमिदमस्यास्त्विति तथैव तद्भवति । तथा यत्किञ्च सङ्कल्पयन्वाचा घोरया मधुरया वा आह इत्थ-मिदमस्यास्त्विति तथैव तद्भवति । एवं यत्किञ्च सङ्कल्पयन् चक्षुषा घोरेण वा मैत्रेण वा अभिविपश्यति तथैव तद्भवतीत्युपदिशन्ति धर्मज्ञाः ॥८॥ अ-वश्यं धर्मयुक्तेनाध्येतव्यमित्युक्तम् । इदानीं ते धर्मा लक्षणतस्त्रिविधा इत्या-ह—* गुरुप्रसादनीयानि कर्माणि स्वस्त्ययनमध्ययनसंवृत्तिः ॥९॥ यैरनुष्ठितैः गुरुः प्रसीदति तानि गुरुप्रसादनीयानि पादप्रक्षालनादीनि । स्व-स्तीत्यविनाशिनाम । तत्प्राप्तिसाधनं स्वस्त्ययनम् । तच्च त्रिविधं दृष्टार्थमदृ-ष्टार्थमुभयार्थं चेति । दृष्टार्थं बाहुनदीतरणादिनिषेधः । अदृष्टार्थं क्षारादिनि-षेधः । उभयार्थं भिक्षाचरणादि । अध्ययनसंवृत्तिरधीतस्य वेदस्याभ्यासः ॥९॥

* इत्यतोऽन्यानि निवर्तन्ते ब्रह्मचारिणः कर्माणि ॥१०॥ इत्येतेभ्य अन्यानि कर्माणि निवर्तन्ते ब्रह्मचारिणो न कर्तव्यानीत्यर्थः॥१०॥ * स्वाध्यायधृग्धर्मरुचिस्तपस्व्यृजुर्मृदुः सिद्ध्यति ब्रह्मचारी ॥११॥ स्वाध्यायधृक् अधीतस्य स्वाध्यायस्य धारयिता अविस्मर्ता । धर्मे रुचिर्यस्य स धर्मरुचिः । तपस्वी नियमेषु तपश्शब्दः तद्वान् । ऋजुः अमायावी । मृदुः क्षमावान् । एवंभूतो ब्रह्मचारी सिद्ध्यति सिद्धीः प्राप्नोति । 'अथो यत्किञ्चमनसे'त्युक्ता सिद्धिः । अत्रोक्तानां पुनर्वचनमादरार्थम् । तदनुष्ठाने फलभूमा अतिक्रमे च दोषभूमेति तात्पर्यम् ॥११॥ * सदा महान्तमपररात्रमुत्थाय गुरोस्तिष्ठन्प्रातरभिवादमभिवादयीतासावहं भो इति ॥१२॥ सदा प्रतिदिनं महान्तमपररात्रं रात्रेः पश्चिमे याम उत्तिष्ठन् । उत्थाय च समीपे तिष्ठन् गुरोः प्रातरभिवादनमभिवादयीत । 'असावहं भो' इति ब्रुवन् । असावित्यत्र आत्मनो नामनिर्देशः । यथा 'अभिवादये यज्ञशर्माहं भो' इति ॥१२॥ * समानग्रामे च वसतामन्येषामपि वृद्धतराणां प्राक्प्रातराशात् ॥१३॥ अन्येषामप्याचार्यव्यतिरिक्तानाम् । प्राक्प्रातराशात् प्रातर्भोजनात्प्राक् प्रातरभिवादमभिवादयीत । ते चेत् समानग्रामे वसन्ति॥ १३ ॥ *प्रोष्य च समागमे ॥ १४ ॥ यदा स्वयं प्रोष्य समागतो भवति आचार्यादयो वा तदाप्यभिवादयीत । इदं नैमित्तिकम् । पूर्वं नित्यम् ॥ १४ ॥ अथ काम्यम्—* स्वर्गमायुश्चेप्सन् ॥ १५ ॥ अभिवादयीतेत्येव ॥ १५ ॥ अभिवादनप्रकारं वर्णानुपूर्व्येणाह—*दक्षिणं बाहुं श्रोत्रसमं प्रसार्य ब्राह्मणोऽभिवादयीतोरस्समं राजन्यो मध्यसमं वैश्यो नीचैश्शूद्रः ॥१६॥ प्राञ्जलिः ॥१७॥ ब्राह्मणोऽभिवादयमानः आत्मनो दक्षिणं बाहुं श्रोत्रसमं प्रसार्याभिवादयीत । उरस्समं राजन्यः । दक्षिणं प्रसार्याभिवादयीतेत्यत्रानुवर्तते । एवमुत्तरयोरपि । मध्यसममुदरसमम् । ऊरुसममित्यन्ये । नीचैः पादसमं शूद्रोऽभिवादयीत । प्राञ्जलिः यथा भवति तथा अभिवादयीत । अञ्जलिं कृत्वेत्यर्थः । प्राञ्जलिरिति युक्तः पाठः ॥१६॥ ॥ १७ ॥ *प्लावनं च नाम्नोऽभिवादनप्रत्यभिवादने च पूर्वेषां वर्णानाम् ॥१८॥ अभिवादनस्य यत्प्रत्यभिवादनं तत्राभिवादयितुर्नाम्नः प्लाव

नं कर्तव्यं प्लुतः कर्तव्य इत्यर्थः। पूर्वेषां वर्णानां शूद्रवाऽर्जितानामभिवादय-मानानाम्। 'प्रत्यभिवादेऽशूद्रे' इति पाणिनीयस्मृतिः। तत्र 'वाक्यस्य टे' रित्यनुवृत्तेः प्रत्यभिवादवाक्यस्यान्ते नामप्रयोगः तस्य टेः प्लुतः। 'आयुष्मान् भव सौम्ये'ति प्रयोक्तव्यम्। स्मृत्यन्तरवशान्नाम्नश्च पश्चादकारः। तथा च मनुः—"आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने। अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः ॥" इति ॥ 'आयुष्मान् भव सौम्य देवदत्त ३ अ' इति प्रयोगः। शम्भुर्विष्णुः पिनाकपाणिश्चक्रपाणिरित्यादीनां नाम्नां सम्बुद्धौ गुणे कृते 'एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ' इत्ययं विधिर्भवति। अन्ते अकारः। 'तयोर्य्वावचि संहितायाम्' इति यकारवकारौ च भवतः। शम्भा ३ व विष्णा ३ व। पिनाकपाणा ३ य। चक्रपाणा ३ य्। अत्र सूत्रे 'प्रत्यभिवादने चे'ति चकारस्यार्थं न पश्यामः। अपर आह—'अभिवादने प्रत्यभिवादने च प्लावन'मिति। अस्मिन्नपि पक्षे द्वन्द्वेनाभिहितत्वाच्चशब्दोऽनर्थक एव। अभिवादने च शास्त्रान्तरे न क्वापि प्लुतो विहितः। तस्मादनर्थक एव चकारः। अनर्थकाश्च निपाता बहुलं प्रयुज्यन्ते॥ १८॥ * **उदिते त्वादित्य आचार्येण समेत्योपसङ्ग्रहणम्** ॥ १९॥ उदिते त्वादित्ये आचार्येण अध्ययनार्थं समेत्य वक्ष्यमाणेन विधिनोपसङ्ग्रहं कुर्यात् ॥ १९॥ * **सदैवाभिवादनम्**॥ २०॥ अन्यदा सर्वदा पूर्वोक्तप्रकारेणाभिवादनमेव ॥ अयमनुवाद उत्तरविवक्षया ॥ २०॥ * **उपसंग्राह्य आचार्य इत्येके** ॥ २१॥ अभिवादनप्रसङ्गे सदैव उपसंग्राह्य आचार्य इत्येके मन्यन्ते ॥ २१॥ किमिदमुपसंग्रहणं तदाह— * **दक्षिणेन पाणिना दक्षिणं पादमधस्तादभ्यधिमृश्य सकुष्ठिकमुपसंगृह्णीयात्** ॥ २२ ॥ आत्मनो दक्षिणेन पाणिना आचार्यस्य दक्षिणं पादं अधस्तादभ्यधिमृश्य अधिशब्द उपरिभागे अधस्ताच्चोपरिष्टाच्चाभिमृश्य। सकुष्ठिकं सगुल्फम्। साङ्गुष्ठमित्यन्ये। उपसंगृह्णीयात्। इदमुपसंग्रहणम्। एवं कुर्यात् ॥ २२॥ * **उभाभ्यामेवोभावभिपीडयत उपसङ्ग्राह्या-वित्येके** ॥ २३॥ उभाभ्यां पाणिभ्यां उभावेवाचार्यस्य पादौ अभिपीडितो माणवकस्य उपसंग्राह्यावित्येके मन्यन्ते। अभिपीडयतइति कृत्यानां

कर्तरि वेति कर्तरि षष्ठी । अत्रमनुः—"व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः । सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥' इति ॥ २३ ॥ *सर्वाहं सुयुक्तोऽध्ययनादनन्तरोऽध्याये ॥२४॥ सर्वं च तदहश्च सर्वाहम् । 'राजाहस्सखिभ्यष्टच्' ।' 'अह्नोऽह्न एतेभ्य' इत्यह्लादेशः । 'अह्नोदन्तात्' दिति णत्वम् । 'अत्यन्तसंयोगे द्वितीया ।' सर्वाह्नं सदा सुयुक्तः समाहितः अनन्यचित्तः । अध्ययनादनन्तरः अन्तरयतीत्यन्तरः । अध्ययनाद्यथा आत्मानं नान्तरयति यथा अध्ययनं न विच्छिद्यते तथा स्यात् । अध्याये स्वाध्यायकाले । अध्याय इत्यनुवादः । 'मनसा चानध्याये' इति विशेषविधानात् । 'अध्याये'दिति प्रायेण पठन्ति । तत्र तकारोऽपपाठश्छान्दसो वा ॥ २४ ॥* तथा गुरुकर्मसु ॥ २५॥ गुरुकर्मसु च तथा स्यात् सुयुक्तोऽनन्तरश्च स्यात् ॥२५॥* मनसा चानध्याये ॥२६॥ अनध्यायकाले मनसा च अध्यायादनन्तरः स्यात् । सन्देहस्थानानि मनसा निरूपयेत् । अध्ययनविषयामेव चिन्तां कुर्यात् ॥२६॥* आहूताध्यायी च स्यात् ॥२७॥ आचार्येणाहूतस्सन्नधीयीत नाध्यापने स्वयं प्रवर्तयेत् ॥२७॥

॥ इति पञ्चमी खण्डिका ॥ प्र० १ प० २ ख० ५ ॥

*सदा निशायां गुरुं संवेशयेत्तस्य पादौ प्रक्षाल्य संवाह्य ॥ १ ॥ सदा प्रत्यहं निशायां अतिक्रान्ते प्रदोषे गुरुं संवेशयेत् । कथं तस्य गुरोः पादौ प्रक्षाल्य संवाह्य च । संवाहनं मर्दनम् ॥ १ ॥* अनुज्ञातः संविशेत् ॥ २ ॥ गुरुणानुज्ञातस्तु स्वयं संविशेत शयीत ॥ २ ॥* न चैनमभिप्रसारयीत ॥ ३ ॥ एनमाचार्यं प्रति पादौ न प्रसारयेत् ॥ ३ ॥* न खट्वायां सतोऽभिप्रसारणमस्तीत्येके ॥ ४ ॥ यदा तु गुरुः खट्वायां शेते तदा तं प्रति पादयोः प्रसारणं न दोषायेत्यन्ये मन्यन्ते । स्वपक्षस्तु तत्रापि दोष इति ॥ ४ ॥* न चास्य सकाशे संविष्टो भाषेत ॥ ५ ॥ अस्याचार्यस्य सकाशे स्वयं संविष्टः शयानो न भाषेत । कार्यनिवेदनादावुत्थायैव भाषेत ॥ ५ ॥* अभिभाषितस्त्वासीनः प्रतिब्रूयात् ॥ ६ ॥ आचार्येणा-

भिभाषितस्त्वासीनः प्रतिब्रूयात् । एतदाचार्ये शयाने वा ॥ ७ ॥* **अनूत्थाय तिष्ठन्तम्** ॥ ७ ॥ यदा त्वाचार्यस्तिष्ठन् ब्रूते तदा तमनूत्थाय प्रब्रूयात् । उत्तरे द्वे सूत्रे स्पष्टार्थे ॥ ७ ॥* **गच्छन्तमनुगच्छेत्** ॥ ८ ॥ **धावन्तमनुधावेत्** ॥ ९ ॥ * **न सोपानद्वेष्टितशिरा अवहितपाणिर्वासीदेत्** ॥ १० ॥ उत्तरत्रोपानत्प्रतिषेधा'न्नसोपान'दित्यनुवादः । 'अध्वापन्नस्त्वि'ति प्रतिप्रस्थातुमाचार्यं न सोपानत्क आसीदेत् । नापि वेष्टितशिराः । अवहितपाणिः दात्रादिहस्तः एवंभूतो नासीदेत् ॥ १० ॥* **अध्वापन्नस्तु कर्मयुक्तो वासीदेत्** ॥ ११ ॥ अध्वानं प्राप्तोऽध्वापन्नः कर्मणि दात्रादिसाध्ये प्रवृत्त एवंभूतस्तु सोपानत्कोऽप्यासीदेत् ॥ ११ ॥ * **न चेदुपसीदेत्** ॥ १२ ॥ न चेदाचार्यस्समीपे सीदेत् उपविशेत् ; यदि तूपविशेदध्वापन्नः कर्मयुक्तो वा तदोपानत्प्रभृतीनि विहायोपविशेत् ॥ १२ ॥* **देवमिवाचार्यमुपासीताविकथयन्नविमना वाचं शुश्रूषमाणोऽस्य** ॥ १३ ॥ यो यं देवं भजेत स तद्भावनया तमिवाचार्यमुपासीत । अविकथयन् व्यर्थां कथामकुर्वन् । अविमनाः अविक्षिप्तमनाः । अस्याचार्यस्य वाचं शुश्रूषमाणः ॥ १३ ॥* **अनुपस्थकृतः** ॥ १४ ॥ उपस्थकरणं प्रसिद्धम् । तत्कृत्वा नोपासीत ॥ १४ ॥* **अनुवाति वाते वीतः** ॥ १५ ॥ वाते अनुवाति सति वीतः पर्यायेणेतः उपासीत । प्रतिवाते तु वक्ष्यमाणेन प्रतिषिध्यते । मनुरप्याह 'प्रतिवातेऽनुवाते च नासीत गुरुणा सहे'ति ॥ १५ ॥ ***अप्रतिष्टब्धः पाणिना** ॥ १६ । पाणिना प्रतिष्टब्धो न स्यात् पाणितलं भूमौ कृत्वा पाण्यवलम्बनो नासीत । * **अनपाश्रितोऽन्यत्र** ॥ १७ ॥ अन्यत्र कुड्याद्यपाश्रितो न स्यात् । कुड्याद्यपाश्रितो नासीत ॥ १८ ॥* **यज्ञोपवीती द्विवस्त्रः** ॥ १८ ॥ यदा द्विवस्त्रस्तदा वाससान्यतरेण यज्ञोपवीती स्यात् । अपि वा सूत्रमेवोपवीतार्थ इत्येष कल्पस्तदा न भवति ॥ १९ ॥* **अधोऽनिवीतस्त्वेकवस्त्रः** ॥ १९ ॥ यदा त्वध एकवस्त्रो भवति तदा अनिवीतः स्यात् । न तस्य दीर्घस्याप्येकदेशेन उत्तरीयं कुर्यात् ॥ २० ॥ * **अभिमुखोऽनभिमुखम्** ॥ २० ॥ स्वयमाचार्याभिमुखः आत्मानं प्रत्यनभिमुखमाचार्यमुपासीत । स्वयमाचार्यमपश्यन् आचार्यस्य पुरत आर्जवेनासीत ॥ २० ॥ * **अनासन्नोऽनति-**

दूरे च ॥ २१ ॥ अत्यासन्नो न स्यादतिदूरे च न स्यात् ॥ २१ ॥ *या-वदासीनो बाहुभ्यां प्राप्नुयात् ॥ २२ ॥ यावत्यन्तराले आसीन आ-चार्यं बाहुभ्यां प्राप्तुं शक्नुयात् तावत्यासीत ॥ २२ ॥ * अप्रतिवा-तम् ॥ २३ ॥ आचार्यस्य प्रतिवातं नासीत ॥ २३ ॥ *एकाध्यायी द-क्षिणं बाहुं प्रत्युपसीदेत् ॥ २४ ॥ यदा एक एवाधीते तदा आचार्य-स्य दक्षिण बाहु प्रति दक्षिणे पार्श्वे उपसीदेत उपविशेत् ॥ २४ ॥ * य-थावकाशं बहवः ॥ २५ ॥ बहवस्तु शिष्या यथावकाशमुपसीदेयु । २५ । * तिष्ठति च नासीतानासनयोगविहिते ॥ २६ ॥ आसनयोग आसन-कल्पना । आसनयोगेन विहितेऽसम्भावित अनासनयोगविहित. । आसन-योगेनासम्भाविते आचार्ये तिष्ठति सति स्वयं नासीत ॥ २६ ॥ * आसीने च न संविशेत् ॥ २७ ॥ आसन इति पूर्वानुसारेण गम्यते । शयनयो-गेनासम्भावित आचार्ये आसीने स्वयं न संविशेत् न शयीत ॥ २७ ॥ * चेष्टति च चिकीर्षंस्तच्छक्तिविषये ॥ २८ ॥ व्यत्ययेन परस्मैपद-म् । आचार्ये चेष्टति सति स्वयमपि तच्चिकीर्षन् स्यात् । किमविशेषेण, श-क्तिविषये । यदाचार्येण क्रियमाणमात्मनश्शक्तिविषयो भवति । 'चिकीर्ष'-न्निति सन्प्रयोगादिच्छामेव प्रदर्शयेन नाक्षिप्य कुर्यात । प्रदर्शितायां-त्विच्छायामाचार्यश्चेदनुजानीयात् कुर्यात् । अशक्तिविषये नेच्छापि प्र-दर्शयितव्या । 'चिकीर्षेदिति युक्तः पाठः ॥ २८ ॥ * न चास्य सकाशे-ऽन्वक्स्थानिन उपसङ्गृह्णीयात् ॥ २९ ॥ आचार्यव्यतिरिक्ता गुरवोऽ-न्वक्स्थानिन इति स्मार्तो व्यवहार । आचार्यः श्रेष्ठो गुरूणाम् । तमपे-क्ष्यान्वक्स्थानं पदमेषामिति कृत्वा आचार्यस्य सन्निधौ अन्वक्स्थानिन नोप-सङ्गृह्णीयात् ॥ २९ ॥ * गोत्रेण वा कीर्तयेत् ॥ ३० ॥ न चैनमन्वक्स्था-निनं गोत्रेणाभिजनकुल्यादिना वा कीर्तयेत् न स्तुवीत 'भार्गवोऽय महाकुलप्र-सूत' इति ॥ ३० ॥ * न चैनं प्रत्युत्तिष्ठेदनूत्तिष्ठेदपि चेत्तस्य गुरुः स्यात् ॥ ३१ ॥ प्रत्युत्थानमप्यस्य न कर्तव्यमाचार्यस्य सकाशे । यदा-पुनरसावाचार्यसकाशे त्वामित्वा गमनायोत्तिष्ठति तदानूत्थानमपि न कर्तव्य-म । यद्यप्यसौ तस्य माणवकस्य मातुलादिः गुरु स्यात् । 'आचार्यप्रा-

चार्यसन्निपात' इति वक्ष्यति । तेनैव न्यायेन मातुलादिप्रसङ्गे इदमुक्तम् ॥३१॥ *देशात्त्वासनाच्च संसर्पेत्॥ ३२ ॥ किं तु देशादासनाच्च संसर्पेत्तस्य सम्मानार्थम् ॥३२॥ *नाम्ना तदन्तेवासिनं गुरुमप्यात्मन इत्येके ॥३३॥ तस्याचार्यस्यान्तेवासिनं नाम्नैव कीर्तयेत् 'यज्ञशर्मन्नि'ति । यद्यप्यसावात्मनो गुरुर्भवति इत्येवमेके मन्यन्ते । स्वपक्षस्तु गुरोर्नामग्रहणं न कर्तव्यमिति ॥ ३३ ॥*यस्मिंस्त्वनाचार्यसम्बन्धाद्गौरवं वृत्तिस्तस्मिन्नन्वक्स्थानीयेऽप्याचार्यस्य ॥ ३४ ॥ यस्मिंस्तु पुरुषे शिष्याचार्यभावमन्तरेणापि विद्याचारित्र्यादिनापि गौरवात् लौकिकाना गौरवं तस्मिन्नन्वक्स्थानीयेप्याचार्ये या प्रवृत्तिस्सा कर्तव्या । अन्वक्स्थानीयोऽप्यनन्वक्स्थानीयेव ॥ ३४ ॥*भुक्त्वा चास्य सकाशे नानुत्थायोच्छिष्टं प्रयच्छेत् ॥३५॥ आचार्यस्य भुञ्जानस्याभुञ्जानस्य वा सकाशे भुक्त्वा । अनूत्थाय छान्दसेन दीर्घः। उत्थानमकृत्वा उच्छिष्टं न प्रयच्छेत् । 'आर्याय वा पर्यवदध्या'दिति यद्विहितम् ॥ ३५ ॥ * आचामेद्वा ॥ ३६ ॥ आचमनमप्यनुत्थाय न कुर्यात् ॥ ३६ ॥ * किं करवाणीत्यामन्त्र्य ॥ ३७॥ ३७ ॥

॥ इति षष्ठी खण्डिका ॥ प्र०१-प०२-ख०६ ॥

---

* उत्तिष्ठेत्तूष्णीं वा ॥ १ ॥ किं करवाणीति गुरुमामन्त्र्य उत्तिष्ठेत् । तूष्णीं वा । विकल्पः । आमन्त्र्येति लिङ्गात् । उत्थायाप्याचामन्नाचार्यसकाश एवाचामेत् ॥ १ ॥ * नापपर्यावर्तेत गुरोः प्रदक्षिणीकृत्यापेयात् ॥ २ ॥ उत्थाय कार्यवशाद्गन्तुमिच्छन् गुरोरपसव्यं न पर्यावर्तेत । किं तु प्रदक्षिणीकृत्यापेयात् ॥ २ ॥ *न प्रेक्षेत नग्नां स्त्रियम् ॥ ३ ॥ यां प्रेक्षमाणस्य मनसो विकारो भवति तां नग्नां नेक्षेत॥३॥ * ओषधिवनस्पतीनामाच्छिद्य नोपजिघ्रेत् ॥ ४ ॥ ओषधयः फलपाकान्ताः । वनस्पतयो ये पुष्पैर्विना फलन्ति । वीरुद्वृक्षाणामप्युपलक्षणम् । तेषां पत्रपुष्पाण्याच्छिद्य नोपजिघ्रेत् । 'आच्छिद्ये'तिवचनाद्यादृच्छिकाघ्राणे न दोषः ॥ ४ ॥ * उपानहौ छत्रं यानमिति वर्जयेत् ॥ ५ ॥ यानं शकटादि । इतिशब्द एवंप्रकाराणामुपलक्षणार्थः । तत्र गौतमः—'वर्जयेन्मधु-

त्रे दद्यात् ॥ १५ ॥ कृतसमावर्तनो विवाहात्प्रागार्जितं मात्रे दद्यात् ।१५। * माता भर्तारं गमयेत् ॥ १६ ॥ माता पतिं प्रापयेत् ॥ १६ ॥* भर्ता गुरुम् ॥ १७॥ प्रापयेत् । माणवकस्य गुरुम् । माणवकार्जितं द्रव्यं तद्गामि युक्तम् ॥ १७ ॥ *धर्मकृत्येषु वोपयोजयेत् ॥ १८ ॥ धर्मकृत्यानि विवाहादीनि । तेषु वोपयोजयेत् । गुरोरभावे भर्ता तदभावे माता सर्वेषामभावे समावृत्तस्स्वयमेव वा ॥ १८ ॥ *कृत्वा विद्यां यावतीं वेददक्षिणामाहरेद्धर्मतो यथाशक्ति ॥ १९ ॥ यावतीं विद्यां शक्नुयात् वेदं वेदौ वेदान्वा तावतीं कृत्वा अधीत्य गुरवे दक्षिणामाहरेत् दद्यात् । यथाशक्ति धर्मत उपलब्धां न्यायार्जिताम् ॥ १९ ॥ धर्मत इत्यस्यापवादः—
* विषमगते त्वाचार्य उग्रतः शूद्रतो वाहरेत् ॥ २० ॥ यदा त्वाचार्यो विषमगत आपद्गत तदा उग्रतः शूद्रतो वापि प्रतिगृह्य दक्षिणामाहरेत् । वैश्यात्छूद्रायां जात उग्र, उग्रकर्मा वा द्विजातिः ॥ २० ॥ *सर्वदा शूद्रत उग्रतो वाचार्यार्थस्याहरणं धर्म्यमित्येके ॥ २१ ॥ सर्वदा आपद्यनापदि च । आचार्यार्थस्याचार्यीय यो देयोऽर्थः तस्य । उग्रतः शूद्रतो वाऽऽहरणं धर्म्यं धर्मादनपेतमित्येके मन्यन्ते । 'धार्म्य'मिति पाठे स्वार्थे ष्यञ् ॥२१॥ *दत्त्वा च नानुकथयेत् ॥२२॥ आचार्यायैवमाहृत्य दत्त्वा न कीर्तयेत्, एतन्मया दत्तमिति ॥२२॥ *कृत्वा च नानुस्मरेत् ॥२३॥ गुरवे प्राणसंशयादौ महान्तमप्युपकारं कृत्वा नानुस्मरेत् नानुचिन्तयेत् । अहो मयैतत्कृतमिति ॥२३॥ *आत्मप्रशंसां परगर्हामिति च वर्जयेत् ॥२४॥ इतिकरणादेवंप्रकाराणामात्मप्रशंसादीनामपि प्रतिषेधः ॥ २४ ॥ *प्रेषितस्तदेव प्रतिपद्येत ॥ २५ ॥ इदं कुर्वित्याचार्येण प्रेषितस्तदैव प्रतिपद्येत कुर्यात् क्रियमाणमपि कर्म विहाय । यद्यपि तदाचार्यस्य भवति ॥२५॥* शास्तुश्चानागमाद्वृत्तिरन्यत्र ॥२६॥ तस्मिंश्च 'विद्याकर्मान्त'मित्यस्यापवादः । यद्यभिगन्तुमिष्टा विद्या शास्तुः शासितुराचार्यस्य सम्यङ्नाभिगच्छति तदा तस्यानागमात् अन्यत्र पुरुषान्तरे वृत्तिर्भवत्येव । यस्य सम्यगागच्छति 'येषामाचार्यविधिप्रयुक्तमध्ययनं तेषामेतन्नोपपद्यते' इत्यवोचाम ॥२६॥* अन्यत्रोपसङ्ग्रहणादुच्छिष्टाशनाच्चाचार्यवदाचा

र्यदारे वृत्तिः ॥२७॥ अन्यत्रेत्युभयोः शेषः। आचार्यवदाचार्यदारे वृत्तिः कर्तव्या। किमविशेषेण। अन्यत्रोपसङ्ग्रहणादुच्छिष्टाशनाच्च, पादोपसङ्ग्रहणमुच्छिष्टाशनं च इत्येतदुभयं वर्जयित्वा। अत्र मनुः—'गुरुवद्गुरुपत्नीषु युवतीर्नाभिवादयेत्।' इति। गौतमस्तु, 'तद्भार्यापुत्रेषु चैवं नोच्छिष्टाशनस्नापनप्रसाधनपादप्रक्षालनोन्मर्दनोपसङ्ग्रहणानि' इति। 'दारे' इत्येकवचनं छान्दसम् ॥२७॥ * तथा समादिष्टेऽध्यापयति ॥२८॥ य आचार्येण समादिष्टो नियुक्तोऽध्यापयति तस्मिन्नाचार्यदारवृत्तिः। 'अध्यापयती'ति वर्तमाननिर्देशाद्यावदध्यापनमेवायमतिदेशः ॥२८॥ * वृद्धतरे च सब्रह्मचारिणि ॥२९॥ अध्यापयतीति नानुवर्तते। तरनिर्देशात्। ज्ञानवयोभ्यामुभाभ्यां वृद्धो गृह्यते। सब्रह्मचारी सहाध्यायी, समाने ब्रह्मणि व्रतं चरतीति। तस्मिन्नपि आचार्यदारवद्वृत्तिः। 'आचार्यात्पादमादत्ते पादं शिष्यः स्वमेधया। पादं सब्रह्मचारिभ्यः पादः कालेन पच्यते॥' इत्यध्ययने उपयोगसम्भवात् ॥२९॥ * उच्छिष्टाशनवर्जमाचार्यवदाचार्यपुत्रे वृत्तिः ॥३०॥ 'उच्छिष्टाशनवर्ज'मिति वचनात् उपसङ्ग्रहणं भवति। एतच्च ज्ञानवयोभ्यामुभाभ्यां वृद्धे। तदर्थं वृद्धतर इत्यनुवर्तते। गौतमीयस्तूपसङ्ग्रहणप्रतिषेधो वृद्धतरादन्यविषयः ॥३०॥ * समावृत्तस्याप्येतदेव सामयाचारिकमेतेषु ॥३१॥ कृतसमावर्तनस्याप्येतदेव यदुक्तमेव। एतेष्वाचार्यादिषु पुत्रान्तेषु सामयाचारिकं समयाचारप्राप्तं वृत्तमान्तात्। समादिष्टे त्वध्यापयतीति विशेष उक्तः॥

॥ इति सप्तमी खण्डिका ॥ प्र० १ प० २ ख० ७ ॥

---

*यथा ब्रह्मचारिणो वृत्तम् ॥१॥ समावृत्तस्येति वर्तते। ब्रह्मचारिणः कृतविवाहस्य यथा वृत्तं वर्तनं तथा वक्ष्यामः ॥१॥ *माल्यालिप्तमुख उपलिप्तकेशश्मश्रुरक्तोऽभ्यक्तो वेष्टित्युपवेष्टिनी काञ्चुक्युपानही पादुकी ॥२॥ माली माल्यावान्। आलिप्तमुखश्चन्दनादिना। मुखग्रहणमुपलक्षणम्। 'मुखमग्रे ब्राह्मणोऽनुलिम्पेत' इत्याम्नायवचनात्। सुगन्धिभिरामलकादिभिर्द्रव्यैरुपलिप्तानि संस्कृतानि केशश्मश्रूणि

यस्य सः। अक्तः अञ्जनेनाक्ष्णोः। अभ्यक्तः तैलेन। वाष्टती वेष्टितशिराः। कटिप्रदेशो द्वितीयेन वाससा वेष्टितो यस्य सः उपवेष्टिती। कञ्चुकश्चोपानच्च कञ्चुकोपानहम्। 'द्वन्द्वाच्चुदषहन्तादि'ति अत्र समासान्तः। तदस्यास्तीति कञ्चुकोपानही। द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिरिति प्रत्ययः। प्रसिद्धे पाठे कञ्चुकमेव काञ्चुकं तद्वान् काञ्चुकी। उपानद्वानुपानही व्रीह्यादित्वादिनिः। पादुके दारुमये पादरक्षणे तद्वान् ॥ २ ॥ *उदाचारेषु चास्यैतानि न कुर्यात्कारयेद्वा ॥ ३ ॥ अस्याचार्यादेः पुत्रान्तस्य उदाचारेषु दृष्टिगोचरेषु देशेषु एतानि माल्यादीनि न कुर्यात्कारयेद्वा ॥ ३ ॥ * स्वैरिकर्मसु च ॥ ४ ॥ एतानि न कुर्यात् कारयेद्वा ॥ ४ ॥ तत्रोदाहरणम्— * यथा दन्तप्रक्षालनोत्सादनावलेखनानीति ॥ ५ ॥ दन्तप्रक्षालनं दन्तधावनम्। उत्सादनमुद्वर्तनम्। अवलेखनं कङ्कतादिना केशानां विभागावस्थापनम्। इतिशब्दः प्रदर्शनार्थः। तेन स्नानभोजनमूत्रोत्सारणादिष्वपि प्रतिषेधः ॥ ५ ॥ *तद्द्रव्याणां च न कथयेदात्मसंयोगेनाचार्यः ॥ ६ ॥ तस्य शिष्यस्य गृहस्थभूतस्य यानि द्रव्याण्युपस्थापितानि तेषां मध्ये एकेनापि द्रव्येण यथात्मा संयुज्यते तथा न कथयेत्। आचार्यः शिष्यगृहमेत्य अहो दर्शनीयं भोजनपात्रमित्यादि ईप्सा यथा गम्यते तथा न कथयेदिति ॥ ६ ॥ * स्नातस्तु काले यथाविध्यभिहृतमाहृतोऽभ्येतो वा न प्रतिसंहरेदित्येके ॥ ७ ॥ 'वेदमधीत्य स्नास्य'न्नित्यनेन विधिना स्नातस्तस्मिन्काले यथाविध्यभिहृतमाबद्धं स्रगादि आचार्येणाहृत स्रगमेव वा तत्समीपमभ्येतो न प्रतिसंहरेत् न विमुञ्चेदित्येके मन्यन्ते। स्वपक्षस्तु तदपि मुञ्चेदिति। 'काले यथाविध्यभिहृत'मिति वचनादपरेद्युरारभ्य प्रतिसंहरेदेव ॥ ७ ॥ * उच्चैस्तरां नासीत ॥ ८ ॥ स्वार्थे तरप्। आचार्यासनादुच्चासने नासीत ॥ ८ ॥ *तथा बहुपादे ॥ ९ ॥ नीचेऽप्यासने बहुपादे नासीत ॥ ९ ॥ * सर्वतःप्रतिष्ठिते ॥ १० ॥ आसने आसीत। आचार्यमपि पीठादावुपवेश्य स्वयं वेत्रासनादावासीत। तद्धि भूमौ सर्वतः प्रतिष्ठितम् ॥ १० ॥* शय्यासने चाचरिते नाविशेत ॥ ११ ॥ आचार्येणाचरित उपभुक्ते शय्या

सने नाविशेत् । शयने न शयात आसने नासीत । पित्रादिष्वपि गुरुषु समानमिदम् । तथा च मनुरपि विशेषेणाह— 'शय्यासने अध्युषिते श्रेयसा न समाचरेत् ।' इति । गतं समावृत्तस्य वैशेषिकम् । अथ ब्रह्मचर्यविधेरेवं शेषः ॥ ११ ॥ * **यानमुक्तोऽध्वन्यन्वारोहेत्** ॥ १२ ॥ यानं शकटादि । आरोहेत्युक्तो गुरुणा पश्चादारोहेत् । 'छत्रं यानमिति वर्जये'दिति पूर्वोक्तस्य प्रतिषेधस्यापवादः । यानं च गुर्वारूढमन्यद्वा ॥ १२ ॥ * **सभानिकषकटस्वस्तरांश्च** ॥ १३ ॥ उक्तोऽध्वन्यन्वारोहेदित्येव । 'सभास्समाजांश्चे'त्यस्यापवादार्थं सभाग्रहणम् । निकषो नाम कृषीवलानामुपकरणं, कृष्टं क्षेत्रं येन समीक्रियते । यच्च कस्मिंश्चिदारूढे केनचिदाकृष्यते । तत्र गुरुणा आकृष्यमाणेऽपि तेनोक्तस्सन्नारोहेत । न त्वनौचित्यभयान्नारोहेदिति । कटो वीरणनिर्मिता शय्या । तत्र गुरुणोक्तस्सन् सहासीत । उत्सवादावेष आचारः । स्वस्तरो नाम पलालशय्या । 'न स्वस्तरे संविशन्ती'ति दर्शनात् । तत्रापि गुरुणोक्तस्सन् सहासनादि कुर्यात् ॥ १३ ॥ * **नानभिभाषितो गुरुमभिभाषेत प्रियादन्यत्** ॥ १४ ॥ गुरुणानभिभाषितो गुरुं प्रति न किञ्चित् ब्रूयात् । प्रियं तु ब्रूयात् । यथा ते पुत्रो जात इति ॥ १४ ॥ * **व्युपतोदव्युपजापव्यभिहासोदामन्त्रणनामधेयग्रहणप्रेषणानीति गुरोर्वर्जयेत्** ॥ १५ ॥ व्युपतोदः अङ्गुल्यादिघट्टनं यदा आभिमुख्यार्थं क्रियते । व्युपजापः श्रोत्रयोर्मुहुर्मुहुः जल्पनम् । वकारश्छान्दसोऽपपाठो वा । व्यभिहासः आभिमुख्येन हसनम् । उदामन्त्रणमुच्चैस्सम्बोधनम् । यथा बधिरं प्रति । नामधेयग्रहणं दशम्यां पितृविहितस्य नाम्नो ग्रहणम् । न पूज्यनाम्नो भगवदादेः । प्रेषणमाज्ञापनम् । एतानि गुरुविषये न कर्तव्यानि । इतिकरणादेवम्प्रकाराणामन्येषामपि प्रतिषेधः । यथाह मनुः — 'नोदाहरेत्तस्य नाम परोक्षमपि केवलम् । न चैवास्यानुकुर्वीत गतिभाषितचेष्टितम् ॥ १९ ॥' इति ॥ * **आपद्यर्थं ज्ञापयेत्** ॥ १६ ॥ आपदि व्युपतोदादिभिरप्यर्थमभिप्रेतं ज्ञापयेत् । असति पुरुषान्तरे वचनेनैव बोधयेत् । न साक्षात्प्रेषयेत् । यथा शूलतोदो मे भवति स चाग्निना शाम्यति न चात्र कश्चित्सन्निहितः किं करोमि मन्दभा-

य इति ॥ १६ ॥ उत्तरे सूत्रे समावृत्तविषये—* सहवसन्सायं प्रातरनाहूतो गुरुं दर्शनार्थो गच्छेत् ॥ १७ ॥ एकस्मिन् ग्रामे वसन् सायं प्रातरनाहूतोऽपि गुरुं दर्शनार्थो नान्यप्रयोजनो गच्छेत् ॥ १७ ॥ *विप्रोष्य च तदहरेव पश्येत् ॥ १८ ॥ यदा ग्रामान्तरं गतः प्रत्यागच्छेत् तदा तदहरेवाचार्यं पश्येत् ॥ १८ ॥ *आचार्यप्राचार्यसन्निपाते प्राचार्यायोपसंगृह्योपसञ्जिघृक्षेदाचार्यम् ॥ १९ ॥ आचार्यस्याचार्यः प्राचार्यः प्रपितामहवत् । यदा आचार्यस्य प्राचार्यस्य च कार्यवशात् सन्निपातो मेलन भवति, तदा प्राचार्याय द्वितीयार्थे चतुर्थी । प्राचार्यं पूर्वमुपसंगृह्य पश्चात्स्वाचार्यमुपसङ्ग्रहीतुमिच्छेत् । न केवलं मनसा । किन्तु यथा आचार्यो जानाति मामयमुपसञ्जिघृक्षतीति तथा चेष्टेत । अन्यथा अदृष्टार्थमुपदिष्टं स्यात् ॥ १९ ॥ *प्रतिषेधेदितरः ॥ २० ॥ इतर आचार्यः प्रतिषेधेत् 'वत्स मोपसङ्ग्रही'रिति ॥ २० ॥ *लुप्यते पूजा चास्य सकाशे ॥ २१ ॥ अस्य प्राचार्यस्य सन्निधौ आचार्यस्य पूजा लुप्यते न कार्या । न केवलमुपसङ्ग्रहणमेव । उत्तरसूत्रं समावृत्तविषयम् ॥ २१ ॥ *मुहुश्चाचार्यकुलं दर्शनार्थो गच्छेद्यथाशक्त्यधिहस्त्यमादायापि दन्तप्रक्षालनानीति ॥ २२ ॥ मुहूश्चेत्यनुस्वारदीर्घौ छान्दसौ । वीप्सालोपश्चात्र द्रष्टव्यः । ग्रामान्तरे वसन्नपि मुहुर्मुहुराचार्यकुलं दर्शनार्थमागच्छेत् । यथाशक्ति गोरसापूपाद्यधिहस्त्यं हस्ते भवमादाय स्वयमेव गृहीत्वेत्यर्थः । अपिशब्दोऽभावे विधिं द्योतयति गोरसाद्यभावे दन्तकाष्ठान्यपीति । इतिशब्दः अन्तेवासिधर्माणां समाप्तिद्योतनार्थः ॥ २२ ॥ *मातरं पितरमाचार्यमग्नींश्च गृहाणि च रिक्तपाणिर्नोपगच्छेद्राजानं चेन्न श्रुतमिति ॥२३॥ *तस्मिन्गुरोर्वृत्तिः ॥२४॥ तस्मिन्नन्तेवासिनि गुरोर्वृत्तिः प्रकारो वक्ष्यते ॥२४॥ *पुत्रमिवैनमनुकाङ्क्षन्सर्वधर्मेष्वनपच्छादयमानः सुयुक्तो विद्यां ग्राहयेत् ॥२५॥ एनं शिष्यं पुत्रमिव अस्याभ्युदयः स्यादिति अनुकाङ्क्षन् सर्वेषु धर्मेषु किञ्चिदप्यनपच्छादयमानः अगूहन् सुयुक्तः सुसमाहितः तत्परो भूत्वा विद्यां ग्राहयेत् ॥२५॥ *न चैनमध्ययनविघ्नेनात्मार्थेषूपरुन्ध्यादनापत्सु ॥२६॥ न चैनं शिष्यम-

ध्ययनविघ्नेनात्मप्रयोजनमुपरुन्ध्यात् । उपरोधः अस्वतन्त्रीकरणम् । 'अनापत्त्वि'तिवचनात्स्वप्यध्ययनविघ्नेनाप्युपरोधे न दोषः ॥ २६ ॥ *अन्तेवास्यनन्तेवासी भवति विनिहितात्मा गुरावनैपुणमापद्यमानः ॥२७॥ 'आपद्यमान' इति अन्तर्भावितण्यर्थः । योऽन्तेवासी विनिहितात्मा द्वयोराचार्ययोर्द्विविधं निहितात्मा गुरावनैपुणमापादयति नानेनायं प्रदेशः सम्यगुक्त इति सोऽन्तेवासी न भवति । स त्याज्य इत्यर्थः । अपर आह—योऽन्तेवासी वाङ्मनःकर्मभिरनैपुणमापद्यमानो गुरौ विसदृशं निहितात्मा भवति अनुरूपं न शुश्रूषते सोऽन्तेवासी न भवति ॥ २७ ॥* आचार्योऽप्यनाचार्यो भवति श्रुतात्परिहरमाणः ॥२८॥ त्याज्य इत्यर्थः । किं कुर्वन् । श्रुतात्परिहरमाणः : तेन तेन व्याजेन विद्याप्रदानमकुर्वन् ॥२८॥ *अपराधेषु चैनं सततमुपालभेत ॥२९॥ अपराधेषु कृतेष्वेनं शिष्य सततमुपालभेत इदमयुक्तं त्वया कृतमिति ॥२९॥ * अभित्रास उपवास उदकोपस्पर्शनमदर्शनमिति दण्डा यथामात्रमानिवृत्तेः ॥३०॥ अभित्रासो भयोत्पादनम् । उपवासो भोजनलोपः । उदकोपस्पर्शन शीतोदके स्नापनम् । अदर्शनं यथात्मानं न पश्यति तथाकरणम् । सर्वत्र ण्यन्तात् प्रत्ययः । इत्येते दण्डाः शिष्यस्य यथामात्रं यावत्यपराधमात्रा तदनुरूप व्यस्ताः समस्ताश्च । आनिवृत्तेः यावदसौ ततोऽपराधान्निवर्तते तावदेते दण्डाः ॥३०॥ *निवृत्तं चरितब्रह्मचर्यमन्येभ्यो धर्मेभ्योऽनन्तरो भवेत्यतिसृजेत् ॥ ३१ ॥ एवं चरितब्रह्मचर्य निवृत्तं गुरुकुलात् कृतसमावर्तनमित्यर्थः । एवंभूतमन्येभ्यो धर्मेभ्यो यममावाश्रमं प्रतिपित्सेत तत्र तेभ्योऽनन्तरो भव यथा त्वमन्तरितो न भवसि तथा भवेत्युक्त्वातिसृजेत् । तं तमाश्रमं प्रतिपत्तुमुत्सृजेत् ॥ ३१ ॥

॥ इति अष्टमी खण्डिका ॥ प्र०१ प०२ ख०८ ॥

---

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां प्रथमप्रश्ने द्वितीयः पटलः ॥ २ ॥

---

एवमध्येतुरध्यापयितुश्च धर्मा उक्ताः। अथ देशकालकृता अध्ययनधर्मा उच्यन्ते—**श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य मासं प्रदोषे नाधीयीत** ॥ १ ॥ 'मेषादिस्थे सवितरि यो यो दर्शः प्रवर्तते। चान्द्रमासास्तदन्ताश्चैत्राद्या द्वादश स्मृताः॥ तेषु यस्मिन् या पौर्णमासी सा सा चैत्रादिका स्मृता। कादाचित्केन योगेन नक्षत्रस्येति निर्णयः॥' तदेवं सिंहस्थे सवितरि याऽमावास्या तदन्ते चान्द्रमसे मासे या मध्यवर्तिनी पौर्णमासी सा श्रावणी। श्रवणयोगस्तु भवतु वा मा वा। तस्यां श्रावण्यां पौर्णमास्यामध्यायमुपाकृत्य गृह्योक्तेन विधिनोपाकर्म कृत्वा स्वाध्यायमधीयीत। अधीयानश्च मासमेकं प्रदोषे प्रथमरात्रिभागे नाधीयीत ग्रहणाध्ययनं धारणाध्ययनं च न कुर्यात्। प्रदोषग्रहणाद्रात्रावप्यूर्ध्वं न दोषः ॥ १ ॥ **तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेत्** ॥ २ ॥ तिष्यः पुष्यः तेन युक्ता पौर्णमासी तैषी श्रावणीवत्। तस्यां विरमेत् उत्सर्जनं कुर्यात्। तस्यापि प्रयोगो गृह्य एवोक्तः। रोहिण्यां वा, तैषमासि तिष्यात्पूर्वा या रोहिणी तस्यां वा विरमेत्। अनयोः पक्षयोः पञ्चमासानधीयीत ॥ २ ॥ ***अर्धपञ्चमांश्चतुरो मासानित्येके*** ॥ ३ ॥ अर्धं पञ्चमं येषां ते अर्धपञ्चमाः। अर्धाधिकाश्चतुरो मासान्। अधीयीतेत्यपेक्ष्यते। इत्येके मन्यन्ते। अस्मिन्पक्षे प्रोष्ठपद्यामुपाकरणं शास्त्रान्तरदर्शनात्। उत्सर्जनस्य वा प्रतिकर्षः। उत्सर्जने च कृते श्रावण्याः प्राक् शुक्लपक्षेषु धारणाध्ययनं वेदस्य, कृष्णपक्षेषु व्याकरणाद्यङ्गानां। पुनः श्रावण्यामुपाकृत्यागृहीतभागस्य ग्रहणाध्ययनमिति। प्रपञ्चितमेतद्गृह्ये ॥ ३ ॥ ***निगमेष्वध्ययनं वर्जयेत्*** ॥ ४ ॥ निगमाश्चत्वराः। निर्गमनमार्गा वा नियमेन गम्यते तेष्विति। तेषु सर्वप्रकारमध्ययनं वर्जयेत् ॥ ४ ॥ ***आनडुहेन वा शकृत्पिण्डेनोपलिप्तेऽधीयीत*** ॥ ५ ॥ अनडुत्सम्बन्धिना वा शकृत्पिण्डेनोपलिप्य निगमेष्वप्यधीयीत ॥ ५ ॥ ***श्मशाने सर्वतः शम्याप्रासात्*** ॥ ६ ॥ श्मशाने चाध्ययनं वर्जयेत्। सर्वतः सर्वासु दिक्षु। शम्याक्षिप्ता यावति देशे पतति ततोऽर्वागिति पञ्चमीनिर्देशाद्गम्यते ॥ ६ ॥ ***ग्रामेणाध्यवसिते क्षेत्रेण वा नान-***

ध्यायः ॥७॥ यदा श्मशानं ग्रामतया क्षेत्रतया वा अध्यवसितं स्वीकृतं भवति तदा अध्येतव्यमेव ॥७॥ * ज्ञायमाने तु तस्मिन्नेव देशे नाधीयीत ॥ ८ ॥ यदा तु तदध्यवसितमपि, श्मशानं ज्ञायते अयं स प्रदेश इति तदा तात्स्येव प्रदेशे नाधीयीत । न शम्याप्रासात् ॥ ८ ॥ * श्मशानवच्छूद्रपतितौ ॥ ९ ॥ शूद्रपतितसकाशेऽपि शम्याप्रासान्नाध्येयम् ॥ ९ ॥ * समानागार इत्येके ॥ १० ॥ एके मन्यन्ते समानागारे शूद्रपतितौ वर्ज्यौ, न शम्याप्रासादिति ॥ १० ॥ शूद्रायां तु प्रेक्षणप्रतिप्रेक्षणयोरेवानध्यायः ॥ ११ ॥ शूद्रायां तु यदा परस्परं प्रेक्षणं भवति तदैवानध्यायः । न समानागारे नापि शम्याप्रासादिति ॥ ११ ॥ *तथान्यस्यां स्त्रियां वर्णव्यतिक्रान्तायां मैथुने ॥ १२ ॥ शूद्रव्यतिरिक्तापि या स्त्री मैथुने वर्णव्यतिक्रान्ता नीचगामिनी तस्यामपि प्रेक्षणप्रतिप्रेक्षणयोरनध्यायः ॥ १२ ॥ * ब्रह्माध्येष्यमाणो मलवद्वाससेच्छन् सम्भाषितुं ब्राह्मणेन सम्भाष्य तया सम्भाषेत सम्भाष्य तु ब्राह्मणेनैव सम्भाष्याधीयीत एवं तस्याः प्रजानिःश्रेयसम् ॥ १३ ॥ यो वेदमध्येष्यमाणो रजस्वलया सह सम्भाषितुमिच्छति स पूर्वं ब्राह्मणेन सम्भाष्य पश्चात्तया सम्भाषेत। सम्भाष्य च पुनरपि ब्राह्मणेनैवं सम्भाष्याधीयीत। किमेवं सति भवति। एवं तस्या मलवद्वाससः आगामिनी या प्रजा तस्या निःश्रेयसमभ्युदयो भवति। प्रजारूपं वा निःश्रेयसं तस्या भवति। 'प्रजानिःश्रेयस'मितिवचनात् विधवादिभिः सम्भाषणे नैतत्कर्तव्यम् ॥ १३ ॥ * अन्तश्शवम् ॥ १४ ॥ अन्तश्शवो यत्र ग्रामे तत्र नाध्येयम्। एतेनान्तश्चाण्डालमिति व्याख्यातम्। १४ ॥ * अन्तश्चाण्डालम् ॥ १५ ॥ चण्डाल एव चाण्डालः। उभयत्र प्रथमा सप्तम्यर्थे। अव्ययीभावो वा विभक्त्यर्थे द्रष्टव्यः ॥ १५ ॥ * अभिनिस्सृतानां तु सीम्न्यनध्यायः ॥ १६ ॥ यदा शवाः सीम्नि अभिनिस्सृता भवन्ति तदा तत्रानध्यायः ॥ १६ ॥ * सन्दर्शने चारण्ये ॥ १७ ॥ अरण्ये च यावति प्रदेशे शवश्चाण्डालो वा सन्दृश्यते तावत्यनध्यायः ॥ १७ ॥ * तदहरागतेषु च ग्रामं बाह्येषु ॥ १८ ॥ बाह्या उग्रनिषादादयः परिपन्थिनः तेषु च ग्राममागतेषु तदहरनध्यायः ।

तस्मिन्नहनि नाध्येतव्यम् ॥ १८॥ * अपि सत्सु ॥ १९॥ ये विद्याचरित्रादिभिर्महान्त. सन्त. तेष्वपि ग्राममागतेषु तदहरनध्यायः ॥ १९॥ *सन्धावनुस्तनिते रात्रिम् ॥२०॥ सन्धि. सन्ध्या तस्मिन् सन्धौ । अनुस्तनिते मेघगर्जिते सति रात्रावनध्यायः ॥२०॥*सर्वां रात्रिं नाधीयीत ॥२१॥ इ पर्तीविदम् । अन्यस्मिन्नविक वक्ष्यति ॥२१॥* स्वप्नपर्यान्तं विद्युति ॥२२॥ अन्त्यो दीर्घ उपान्त्यो ह्रस्व. । विपर्यासश्छान्दसोऽपपाठो वा । सन्धौ विद्युति स्वप्नपर्यन्ता रात्रिमनध्यायः । स्वप्नपर्यन्ता रात्रिः प्रहरावशिष्टा रात्रि· ॥२२॥ एव मायंसन्ध्यायामुक्तं प्रातस्सन्ध्यायामाह—* उपव्युषं यावता वा कृष्णां रोहिणीमिति शम्याप्रासाद्विजानीयादेतस्मिन्काले विद्योतमाने सप्रदोषमहरनध्यायः ॥ २३ ॥ उपव्युष उपस्समीपं तत्र विद्योतमाने विद्युति, पत्यामपरेद्युस्सप्रदोषमहरनध्यायः । प्रदोषादूर्ध्वमध्ययनम् यावता वा कालेन शम्याप्रासादर्वागवस्थितां गा कृष्णामिति वा रोहिणीमिति वा विजानीयात । एतस्मिन्काले 'उपव्युषं विद्योतमान इत्यन्वयः रोहिणी गौरवर्णा । इतिशब्दप्रयोगे द्वितीया प्रयुज्यते । तत्रान्यप्रकाराश्चिन्त्य· ॥ २३ ॥ *दहेऽपररात्रे स्तनयित्नुना ॥ २४ ॥ रात्रेस्तृतीयो भाग· सर्वोऽपररात्र· । तस्य त्रेधा विभक्तस्याद्योऽशो महारात्रः । अन्त्यो दह । तस्मिन्नपररात्रे स्तनयित्नुना निमित्तेन सप्रदोषमहरनध्याय ।
२४ ॥ *ऊर्ध्वमर्धरात्रादित्येके ॥ २५ ॥ अर्धरात्रादूर्ध्वमनन्तरोक्तो विधिरित्येके मन्यन्ते । स्वपक्षस्तु दहएवेति ॥२५॥ * गवां चावरोधे ॥२६॥ दस्युप्रभृतिभिरवरुद्धासु गोषु तावन्त कालमनध्याय. । अवरोधो ग्रामनिर्गमनिरोध· ॥२६॥* वध्यानां च यावता हन्येरन्ते ॥२७॥ वधार्हाणां चोरादीनामवरोधे यावता कालेन ते हन्यन्ते तावन्तं कालमनध्याय· ॥ २७ ॥
* पृष्ठारूढः पशूनां नाधीयीत ॥ २८ ॥ हस्त्यश्वादीनां पशूनां पृष्ठारूढः सन्नाधीयीत ॥ २८ ॥* अहोरात्रावमावास्यासु ॥ २९ ॥ अमावास्यासु द्वावहोरात्रौ नाधीयीत । तासु च पूर्वेद्युश्चतुर्दशीषु च । तथा च मनु —'अमावास्याचतुर्दश्यो पौर्णमास्यष्टकासु च ।' इति ॥ २९ ॥

॥ इति नवमी खण्डिका ॥ प्र० १ प० ३ ख० ९. ॥

*चातुर्मासीषु च ॥ १ ॥ चतुर्षु मासेषु भवाश्चातुर्मास्यः। सञ्ज्ञैषा तिसृणां पौर्णमासीनां यासु चातुर्मास्यानि क्रियन्ते। काः पुनस्ताः फाल्गुन्याषाढीकार्त्तिक्यः। चातुर्मास्यो यज्ञः तत्र भव इति वर्त्तमाने 'सञ्ज्ञायामणि'त्यणप्रत्ययः। तासु चातुर्मासीषु पूर्ववद्वावहोरात्रावनध्यायः। गौतमस्तु, स्वशब्देनाह—'कार्तिकी फाल्गुन्याषाढी पौर्णमासी'ति। पौर्णमास्यनन्तरप्रतिपत्सु च शास्त्रान्तरवशादनध्यायः। यथा ह्यौशनाः—'पर्वणीतिहासवर्जितानां विद्यानामनध्याय' इति। 'प्रतिपत्सु च चिन्तये'दिति च। एवं चतुर्दशीमात्रस्य वर्जने शास्त्रान्तरं मृग्यम्। तत्र याज्ञवल्क्यः—'पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके।' इति ॥ १ ॥ *वैरमणे गुरुष्वष्टाक्य औपाकरण इति त्र्यहाः ॥ २ ॥ विरमणमुत्सर्जनं तदेव वैरमणम्। तस्मिन् वैरमणे। प्रथमान्ते पाठे सप्तम्यर्थे प्रथमा। गुरुषु श्वशुरादिषु। संस्थितेष्विति प्रकरणाद्गम्यते। अष्टकैवाष्टक्यं स्वार्थिकः ष्यञ्। आदौ प्रीप्ना वृद्धिर्मध्ये कृता। उपाकरणमेवौपाकरणम्। एतेषु निमित्तेषु त्र्यहा अध्ययनरहिताः। अत्र गुरुषु मरणदिनमारभ्य त्र्यहाः। इतरेषु पूर्वेद्युरपरेद्युस्तस्मिंश्च दिने नाधीयीत। अत्र गौतमः—'तिस्रोऽष्टकास्त्रिरात्रमन्त्यां' ... 'मिति। उपाकरणादूर्ध्वं प्रागुत्सर्जनादध्ययनं तद्वार्षिकम्। तदभितस्तस्यादावन्ते च यत्कर्म क्रियते तत्रापि त्रिरात्रमित्यर्थः। औशनसे च व्यक्तम्—'उपाकर्मणि चोत्सर्गे त्र्यहमनध्याय' इति। मानवे च व्यक्तम्—'उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम्।' इति ॥ २ ॥ *तथा सम्बन्धिषु ज्ञातिषु ॥ ३ ॥ ये सन्निकृष्टा ज्ञातयः भ्रातृतत्पुत्रपितृव्यादयः। तेष्वपि मृतेषु त्र्यहमनध्यायः। ब्रह्मचारिणो विधिरयम्। आशौचवता तु यावदाशौचमनध्यायः शास्त्रान्तरसिद्धः। तत्र मनुः—'उभयत्र दशाहानि कुलस्यान्नं न भुज्यते। दानं प्रतिग्रहो यज्ञः स्वाध्यायश्च निवर्त्तते ॥' इति। उभयत्र जनने मरणे च ॥ ३ ॥ *मातरि पितर्याचार्य इति द्वादशाहाः ॥ ४ ॥ मात्रादिषु मृतेषु द्वादशाहमनध्यायः। अयं विधिर्गृहस्थानामपि। केचिदाशौचमपि तावन्तं कार्यमिच्छन्ति। नेति वय-

म् । अनध्यायप्रकरणात् ॥ ४ ॥ *तेषु चोदकोपस्पर्शनं तावन्तं कालम् ॥ ५ ॥ मात्रादिष्वधिकं तावन्तं कालमहरहः स्नानमपि कार्यम् । न केवलमनध्याय ॥ ५ ॥ *अनुभाविनां च परिवापनम् ॥ ६ ॥ अनु पश्चात् भूता जाता अनुभाविनः मृतापेक्षयावरवयसः । तेषां परिवापनमपि भवति केशादीना म् । 'कृत्यच' इति प्राप्तस्य णत्वस्य 'णेर्विभाषे'ति विकल्पः । अन्ये तु शावं दुःखमनुभवतां सर्वेषां परिवापनमिच्छन्ति । अपर आह — अनुभाविनः उदकार्हाः । तेषां मरणे परिवापनमिति ॥ ६ ॥ * न समावृत्ता वपेरन्नन्यत्र विहारादित्येके ॥ ७ ॥ विहारो यागदीक्षा । ततोऽन्यत्र न समावृत्ता वपेरन्नित्यन्ये मन्यन्ते । स्वमते तु वपेरन्नेवेति ॥ ७ ॥ तत्र वपनस्याङ्गत्वं गुणविधिना परिहारं च वक्तुं ब्राह्मणमुदाहरति— * अथापि ब्राह्मणम् । रिक्तो वा एषोऽनपिहितोऽयं मुण्डस्तस्यैतदपिधानं यच्छिखेति ॥ ८ ॥ रिक्तः अन्तःशून्यो घटादिः । सोऽनपिहितः पिधानरहितो यादृशः तादृश एष अयं मुण्डो नाम । तस्य रिक्तस्यापिधानमेतत् यच्छिखा । अनेन चैतद्दर्शितं निषेधशास्त्रं सह शिखया वपनप्रतिषेधपरमिति ॥ ८ ॥ कथं तर्हि सत्रेषु शिखाया वपनं; वचनसामर्थ्यादित्याह— * सत्रेषु तु वचनाद्वपनं शिखायाः ॥ ९ ॥ स्पष्टम् ॥ ९ ॥ * आचार्ये त्रीनहोरात्रानित्येके ॥ १० ॥ आचार्ये संस्थिते त्रीनहोरात्रीनध्ययनं वर्जयेदित्येके मन्यन्ते । स्वपक्षस्तु, द्वादशाहः पूर्वमुक्तः ॥ १० ॥ * श्रोत्रियसंस्थायामपरिसंवत्सरायामेकाम् ॥ ११ ॥ श्रोत्रियं वक्ष्यति । तस्य संस्थायां परिपूर्णसंवत्सरायां श्रुतायामेकां रात्रिमेकमहोरात्रमध्ययनं वर्जयेत् । अत्र संस्थाश्रवणाद्दूरादिष्वपि सैव निमित्तम् ॥ ११ ॥ *सब्रह्मचारिणीत्येके ॥ १२ ॥ एके तु सब्रह्मचारिणो मरण एवानन्तरीकमनध्यायमिच्छन्ति । न श्रोत्रियसामान्यमरणे ॥ १२ ॥ *श्रोत्रियाभ्यागमेऽधिजिगांसमानोऽधीयानो वानुज्ञाप्याधीयीत ॥ १३ ॥ श्रोत्रिये अभ्यागते अध्येतुकामोऽधीयानश्च तमनुज्ञाप्याधीयीत ॥ १३ ॥ *अध्यापयेद्वा ॥ १४ ॥ अध्यापयितुकामोऽध्यापयन्वेति प्रकरणाद्गम्यते । सोऽपि

तमनुज्ञाप्याध्यापयेदिति ॥१४॥ ***गुरुसन्निधौ चाधीहि भो इत्युक्त्वाधीयीत** ॥ १५ ॥ धारणाध्ययनं पारायणाध्ययनं वा कुर्वन् गुरौ सन्निहिते सति 'अधीहि भो' इत्युक्त्वाधीयीत ॥ १५ ॥***अध्यापयेद्वा** ॥ १६ ॥ अध्यापयन्नपि तत्सान्निध्यौ एवमेवोक्त्वाध्यापयेत् ॥ १६ ॥***उभयत उपसंग्रहणमधिजिगांसमानस्याधीत्य च** ॥ १७ ॥ उभयतः अध्ययनस्यादावन्ते च उपसंग्रहणं कर्तव्यं यथाक्रमम् ॥ १७ ॥***अधीयानेषु वा यत्रान्यो व्यवेयादेतमेव शब्दमुत्सृज्याधीयीत** ॥ १८ ॥ बहुवचनमतन्त्रम् । अधीयानेषु च यत्रान्यो व्यवेयादन्तरागच्छेत् । तत्रा'प्यधीहि भो' इत्युच्चार्याधीयीत । प्रत्येकमुपदेशादेकवचनम् । अधीयीरन् ॥ १८ ॥ ***श्वगर्दभनादास्सलावृक्यैकसृकोलूकशब्दास्सर्वे वादित्रशब्दा रोदनगीतसामशब्दाश्च** ॥ १९ ॥ शुनां च गर्दभानां च बहूनां नादः । बहुवचननिर्देशात् । सालावृकी वृकजातावेवान्तरभेदः । क्रोष्ट्रीत्यन्ये । लिङ्गस्याविवक्षितत्वात्पुंसोऽपि ग्रहणम् । 'इन्द्रो यतीन् सालावृकेभ्य' इत्यादौ दर्शनात् । सर्वत्रादिस्वरो दीर्घः । स एवायं विकृतः । एकसृकः एकचरः सृगालः । उलूको दिवाभीतः । एतेषां च शब्दाः । वादित्राणि वादित्राणि वीणावेणुमृदङ्गादीनि । तेषां च सर्वे शब्दाः । रोदनशब्दाश्च यश्च । एते श्रूयमाणा अनध्ययनस्य हेतवः ॥ १९ ॥ ***शाखान्तरे च साम्नामनध्यायः** ॥ २० ॥ वेदान्तरसकाशे साम्नामनध्ययनम् । गीतिषु सामाख्या सद्योगाद्बहुवचनं इत्यन्ये ॥ २० ॥ ***सर्वेषु च शब्दकर्मसु यत्र संसृज्येरन्** ॥ २१ ॥ आक्रोशपरिहासादिषु सर्वेषु शब्दकर्मसु अनध्यायः । यत्राध्ययनशब्देन ते संसृज्येरन् ॥ २१ ॥***छर्दयित्वा स्वप्नान्तम्** ॥ २२ ॥ छर्दनं वमनम् । तत्कृत्वा स्वप्नान्तं यावन्नाधीयीत ॥ २२ ॥***सर्पिर्वा प्राश्य** ॥ २३ ॥ अथ वा सर्पिः प्राश्याधीयीत ॥ २३ ॥* **पूतिगन्धः** ॥ २४ ॥ दुर्गन्धश्चोपलभ्यमानोऽनध्यायहेतुः ॥ २४ ॥***शुक्तश्चात्मसंयुक्तम्** ॥ २५ ॥ यत्पक्वं कालपाकेनाम्लं जातं तच्छुक्तम् । तद्यावदात्मसंयुक्तं स्वोदरस्थमजीर्णं, यावत्तदनुगुण उद्गारस्तावदनध्यायहेतुः ॥ २५ ॥

*प्रदोषे च भुक्त्वा नाधीयीत ॥ २६ ॥ तेनाधीत्यैव भुञ्जीत ॥ २६ ॥ *प्रोदकयोश्च पाण्योः ॥ २७ ॥ भुक्त्वेत्येव । भुक्त्वा यावत्प्रोदकौ पाणी आर्द्रौ तावन्नाधीयीत । केचित् भुक्त्वेति नानुवर्तयन्ति ॥ २७ ॥ *प्रेतसंक्लृप्तं चान्नं भुक्त्वा सप्रदोषमहरनध्यायः ॥ २८ ॥ यो मृतोऽसपिण्डीकृतस्स प्रेतः । तदुद्देशेन दत्तमन्नं भुक्त्वा सप्रदोषमहर्नाधीयीत । प्रदोषादूर्ध्वं न दोषः । अत्र मनुः—'यावदेकानुदिष्टस्य गन्धो लेपश्च तिष्ठति । विप्रस्य विदुषो देहे तावद्ब्रह्म न कीर्तयेत् ॥' इति ॥ २८ ॥ *आ च विपाकात् ॥ २९ ॥ यदि तावता कालेन तदन्नं पक्वं जीर्णं न भवति, तत आविपाकात् तस्य नाधीयीत ॥ २९ ॥ * अश्राद्धेन तु पर्यवदध्यात् ॥ ३० ॥ जीर्णे अजीर्णे च तस्मिन् अश्राद्धेनान्नेन पर्यवदध्यात् तस्योपर्यश्राद्धमन्नं भुञ्जीतेत्युक्तं भवति । केचित् अत्र 'अश्राद्धेने'ति वचनात् पूर्वत्रापि प्रेतान्नमिति श्राद्धमात्रं विवक्षितं मन्यन्ते ॥ ३० ॥

॥ इति दशमी खण्डिका ॥ प्र० १-प० ३-ख० १० ।

---

* काण्डोपाकरणे चामातृकस्य ॥ १ ॥ काण्डोपाकरणं काण्डव्रतादेशनम् । तस्मिन्नहनि अमातृकस्यान्नं भुक्त्वा सप्रदोषमहरनध्यायः । अपर आह—भुक्त्वेति नानुवर्तते । यथाचोत्तरत्र भुक्त्वाग्रहणम् । काण्डोपाकरणे अमातृकस्य माणवकस्य सप्रदोषमहरनध्यायः । एतेनोत्तरं व्याख्यातम् ॥ १ ॥ *काण्डसमापने चापितृकस्य ॥ २ ॥ काण्डसमापनं व्रतविसर्गः ॥ २ ॥ *मनुष्यप्रकृतीनां च देवानां यज्ञे भुक्त्वेत्येके ॥ ३ ॥ ये मनुष्या भूत्वा प्रकृष्टेन तपसा देवास्सम्पन्नास्ते मनुष्यप्रकृतयो नन्दिकुबेरादयः। तेषां यज्ञे तत्प्रीत्यर्थं ब्राह्मणभोजनं भुक्त्वा सप्रदोषमहरनध्याय इत्येके मन्यन्ते । मनुष्यमुखेन देवेष्विज्यमानेष्वित्यन्ये ॥ ३ ॥ * पर्युषितैस्तण्डुलैरामभांसेन च नानध्यायः ॥ ४ ॥ प्रेतसंक्लृप्तं चान्नमित्यस्यापवादः । पर्युषिता रात्र्यन्तरिताः । प्रतिगृहीतेषु तण्डुलेष्वद्य पक्त्वा भुज्यमानेषु नानध्यायः । तथा आममांसेन तदहर्भक्षितेनापि नानध्यायः । पर्युषितेनेत्येके ।

'नन्दीश्वरस्कन्दकुमारादय ' इति पाठान्तरम् ।

'पर्युषितै'रिति वचनात्तदहर्भक्षितैः सप्रदोषमहरनध्यायः ॥ ४ ॥ *तथौषधिवनस्पतिमूलफलैः ॥ ५ ॥ ओषधिग्रहणेन वीरुधोऽपि गृह्यन्ते । वनस्पतिग्रहणेन वृक्षमात्रम् । तेषां मूलैः सूरणकन्दादिभिः फलैश्चाम्रादिभिः पक्वैरपक्वैश्च तदहर्भक्षितैरपि नानध्यायः ॥ ५ ॥ *यत्काण्डमुपाकुर्वीत यस्य चानुवाक्यं कुर्वीत न तत्तदहरधीयीत ॥ ६ ॥ यस्मिन्नहनि यत्काण्डमुपाकृतं न तत्तदहरधीयीत । तथा श्रावण्यां पौर्णमास्यामुपाकृत्य प्रशस्तेऽहरन्तरे यस्य काण्डस्यानुवाक्यमध्येता गुरुरारम्भं कुर्वीत न तत्तदहरधीयीत । अहरित्यहोरात्रोपलक्षणम् ॥ ६ ॥ * उपाकरणसमापनयोश्च पारायणस्य तां विद्याम् ॥७॥ अनेकवेदाध्यायी यद्येकस्य वेदस्य पारायणं कुरुते तदा तस्य पारायणस्य ये उपाकरणोत्सर्जने, तयोः कृतयोस्तां विद्यां तदहर्नाधीयीत । एतदेव ज्ञापकं पारायणस्याप्युपाकरणोत्सर्जने भवत इति । 'तां विद्यामि'ति वचनाद्विद्यान्तराध्ययने न दोषः ॥ ७ ॥* वायुर्घोषवान् भूमौ तृणसंवाहो वर्षति वा यत्र धाराः प्रवहेत् ॥८॥ घोषवान् कर्णश्रवः । भूमाववस्थितानि तृणानि संवहति उत्क्षिप्य गमयतीति तृणसंवाहः वर्षति वा देवे धाराः प्रवहेत् विक्षिपेत् । यत्र देशे एवं विधो वायुस्तत्र तावन्तं कालं नाधीयीत । अत्र मनुः—'कर्णश्रवेऽनिले रात्रौ दिवा पांसुसमूहने ॥' इति ॥८॥ उत्तरे द्वे सूत्रे निगदसिद्धे—* ग्रामारण्ययोश्च सन्धौ महापथे च विप्रोष्य च समध्ययनं तदहः ॥ ९ ॥ यदा सहाधीयानाः कारणवशाद्विप्रवसेयुः । केचिच्चाचार्येण वा संङ्गतास्तदा समध्ययनं सहाधीयमानं प्रदेशं तदहर्नाधीयीत । विप्रोषितानां यदहः पुनर्मेलनं तदहर्नाधीयीतेत्यन्ये ॥ ९ ॥ *स्वैरिकर्मसु च ॥१०॥ नाधीयीतेत्येव ॥१०॥ अत्रोदाहरणम्—* यथा दन्तप्रक्षालनोत्सादनानुलेखनानीति ॥ ११॥ णत्वमार्कं छिमकम् । अ पपाठो वा ॥ ११ ॥* तावन्तं कालं नाधीयीताध्यापयेद्वा ॥ १२॥ ते स्वैरिकर्मसु तावन्तं कालमध्ययनमध्यापनञ्च वर्जयेत् ॥ १२॥*सन्ध्योः ।१३ सज्योतिषोऽज्योतिषोऽदर्शनात् उभे सन्ध्ये । तयोस्तावन्तं कालं नाधी

यीताध्यापयेद्वा । एवमुत्तरत्राप्यनुवृत्तिः ॥ १३ ॥ उत्तरे द्वे सूत्रे निगदसिद्धे— *** तथा वृक्षमारूढोऽप्सु नावगाढो नक्तं चापावृते ॥ १४॥** विवृतद्वारमपावृतम् । तत्र नक्तं नाधीयीत ॥ १४॥ ***दिवा च पिहिते ॥१५॥** संवृतद्वारं पिहितम् । तत्र दिवा नाधीयीत ॥ १५ ॥ ***अविहितमनुवाकाध्ययनमाषाढवासन्तिकयोः ॥ १६ ॥** वासन्तिको वसन्तोत्सवः । स च चैत्रे मासि शुक्लत्रयोदश्यां भवति । आषाढशब्देनापि तस्मिन्मासे क्रियमाणस्तादृशः कश्चिदिन्द्रोत्सवादिर्विवक्षितः । तयोस्तदहरनुवाकाध्ययनमविहितम् । अनुवाकग्रहणान्न्यूने न दोषः । अपर आह— अनुवाकग्रहणान्मन्त्रब्राह्मणयोरेव प्रतिषेधः, नाङ्गानामिति ॥ १६ ॥ *** नित्यप्रश्नस्य चाविधिना ॥ १७ ॥** नित्यं प्रश्नाध्ययनं यत्र स नित्यप्रश्नो ब्रह्मयज्ञः । तस्य चाविधिना वक्ष्यमाणेन प्रकारेण विनानुवाकाध्ययनमविहितम् । यद्यपि नित्यं ब्रह्मयज्ञाध्ययनं तथापि केनचिदप्यङ्गेन विना न कर्तव्यम् । तेन विस्मृत्य प्रातराशे कृते प्रायश्चित्तमेव न ब्रह्मयज्ञः । मनुः— 'स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ।' इति । १७ । ***तस्य विधिः ॥१८॥** तस्य नित्यप्रश्नस्य विधिर्वक्ष्यते ॥ १८ ॥ ***अकृतप्रातराश उदकान्तं गत्वा प्रयतः शुचौ देशेऽधीयीत यथाध्यायमुत्सृजन्वाचा ॥१९॥** अकृतदिवाभोजन उदकसमीपं गत्वा प्रयतः स्नानमार्जनादिशुद्धः शुचौ देशे प्राच्याम् उदीच्यां वा दिश्यच्छादिर्देशेऽधीयीत । यथाध्यायं यथापाठमनुषङ्गरहितमुत्सृजन् आदित आरभ्य प्रथमादिष्वष्टसु अधीयीत । द्वितीयादिषूत्सृज्य ततःपरमधीयीत । वाचा उच्चैरित्यर्थः ॥ १९ ॥ ***मनसा चानध्याये ॥२०॥** अनध्याये च मनसाधीयीत नित्यस्वाध्यायम् ॥ २० ॥ *** विद्युति चाभ्यग्रायां स्तनयित्नावप्रायत्ये प्रेतान्ने नीहारे च मानसं परिचक्षते ॥ २१ ॥** विद्युति अभ्यग्रायामविरतायाम् । स्तनयित्नौ चाभ्यग्रे । अप्रायत्ये आत्मनोऽशुचिभावे । प्रेतान्ने च भुक्ते । नीहारे च नीहारो हिमानी तस्मिंश्च वर्तमाने मानसमनन्तरोक्तमध्ययनं परिचक्षते वर्जयन्ति ॥ २१ ॥ ***श्राद्धभोजन एवैके ॥ २२ ॥** एके त्वाचार्याः श्राद्धभोजन एव मानसं परिचक्षते न विद्युदादिषु । २२ ।

*विद्युत्स्तनयित्नुवृष्टिश्चापर्तौ सन्निपतेयुस्त्र्यहमनध्यायः ॥२३॥ अप-र्तौ यस्मिन् देशे यो वर्षाकालः ततोऽन्यस्तत्रापर्तुः । तत्र यदि विद्युदादय-स्सन्निपतेयुः समुदितास्स्युः तदा त्र्यहमनध्यायः॥२३॥* यावद्भूमिर्व्युदके-त्येके॥२४॥यावता कालेन भूमिर्विगतोदका भवति तावन्तं कालमनध्याय इत्ये-के मन्यन्ते ॥२४॥*एकेन द्वाभ्यां वैतेषामाकालम् ॥२५॥ एतेषां विद्यु-दादीनां मध्ये एकेन द्वाभ्यां वा योगे आकालमनध्यायः । अपरेद्युरागतस्य कालस्य प्राप्तेरित्यर्थः ॥२५॥ * सूर्याचन्द्रमसोर्ग्रहणे भूमिचलेऽपस्वान उल्कायामग्न्युत्पाते च सर्वासां विद्यानां सार्वकालिकमाकालम्॥२६॥ 'सूर्याचन्द्रमसो'रिति वचनं बृहस्पत्यादिनिवृत्त्यर्थम् । भूमिचले भूमिकम्पे । अपस्वाने निर्घाते । उल्कायामुल्कापाते । अग्न्युत्पाते ग्रामादिदाहे । एतेषु नि-मित्तेषु सर्वेषु सर्वासां विद्यानाम् 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥' इत्युक्तानाम् । सार्वकालिकमृतौ चापर्तौ चाकालमनध्यायः । अत्र 'सर्वासामि'ति वचनादन्यत्र वेदानामेव प्र-तिषेधः । अङ्गानामपीत्यन्ये ॥२६॥* अभ्रं चापर्तौ सूर्याचन्द्रमसोः परिवेष इन्द्रधनुः प्रतिसूर्यमत्स्यश्च वाते पूतिगन्धे नीहारे च सर्वेष्वेते-षु तावत्कालम् ॥२७॥ अपर्तावभ्रे दृश्यमाने यावद्दृश्यते तावत्कालमन-ध्यायः । एवं परिवेषादिष्वपि योज्यम् । अत्रापि बृहस्पत्यादिपरिवेषे न दोषः । इन्द्रधनुः प्रसिद्धम् । सूर्यसमीपे तदाकृतिः प्रतिसूर्यः । मत्स्यः पु-च्छवन्नक्षत्रम् । समाहारद्वन्द्वे छान्दसो लिङ्गव्यत्ययः । सर्वेष्वेतेषु वाता-दिषु च त्रिषु तावत्कालमनध्यायः । वाते घोषवति । पूतिगन्धे दुर्गन्धे । नीहारे हिमान्याम् । वातादिग्रहणं पूर्वोक्तानां श्वगर्दभानामुपलक्षणा-र्थम् । पुनरिहवचनं तावत्कालमिति विधातुम् । अतएव गर्दभादिग्रहणे कर्तव्ये पूर्वत्र पाठस्य चिन्त्यं प्रयोजनम् ॥ २७ ॥*मुहूर्तं विरते वाते ॥ ॥२८॥ वाते घोषवति विरतेऽपि मुहूर्तमात्रमनध्यायः । द्वे नाडिके मुहूर्तः । ॥२८॥* सलावृक्यामेकसृक इति स्वप्नपर्यन्तम्॥२९॥ तावत्काल-मित्यस्यापवादोऽयम् ॥२९॥*नक्तं चारण्येऽनग्नावहिरण्ये वा ॥३०॥

रात्रावग्निवर्जिते हिरण्यवर्जिते वाऽरण्ये नाधीयीत ॥ ३० ॥ * **अननूक्तं चापत्तौ छन्दसा नाधीयीत** ॥ ३१ ॥ उत्सर्जनादूर्ध्वमुपाकरणादर्वागपर्तुः । तत्र छन्दसोऽननूक्तमंशमपूर्वं नाधीयीत । ग्रहणाध्ययनमपर्तौ न कर्तव्यम् । यद्यपि 'तैष्यां पौर्णमास्यां रोहिण्यां वा विरमे'दित्युक्तम् । तथापि कियन्तं कालं तद्विरमणं कस्माद्वाऽध्ययनादित्यपेक्षायामिदमुच्यते—एतावन्तं कालं ग्रहणाध्यनं न कर्तव्यम् । धारणाध्ययने तु न दोषः । तथा 'छन्दस' इति वचनादङ्गानां ग्रहणाध्ययनेऽपि न दोषः ॥ ३१ ॥ * **प्रदोषे च** ॥ ३२ ॥ प्रदोषे चाननूक्तमृतावपि नाधीयीत । 'मासं प्रदोषे नाधीयीते'त्येतत्तु, धारणाध्ययनस्यापि प्रतिषेधार्थम् । अपर आह—यस्यां रात्रौ द्वादशी त्रयोदशी च मिश्रे भवतः, तस्यां प्रदोषे नाधीयीत । अनूक्तमननूक्तं च ऋतावपर्तौ च एष आचार इति ॥ ३२ ॥ * **सार्वकालिकमाम्नातम्** ॥ ३३ ॥ आम्नातमधीतं तत्सार्वकालिकमपर्तौ प्रदोषे च सर्वस्मिन्कालेऽध्येतव्यम् ॥ ३३ ॥ * **यथोक्तमन्यदतः परिषत्सु** ॥ ३४ ॥ अत एतस्मादनध्यायप्रकरणादन्यदनध्यायनिमित्तम् । परिषत्सु मानवादिधर्मशास्त्रेषु यथोक्तं द्रष्टव्यम् । तत्र वासिष्ठः—'दिग्दाहपर्वतप्रपातेषूपलरुधिरपांसुवर्षेष्वाकालिक'मिति । यमः—'श्लेष्मातकस्य शाल्मल्या मधूकस्य तथाप्यधः । कदाचिदपि नाध्येयं कोविदारकपित्थयोः॥' सङ्क्रमोद्यानदेवसमीपेषु नाधीयीत ॥ ३४ ॥

॥ इति एकादशी खण्डिका ॥ प्र० १ प० ३ ख० ११ ॥

---

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां प्रथमप्रश्ने तृतीयः पटलः ॥ ३ ॥

---

* **तपः स्वाध्याय इति ब्राह्मणम्** ॥ १ ॥ योऽयं नित्यस्वाध्यायस्तत्तपः कृच्छ्रादि । कृच्छ्रचान्द्रायणादिलक्षणं तपो यावत्फलं साधयति तावत्साधयतीत्यर्थः ॥ १ ॥ * **तत्र श्रूयते—स यदि तिष्ठन्नासीनः शयानो वा स्वाध्यायमधीते तप एव तत्तप्यते तपो हि स्वाध्याय इति** ॥ २ ॥ तत्रैव ब्राह्मणे 'स यदि तिष्ठन्नासीन' इत्यापत्कल्पः श्रूयते। तत्र 'दर्भाणां महदुपस्तीर्योपस्थं कृत्वा प्राङासीनः स्वाध्याय' मित्यादिर्मुख्यः कल्पो ब्राह्मण एवोक्तः ।

इह पुनरासीनकचनं यथाकथञ्चिदासनार्थम् । सर्वथाप्यधीयानस्तप एव तप्यत इति ब्राह्मणार्थः । मनुरप्याह—'आहैव स नखाग्रेभ्यः परमं तप्यते तपः । यस्स्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम् ॥' इति । स्रग्वीति स्वैरं दर्शयति ॥ २ ॥ एवं कर्तुं नियमेन प्यतीवादरणीय इत्युक्त्वा कालेऽप्याह— * **अथापि वाजसनेयिब्राह्मणम् । ब्रह्मयज्ञो ह वा एष यत्स्वाध्यायस्तस्यैते वषट्कारा यत्स्तनयति यद्विद्योतते यदवस्फूर्जति यद्वातो वायति । तस्मात् स्तनयति विद्योतमानेऽवस्फूर्जति वाते वा वायत्यधीयीतैव वषट्काराणामच्छम्बट्कारायेति ॥ ३ ॥** अथापि अपि च । स्वाध्यायो नाम यदेष ब्रह्मयज्ञः ब्रह्म वेदः तत्साधनो यागः । यथा दर्शपूर्णमासादयः पुरोडाशादिसाधनाः । हवैशब्दौ प्रसिद्धिद्योतयतः । तस्य यज्ञस्यैते वक्ष्यमाणाः स्तनयित्न्वादयो वषट्काराः । बहुवचननिर्देशात् । वषट्कारानुवषट्कारस्वाहाकारास्सर्वे प्रदानार्था गृह्यन्ते । स्तनितं मेघशब्दः । विद्योतनं विद्युद्व्यापारः । अवस्फूर्जनमशनिपातः । तत्र 'अवस्फूर्जथुर्लिङ्ग'मिति दर्शनात् । 'वायती'ति 'वै शोषण' इत्यस्य रूपम् । यथा आर्द्रप्रदेशस्तु शुष्को भवति तथा वायतीत्यर्थः । यस्मादेते वषट्काराः तस्मात् स्तनयित्न्वादिष्वनध्यायनिमित्तेषु सत्स्वप्यधीयीतैव । न पुनरनध्याय इति नाधीयीत । किमर्थं वषट्काराणामेतेषामच्छम्बट्काराय अव्यर्थत्वाय । अन्यथा एते वषट्कारा व्यर्थाः स्युः । ततश्च यथा होत्रा वषट्कृते अध्वर्युर्न जुहुयात् तादृगेव तत्स्यात् ॥ ३ ॥ * **तस्य शाखान्तरे वाक्यसमाप्तिः ॥ ४ ॥** तस्य वाजसनेयिब्राह्मणस्य । शाखान्तरे वाक्यसमाप्तिर्भवति न तावति पर्यवसानम् ॥ ४ ॥ तदेव शाखान्तरं पठति—* **अथ यदि वातो वायात्स्तनयेद्वा विद्योतेत वावस्फूर्जेद्वैकां वर्चमेकं वा यजुरेकं वा सामाभिव्याहरेद्भूर्भुवस्सुवस्सत्यं तपः श्रद्धायां जुहोमीति वै तत् । तेनो हैवास्यैतदहस्स्वाध्याय उपात्तो भवति ॥५॥** अन्ते इतिशब्दः अध्याहार्यः । वातादिषु सत्सु एकामृचमधीयीत । प्राप्ते प्रदेशे यजुर्वेदाध्यायी एकं यजुः । सामवेदाध्यायी एकं साम । सर्वेषु वा वेदेषु 'भूर्भुवःसुव'रित्यादिकं

यजुरभिव्याहरेत् । न पुनर्यथापूर्वं प्रश्नमात्रम् । तेनैव तावतैवास्याध्ये-तुस्तदहस्तस्मिन्नहनि स्वाध्याय उपात्तो भवति अधीतो भवतीति यावत् ॥५॥ केचित् 'भूर्भुवःसुव'रित्यादिकं ब्राह्मणभागाध्ययनविषयं मन्यन्ते न 'सावित्रि-कम् । कस्मात् । पुनर्वाजसनेयिब्राह्मणस्य 'उदाहृतो' शाखान्तरे वाक्यं समाप्तिराश्रीयते न पुनर्यथाश्रुतमीत्रं गृह्यते । तत्राह—*एवं सत्यार्यसमयेनाविप्रतिषिद्धम् ॥ ६ ॥ एवं सति एवं वाक्यपरिसमाप्त्यवाश्रीयमाणायामार्यसमयेन आर्याः शिष्टा मन्वादयः तेषां समयो व्यवस्था-तेन । अविप्रतिषिद्धं भवति । इतरथा विप्रतिषिद्धं स्यात् ॥६॥ कथम्—*अध्यायानध्यायं ह्युपदिशन्ति । तदनर्थकं स्याद्वाजसनेयिब्राह्मणं चेदवेक्षेत ॥ ७ ॥ आर्या अध्यायमनध्यायं चोपादिशन्ति । तदुपदेशन-मनर्थकं स्यात् यदि वाजसनेयिब्राह्मणं यथाश्रुतमवेक्षेताध्येता ॥७॥ अन-र्थकमेवेदमस्तु । श्रुतिविरोधात् । तत्राह—*आर्यसमयो ह्यगृह्यमान-कारणः ॥ ८ ॥ योऽयमध्यायानध्यायविषय आर्यसमयः न तत्र किञ्चित्का-रणं गृह्यते । यथा 'वैसर्जनहोमीयं वासोऽध्वर्यवे ददाती'त्यत्रागृह्यमाणकारण-श्चार्यसमयः श्रुत्यनुमानद्वारेण प्रमाणम् । अतो वाक्यपरिसमाप्तिरेव युक्ता । एवं हि वाजसनेयिब्राह्मणस्यापि नात्यन्तबाधः । अनध्यायोपदेशस्या-पि प्रभृताध्ययनविषयतया नानर्थक्यमिति । सूत्रे 'अगृह्यमानकारण' इ-ति णत्वाभावश्छान्दसः ॥८॥ का पुनरसौ स्मृतिः । या ब्रह्मयज्ञेऽप्यनध्याय-मुपदिशति । मानवे तावद्विपर्ययः श्रूयते— 'नैत्यके नास्त्यनध्यायो ब्रह्मसूत्रं हि तत्स्मृतम् ।' इति । सामान्येनानध्यायोपदेशस्तु, ब्रह्मयज्ञा-दन्यत्र चरितार्थः । तस्मात्तादृशी स्मृतिर्मृग्या । एवं तर्ह्यग्निहोत्रादिष्व-पि मन्त्राणामनध्यायः प्राप्नोति । नेत्याह— *विद्यां प्रत्यनध्यायः श्रूयते न कर्मयोगे मन्त्राणाम् ॥ ९ ॥ विद्या वेदाध्ययनम् । तां प्रत्यनध्यायः श्रूयते । न पुनर्मन्त्राणां कर्मयोगे । हेतुः परिभाषायामुक्तोऽर्थान्तरत्वादिति । अर्था-न्तरं हि कर्मणि प्रयोगो मन्त्राणां न पुनर्ग्रहणार्थमध्ययनम् । पारायणाध्ययन-मध्येऽनध्यायागमो भवति वा न वेति चिन्त्यम् । एवं श्रीरुद्रजपेऽपि ॥९॥ कथं

पुनरार्यसमयः प्रमाणम् । यावता न तेषामतीन्द्रियेऽर्थे ज्ञानं सम्भवति।तः
* **ब्राह्मणोक्ता विधयस्तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते** ॥९
विधीयन्त इति विधयः कर्माणि । ते सर्वे स्मार्ता अपि ब्राह्मणेष्वेवोक्ता
न्निदानीं ब्राह्मणानि नोपलभ्यन्ते । सत्यम् । तेषामुत्सन्नाः पाठा
अध्येतृदौर्बल्यात । कथं हि तेषामस्तित्वम् । प्रयोगादनुमीयन्ते ।
योगः स्मृतिनिबन्धनमनुष्ठानं च । तस्माद्ब्राह्मणान्यनुमीयन्ते । मन्
दिभिरुपलब्धानीति । अथ पुनरन्यथा स्मरेयुरनुतिष्ठेयुर्वा । सम्भ
न तेषां वेदसंयोगः ॥ १०॥ अथ प्रसङ्गादपस्मृतिरुच्यते—* **यत्र प्रीत्युपलब्धितः प्रवृत्तिर्न तत्र शास्त्रमस्ति** ॥ ११ ॥ यत्र पितृष्व
सुतामातुलसुतापरिणयनादौ । प्रीत्युपलब्धितः प्रवृत्तिर्न तत्रोत्पन्नपाठं शा
मनुमीयते । प्रीतेरेव प्रवृत्तिहेतोः सम्भवात् ॥११॥ ततश्च—* **तदनुवर्तमानः नरकाय राध्यति** ॥ १२ ॥ तद्विधमनुतिष्ठन्नरकायैव कल्पते ॥ १२ ॥
* **अथ ब्राह्मणोक्ता विधयः** ॥ १३ ॥ एवं स्मृत्याचारप्राप्तानां श्रुति-मूलत्वमुक्तम् । अथ प्रत्यक्षब्राह्मणोक्ता एव केचिद्विधयो व्याख्यायन्ते । तेषामपि स्मार्ते अनुप्रवेशार्थम् । तेन तदतिक्रमे स्मार्तातिक्रमनिमित्तमेव प्रायश्चित्तं भवति ॥ १३ ॥ * **तेषां महायज्ञा महासत्राणीति च संस्तुतिः** ॥१४॥ तेषां वक्ष्यमाणानां महायज्ञा इति संस्तुतिः । स्वा-ध्यायब्राह्मणे महासत्राणीति च संस्तुतिर्भवति । बृहदारण्यकादौ सं-स्तुतिग्रहणेन संस्तुतिमात्रमिदं नामधेयं धर्मातिदेशार्थमिति दर्शयति। म-हायज्ञेषु सोमयागेषु ये धर्माः 'न ज्येष्ठं भ्रातरमन्तरीत्य सोमेन यष्ट-व्य'मित्यादयः । ये च महासत्रस्य गवामयनस्य धर्माः 'इष्टप्रथमं-यज्ञानामाधिकार' इत्यादयः। उभयेऽपि ते वक्ष्यमाणेषु पञ्चमहायज्ञेषु भ-वन्ति ॥ १४॥ के पुनस्ते तानाह—* **अहरहर्भूतबलिर्मनुष्येभ्यो य-थाशक्ति दानम्** ॥ १५ ॥ वैश्वदेवे वक्ष्यमाणेन बलिहरणप्रकारेण भूते-भ्योऽहरहर्भूतबलिर्देयः । एष भूतयज्ञः । मनुष्येभ्यश्च यथाशक्ति दानं कर्तव्यम् । एष मनुष्ययज्ञः ॥ १५ ॥

॥ इति द्वादशी खण्डिका ॥ प्र०१ प०४ ख०१२ ॥

*देवेभ्यः स्वाहाकार आ काष्ठात्पितृभ्यः स्वधाकार ओदपात्रात् स्वाध्याय इति ॥ १ ॥ देवेभ्यः । स्वाहाकारेण प्रदानमाकाष्ठात् । अशनीयाभावे काष्ठमपि तावद्देयम् । वैश्वदेवोक्तप्रकारेणैवैष देवयज्ञः । केचित्तु वैश्वदेवाहुतीभ्यः पृथग्भूतामिमामाहुतिं मन्यन्ते । 'देवेभ्यः स्वाहे'ति च मन्त्रमिच्छन्ति 'देवयज्ञेन यक्ष्य' इति सङ्कल्पमिच्छन्ति । वयं तु न तथेति गृह्य एवावोचाम । केचिदाहुः—'आकाष्ठा'दिति वचनादशनीयाभावेन भोजनलोपेऽपि यथाकथञ्चित् वैश्वदेवं कर्तव्यम् । पुरुषसंस्कारत्वादिति । अपरे तु अशनीयसंस्कार इति वदन्तः भोजनलोपे वैश्वदेवं न कर्तव्यमिति स्थितिः । पितृभ्यः स्वधाकारेण प्रदानम् ओदपात्रात् अन्नाद्यभावेऽपि उदपात्रमपि तावद्देयम् । पात्रग्रहणात् सह पात्रेण देयम् । एष पितृयज्ञः । स्वाध्यायः 'तस्य विधि'रित्यारभ्योक्तो नित्यस्वाध्यायः । ऋषियज्ञः । इति समाप्तौ । इत्येते महायज्ञा इति । न चायमुपदेशक्रमोऽनुष्ठान उपयुज्यते । अनुष्ठानं तु, ब्रह्मयज्ञो देवयज्ञो भूतयज्ञः पितृयज्ञो मनुष्ययज्ञ इति ॥ १ ॥ पूजां प्रसङ्गादाह—*पूजा वर्णज्यायसां कार्या ॥ २ ॥ वर्णतो यो ज्यायान् प्रशस्ततरो भवति तस्यावरेण वर्णेन कार्या पूजा । अध्वन्यनुगमनादिका उत्सवादिषु च गन्धलेपादिका ॥ २ ॥ *वृद्धतराणां च ॥ ३ ॥ सजातीनामपि पूजा कार्या । तरनिर्देशात् विद्यावयःकर्मभिर्वृद्धानां ग्रहणम् । हीनानामपीत्येके । तथा च मनुः—'शूद्रोऽपि दशमीं गत' इति ॥ ३ ॥ पूजा कार्येत्युक्तम् । तद्विरोधिहर्षो वर्ज्य इत्याह *हृष्टो दर्पति दृप्तो धर्ममतिक्रामति धर्मातिक्रमे खलु पुनर्नरकः ॥ ४ ॥ अभिमतलाभादिनिमित्तचित्तविकारो हर्षः । तद्युक्तो हृष्टः । स दर्पति दृप्यति । दर्पो गर्वोऽभिमानः । दृप्तो धर्ममतिक्रामति । पूज्यपूजनादिकं प्रति स्तब्धत्वात् । खलुशब्दो वाक्यालङ्कारे । धर्मातिक्रमे खलु पुनर्नरको भवति निरयं प्रतिपद्यते । तस्माद्धर्मातिक्रममूलभूतो हर्षो न कर्तव्यः । यद्यपि भूतदाहीयेषु हर्षो वक्ष्यते । तथापि विशेषेण हर्षस्य वर्जनार्थोऽयमारम्भः । योगाङ्गत्वाद्वक्ष्यमाणस्य ॥ ४ ॥ * न समावृत्ते समादेशो विद्यते ॥ ५ ॥ स-

मावृत्तं शिष्यं प्रति आचार्येण समादेशो न देयः । इदं त्वया कर्तव्यमिति । यथा असमावृत्तदशायामाज्ञा दीयते 'उदकुम्भमाहरेति । नैवमिदानीम् । न स्वेच्छया करणे प्रतिषेध्यम् ॥ ५ ॥* **ओङ्कारस्स्वर्गद्वारं तस्माद्ब्रह्माध्येष्यमाण एतदादि प्रतिपद्येत** ॥ ६ ॥ ओङ्कारः प्रणवः । स्वर्गस्य द्वारमिव । यथा द्वारेण गृहाभ्यन्तरं प्राप्यते, तथानेन स्वर्गः । तस्मात् ब्रह्म वेदं स्वर्गसाधनमध्येष्यमाण एतदादि अनाम्नातमप्योङ्कारमादौ कृत्वा प्रतिपद्येत उपक्रमेताध्येतुम् ॥ ६ ॥* **विकथां चान्यां कृत्वैवं लौकिक्या वाचा व्यावर्तते ब्रह्म** ॥ ७ ॥ अध्ययने अनुपयुक्ता कथा विकथा । तां चान्या कृत्वा तदादि प्रतिपद्येत । एवं सति ब्रह्म वेदः लौकिक्या वाचा व्यावर्तते तया मिश्रितं न भवति । पुनरप्योङ्कारमेव स्तौति—* **यज्ञेषु चैतदादयः प्रसवाः** ॥ ८ ॥ यज्ञेषु, दर्शपूर्णमासादिषु । एतदादयः ओङ्कारादयः । प्रसवा अनुज्ञावाक्यानि भवन्ति । ब्रह्मादीनाम् । ओँ प्रणय ओँ निर्वप ओँ स्तुवीध्वमिति ॥ ८ ॥ * **लोके च भृतिकर्मस्वेतदादीन्येवं वाक्यानि स्युर्यथा पुण्याहं स्वस्त्यृद्धिमिति** ॥ ९ ॥ यथा यज्ञेष्वोङ्कारादयः प्रसवाः । लोके च भृतिकर्मसु पाणिग्रहणादिषु एतदादीन्येव वाक्यानि स्युः । तान्युदाहरति— यथा पुण्याहवाचने ओँ कर्मणः भवन्तो ब्रुवन्त्वि'ति वाचयिता वदति । ओँ पुण्याहमिति प्रतिवक्तारः । ओँ कर्मणे स्वस्तीति वाचयिता । ओँ स्वस्ति कर्मण्य इतीतरे । ओँ कर्मण ऋद्धिमिति वाचयिता । ओँ कर्मर्ध्यतामितीतरे । तस्मादेवं प्रशस्त ओँकार इति ॥ ९ ॥* **नासमयेन कृच्छ्रं कुर्वीत त्रिःश्रावणं त्रिस्सहवचनमिति परिहाप्य** ॥ १० ॥ समयः शुश्रूषा तेन विना कृच्छ्रं दुःखावधारणपूर्वं ग्रन्थं न कुर्वीत । क्रियासामान्यवचनः करोतिरध्ययनेऽध्यापनेच वर्तते । समयेन विना शिष्योऽपि कृच्छ्रं ग्रन्थं नाधीयीत । आचार्योऽपि नाध्यापयेत । तथा च मनुः—'धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा । न तत्र विद्या वप्तव्या शुभं बीजमिवोषरे ॥' इति । किमविशेषेण नेत्याह—त्रिःश्रावणं त्रिस्सहवचनमिति परिहाप्य ।

वर्जयित्वा । त्रिःश्रावणमात्रे त्रिस्संहवचनमात्रे चान्यतरापेक्षया क्रियमाणे शुश्रूषा नापेक्ष्या । ततोऽधिके सर्वत्रापेक्ष्येति ॥ १० ॥ *अविचिकित्सा-यावद्ब्रह्म निगन्तव्यमिति हारीतः ॥ ११ ॥ विचिकित्सा संशयः । त-दभावोऽविचिकित्सा सा यावदुत्पद्यते तावद्ब्रह्म निगन्तव्यं नियमपूर्वमधि-गन्तव्यमिति हारीतः आचार्यो मन्यते । अत्र पक्षे त्रिःश्रावणत्रिस्संहवचनयो-रपि शुश्रूषितव्यम् । ब्रह्मग्रहणादङ्गेषु नायं विधिः ॥ ११ ॥ *न बहि-र्वेदे गतिर्विद्यते ॥ १२ ॥ वेदाद्बहिर्भूते काव्यनाटकश्रवणे । गतिः शुश्रूषा न विद्यते । यद्यपि तदुपयुक्तं वेदार्थज्ञाने ॥ १२ ॥ *समादिष्टमध्यापय-न्तं यावदध्ययनमुपसंगृह्णीयात् ॥ १३ ॥ य आचार्येण समादिष्टोऽध्यापयति तं यावदध्ययनं यावदध्यापयते तावदुपसङ्गृह्णीयात् । तथा 'समादिष्टोऽध्या पयती'त्यत्राचार्यदारवद्वृत्तिरुक्ता । तत्र चान्यत्रोपसङ्ग्रहणादिति वर्तते । तत उपसङ्ग्रहणार्थोऽयमारम्भः ॥ १३ ॥ *नित्यमर्हन्तमित्येके ॥ १४ ॥ स चेत्समादिष्टोऽर्हन् भवति विद्यासमाचारादिना । ततो नित्यमुपस गृह्णीयात् । इत्येके मन्यन्ते । स्वमतं तु यावदध्ययनमिति ॥ १४ ॥ *न गतिर्विद्यते ॥ १५ ॥ यद्यप्यसावर्हन् भवति । तथाप्याचार्ये या गतिः शु-श्रूषा सा तस्मिन्न कर्तव्या ॥ १५ ॥ *वृद्धानां तु ॥ १६ ॥ तुश्चार्थे । वृद्धानां चान्तेवासिनां न गतिर्विद्यते । पूर्ववयसा अन्तेवासिना अवरवयां अपि च न शुश्रूषितव्यः । अध्ययनादूर्ध्वमित्येके । अध्ययनकालेऽपीत्यन्ये ॥ १६ ॥ *ब्रह्मणि मिथो विनियोगे न गतिर्विद्यते ॥ १७ ॥ ब्रह्मणि वेदवि-षये मिथो विनियोगः क्रियते । बह्वृचो यजुर्वेदिनः सकाशाद्यजुर्वेदम धीते सोऽपि तस्मादृग्वेदम् । तदा परस्परं शुश्रूषा न कर्तव्या ॥ १७ ॥ अत्र हेतुं स्वयमेवाह—*ब्रह्म वर्धत इत्युपदिशन्ति ॥ १८ ॥ द्वयोरपि ब्रह्म वर्धते । सैव ब्रह्मवृद्धिः शुश्रूषेत्युपदिशन्त्याचार्याः ॥ १८ ॥ *निवे-शे वृत्ते संवत्सरेसंवत्सरे द्वौद्वौ मासौ समाहित आचार्यकुले व-सेद्भूयःश्रुतिमिच्छन्निति श्वेतकेतुः ॥ १९ ॥ भूयःश्रवणमिच्छन् पुरु-षो निवेशे दारकर्मणि वृत्तेऽपि प्रतिसंवत्सरं द्वौद्वौ मासौ समाहितो भू

त्वाऽचार्यकुले वसदिति श्वेतकेतुराचार्यो मन्यते ॥ १९ ॥ अत्र हेतुत्वेन श्वेतकेतोरेव शिष्यान्प्रति वचनम्— **एतेन ह्यहं योगेन भूयः पूर्वस्मात्कालाच्छ्रुतमकुर्वीति** ॥ २० ॥ एतेनानन्तरोक्तेन । योगेनोपायेन । अहं पूर्वस्मात् ब्रह्मचर्यकालात् भूयः बहुतरं श्रुतमकुर्वीति कृतवानस्मि अतो यूयमपि तथा कुरुध्वमिति ॥ २० ॥ **तच्छास्त्रैर्विप्रतिषिद्धम्** ॥ २१ ॥ तद्विधं श्वेतकेतोर्दर्शनं श्रुत्यादिभिः शास्त्रैर्विप्रतिषिद्धम् ॥ २१ ॥ कथमित्यत आह— ***निवेशे हि वृत्ते नैयमिकानि श्रूयन्ते** ॥ २२ ॥ हिशब्दो हेतौ । यस्मात् निवेशे वृत्ते नैयमिकानि कर्माणि श्रूयन्ते ॥ २२ ॥

**॥ इति त्रयोदशी खण्डिका ॥ प्र० १ प० ४ ख० १३ ॥**

---

कानि पुनस्तानि— **अग्निहोत्रमतिथयो यच्चान्यदेवं युक्तम्** ॥ १ ॥ अग्निहोत्रमतिथयः । अतिथयः अतिथिपूजा । 'यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः । एवं गृहस्थमाश्रित्य सर्वे जीवन्ति भिक्षवः ॥' इति । यच्चान्यदेवं युक्तम् । एवंविधं श्राद्धादि । एवमेतैः कर्मभिरहरहराक्रान्तस्य न शरीरकण्डूयनेष्वप्यवसरो भवति । स कथं द्वौ द्वौ मासौ गुरुकुले वसेदिति ॥ १ ॥ ***अध्ययनार्थेन यं चोदयेन्न चैनं प्रत्याचक्षीत** ॥ २ ॥ यमाचार्यं माणवकोऽध्ययनं प्रयोजनमुद्दिश्य चोदयेत् 'शिष्यस्तेऽहं शाधि मां त्वां प्रपन्न'मिति । स एनं माणवकं नैव प्रत्याचक्षीत । चशब्दोऽवधारणे ॥ २ ॥ किमविशेषेण नेत्याह— ***न चास्मिन् दोषं पश्येत्** ॥ ३ ॥ पाणिनिनिपातोऽस्ति—'निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चणकच्चिद्यत्रयुक्त'मिति । स चेदर्थे वर्तते । 'इन्द्रश्च मृळयाति न' इत्यादौ दर्शनात् । तस्यायमर्थः— न चेदस्मिन् माणवके दोषमनध्याप्यताहेतुं पश्येत् ॥ ३ ॥ ***यदृच्छायामसंवृत्तौ गतिरेव तस्मिन्** ॥ ४ ॥ समानमधीयानेषु कस्यचिद्यदृच्छायां दृष्टहेतुमन्तरेण बुद्धिमान्द्यादिनाध्ययनस्य समावृत्तिस्स्यात् अधीतो भागो माणवकान्तरवन्नागच्छेत् तदा तस्यां यदृच्छायामसंवृत्तौ तस्मिन्नाचार्ये गतिरेव शुश्रूषैव माणवकस्य शरणम् । तथा च मनुः—

'यथा खनन् खनित्रेण नरो वार्यधिगच्छति । तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥' इति । अधिकं शुश्रूषितो हि गुरुस्सर्वात्मना तं शिक्षयेदिति ॥ ४ ॥ *मातरि पितर्याचार्यवच्छुश्रूषा ॥ ५ ॥ मातृग्रहणेन पितामहीप्रपितामह्योरपिग्रहणम् । पितृग्रहणेन पितामहप्रपितामहयोः । सर्व एते आचार्यवच्छुश्रूषितव्याः" ॥ ५ ॥ *समावृत्तेन सर्वे गुरव उपसङ्ग्राह्याः ॥ ६ ॥ उक्ताश्चानुक्ताश्च ज्येष्ठमातुलादयः सर्वे गुरवः समावृत्तेनोपसङ्ग्राह्याः ॥ ६ ॥ *प्रोष्य च समागमे ॥ ७ ॥ यदि स्वयं प्रोष्य समागतो भवति । गुरवो वा प्रोष्य समागताः । तदापि ते उपसङ्ग्राह्याः ॥ ७ ॥ * भ्रातृषु भगिनीषु च यथापूर्वमुपसङ्ग्रहणम् ॥ ८ ॥ पूर्वेणैव सिद्धे क्रमार्थं वचनम् । यथापूर्वं ज्येष्ठक्रमेणेति ॥ ८ ॥ * नित्या च पूजा यथोपदेशम् ॥ ९ ॥ 'पूजा वर्णज्यायसां कार्या वृद्धतराणां च'त्युपदेशानुरोधेन या नित्या पूजा सा यथापूर्वं वृद्धक्रमेण ॥ ९ ॥ *ऋत्विक्श्वशुरपितृव्यमातुलानवरवयसः प्रत्युत्थायाभिवदेत् ॥ १० ॥ 'त्रिवर्षपूर्वः श्रोत्रियोऽभिवादनमर्हती'ति वदति । तेनावरवयस ऋत्विगादयोऽप्यभिवादयन्ते । तानभिवादयमानान् प्रत्युत्थायाभिवदेत् । नान्येष्विव सुखमासीनोऽभिवदति । उत्कृष्टानां तेषामियमेव पूजा ॥ १० ॥ *तूष्णीं वोपसंगृह्णीयात् ॥ ११ ॥ अथवा प्रत्युत्थाय स्वयमपि तांस्तूष्णीमुपसंगृह्णीयात् । विद्याचारित्राद्यपेक्षो विकल्पः ॥ ११ ॥ अथाभिवाद्या उच्यन्ते— *दशवर्षं पौरसख्यं पञ्चवर्षं तु चारणम् । त्रिवर्षपूर्वः श्रोत्रियोऽभिवादनमर्हति ॥ १२ ॥ पुरोभव पौरम् । पौरं च तत्सख्यं च पौरसख्यं सेवानिबन्धनं बान्धवं तदभिवादनस्य निमित्तम् । कीदृशं दशवर्षान्तरालं दशवर्षाधिकः पौरसखा अश्रोत्रियोऽप्यभिवाद्य इति विवक्षितम् । पञ्चवर्षं तु चारणम् । सख्यमित्युपसमस्तमप्यपेक्ष्यते । चारणशब्दः शाखाध्यायिषु रूढः । तेषां सख्यं पञ्चवर्षमभिवादनस्य निमित्तम् । श्रोत्रियं वक्ष्यति । त्रिवर्षपूर्वः श्रोत्रियोऽभिवादनमर्हति । स त्रिवर्षपूर्वतामात्रेणाभिवादनमर्हति । न पूर्वसंस्तवमपेक्षते ॥ १२ ॥ *ज्ञायमाने वयोविशेषे वृद्धतरायाभिवाद्यम् ॥ १३ ॥ क्रमार्थमिदम् । वयोविशेषे ज्ञायमाने पूर्वं वृद्ध-

तरायाभिवाद्यम् । पश्चाद्वृद्धायेति ॥ १३॥ *विषमगतायागुरवे नाभिवाद्यम् ॥१४॥ उच्चैस्स्थाने नीचैस्स्थाने वावस्थितो विषमगतः । तस्मै गुरुव्यतिरिक्ताय नाभिवाद्यम् । गुरवे त्वभिवाद्यमेव । दर्शने सति तूष्णीमवस्थानस्यायुक्तत्वात् ॥ १४॥ *अन्वारुह्य वाभिवादयीत ॥१५॥ इदं गुरुविषयम् । यत्रासावभिवादनीयः स्थितः तत्र त्वन्वारुह्याभिवादयीत । अन्ववरुह्येत्यपि द्रष्टव्यम् । न्यायस्य तुल्यत्वात् गुरौ तु दृष्टमात्र एवाभिवादनमित्युक्तम् ॥१५॥ *सर्वत्र तु प्रत्युत्थायाभिवादनम् ॥१६॥ सर्वत्र गुरावगुरौ प्रत्युत्थायैवाभिवादनं कर्तव्यम् ॥१६॥ उत्तरे द्वे सूत्रे निगदसिद्धे-
*अप्रयतेन नाभिवाद्यं तथा प्रयतायाप्रयतश्च न प्रत्यभिवदेत् ॥१७॥ यद्यज्ञानादप्रयताय कश्चिदभिवादयेत तथापि सोऽप्रयतो न प्रत्यभिवदेत् ॥१७॥ *पतिवयसः स्त्रियः ॥१८॥ पत्युर्यद्वयस्तदेव स्त्रीणां वयः । तेन तदनुरोधेन ज्येष्ठभार्यादिष्वभिवादनम् ॥ १८ ॥ * न सोपानद्वेष्टितशिरा अवहितपाणिर्वाभिवादयीत ॥ १९ ॥ अवहितपाणिः समित्कुशादिहस्तः । दात्रादिहस्तो वा । अन्यत्प्रसिद्धम् ॥ १९ ॥ * सर्वनाम्ना स्त्रियो राजन्यवैश्यौ च ॥ २० ॥ सर्वनाम्नैवाभिवादयीत । अभिवादयेऽहमिति ॥२०॥ *न नाम्ना ॥२१॥ नाम्ना नाभिवादयीत ॥२१॥ *मातरमाचार्यदारं चेत्येके ॥२२॥ एते अपि द्वे सर्वनाम्नैवाभिवादयीत । न नाम्नाभिवादयीतेत्येके मन्यन्ते । स्वमत तु नाम्नैवेति ॥ २२॥ वयोविशेषेणाभिवादनं हीनवर्णे नास्तीत्याह—*दशवर्षश्च ब्राह्मणः शतवर्षश्च क्षत्रियः पितापुत्रौ स्म तौ विद्धि तयोस्तु ब्राह्मणः पिता॥२३॥ शिष्यं प्रत्याचार्यस्यायमुपदेशः । स्मशब्दः श्लोकपूरणो निपातः । ब्राह्मण क्षत्रिय इत्युपलक्षणम् । विद्धि जानीहि । स्पष्टमन्यत ॥२३॥ *कुशलमवरवयसं वयस्यं वा पृच्छेत् ॥२४॥ ब्राह्मणविषयमिदम् । इतरेषु विशेषस्य वक्ष्यमाणत्वात् । वयसा तुल्यो वयस्यः । अवरवयस वयस्यं वा ब्राह्मण पथ्यादिषु सङ्गतं कुशलं पृच्छेत् ॥ 'अपि कुशल'मिति ॥२४॥ * अनामयं क्षत्रियम् ॥२५॥ पृच्छेत् । 'अप्यनामयं भवत' इति । आमयो रोगः तदभा-

वोऽनामयम् ॥२५॥ *अनष्टं वैश्यम् ॥२६॥ 'अप्यनष्टपशुरसी'ति ॥ २६॥ *आरोग्यं शूद्रम् ॥२७॥ आरोग्यं पृच्छेत् । 'अप्यरोगो भवा'निति ॥२७॥ *नासम्भाष्य श्रोत्रियं व्यतिव्रजेत् ॥२८॥ श्रोत्रियं पथि सङ्गतमसम्भाष्य न व्यतिव्रजेत् न व्यतिक्रामेत् ॥२८॥ *अरण्ये च स्त्रियम् ॥२९॥ अरण्यग्रहणं समयस्य देशस्योपलक्षणम् । ततः स्त्रियमेकाकिनीं दृष्ट्वा असम्भाष्य न व्यतिव्रजेत् । सम्भाषणं च मातृवद्भगिनीवच्च । 'किं ते करवाणि न भेतव्यम्' इति ॥२९॥

॥ इति चतुर्दशी खण्डिका ॥ प्र०१ प० ४ ख०१४ ॥

---

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां प्रथमप्रश्ने चतुर्थः पटलः ॥४॥

---

सर्वेषामेव कर्मणां शेषभूतमाचमनं विधास्यंस्तदुपयोगिनो विधीनाह—* उपासने गुरूणां वृद्धानामतिथीनां होमे जप्यकर्मणि भोजन आचमने स्वाध्याये च यज्ञोपवीती स्यात् ॥ १ ॥ गुरूणामाचार्यादीनाम् । अन्येषां वृद्धादीनां च पूज्यानामतिथीनां च उपासने यदा तानुपास्ते तदा होमे साङ्गे पित्र्यादन्यत्र । जप्यकर्मणि जप्यक्रियायां भोजनाचमनयोश्च स्वाध्यायाध्ययने च यज्ञोपवीती स्यात् । यज्ञोपवीती भवेत् । वासोविन्यासविशेषो यज्ञोपवीतम् । 'दक्षिणं बाहुमुद्धरते' इत्यादिब्राह्मणविहितम् । वाससोऽसम्भवेऽनुकल्पं वक्ष्यति 'अपि वा सूत्रमेवोपवीतार्थे' इति । मनुरप्याह— 'कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् । उद्धृते दक्षिणे पाणावुपवीत्युच्यते बुधैः ॥' इति । एषु विधानात्कालान्तरे नावश्यम्भाव ॥ १ ॥*भूमिगतास्वप्स्वाचम्य प्रयतो भवति ॥ २ ॥ 'आपः शुद्धा भूमिगता वैतृष्ण्यं यासु गोर्भवेत् । अव्याप्ताश्चेदमेध्येन गन्धवर्णरसान्विताः ॥ अजा गावो महिष्यश्च ब्राह्मणी च प्रसूतिका । दशरात्रेण शुद्ध्यन्ति भूमिष्ठं च नवोदकम् ॥' इति मनुः । 'आ

'महायगहितस्य' इति पाठान्तरम्

वणे मासि सम्प्राप्ते सर्वा नद्यो रजस्वलाः' इति स्मृत्यन्तरम् । एवंभूतदोषरहितास्वप्स्वाचम्य प्रयतो भवति । प्रायत्यार्थमाचमनं भूमिगतास्वप्सु कर्तव्यमिति ॥ २ ॥ *यं वा प्रयत आचामयेत् ॥ ३ ॥ यं वा प्रयतोऽन्य आचमयेत् सोऽपि प्रयतो भवति । सर्वथा स्वयं वामहस्तावर्जिताभिरद्भिराचमनं न भवति । एतेन शास्त्रान्तरोक्तं कमण्डलुधारणमप्याचार्यस्यानभिमतं लक्ष्यते । अलाबुपात्रेण नालिकेरजेन च स्वयमाचमनमाचरन्ति ॥३॥ *न वर्षधारास्वाचामेत् ॥ ४ ॥ पूर्वोक्तेन प्रकारेण प्रायत्यार्थस्याचमनस्य वर्षधारासु प्रसङ्गाभावात् पिपासितस्य पानप्रतिषेधार्थमिति केचित् । अपर आह—अस्मादेव प्रतिषेधाच्छिक्यादिस्थकरकादेर्या धारा तत्र प्रायत्यार्थमप्याचमनं भवतीति ॥ ४ ॥ *तथा प्रदरोदके ॥ ५ ॥ भूमेः स्वयं दीर्णः प्रदेशः प्रदरः तत्स्थ उदके भूमिगतेऽपि नाचामेत् ॥ ५ ॥*तप्ताभिश्चाकारणात् ॥ ६ ॥ उष्णाभिरद्भिर्नाचामेत अकारणात् । ज्वरादौ सति न दोषः । 'तप्ताभि'रिति वचनात् शृतशीताभिरदोषः । तथा चोष्णास्वेव प्रतिषेधः स्मृतिषु प्रायो भवति ॥ ६ ॥*रिक्तपाणिर्वयस उद्यम्याप उपस्पृशेत् ॥ ७ ॥ वय इति पक्षिनाम । यो रिक्तपाणिस्सन् वयसे पक्षिणे उद्यम्य तस्य प्रोत्सारणाय पाणिमुद्यच्छते स तत्कृत्वा-ऽप उपस्पृशेत् तेनैव पाणिना । 'रिक्तपाणि'रिति वचनात् काष्ठलोष्टादिसहितस्य पाणेरुद्यमने न दोषः । केचिदुपस्पर्शनमाचमनमाहुः ॥ ७ ॥ *शक्तिविषये न मुहूर्तमप्यप्रयतः स्यात् ॥ ८ ॥ शक्तौ सत्यां मुहूर्तमप्यप्रयतो न स्यात् । आचमनयोग्यजलं दृष्ट्वैव मूत्रपुरीषादिकं कुर्यात् यदि वेगं धारयितुं शक्नुयात् । इति ॥ ८ ॥ *नग्नो वा ॥९॥ न मुहूर्तमपि स्यादिति सम्बध्यते । शक्तिविषय इति च । व्रणादिना कौपीनाच्छादनाशक्तौ न दोषः ॥ ९ ॥*नाप्सु सतः प्रयमणं विद्यते ॥१०॥ येन प्रयतो भवति तत्प्रयमणमाचमनम् । करणे ल्युट् । तदप्सु सतो वर्तमानस्य न भवति । जलमध्ये आसीनोऽपि नाचामेत् ॥१०॥*उत्तीर्य त्वाचामेत् ॥११॥ तीरे उत्तीर्याचामेत् । न जल इत्यर्थो विधेयः । पूर्वेण गतत्वात् । त

स्मादयमर्थः। यदा नदीमुत्तरति भावा प्रकारान्तरेण वा तदा तामुत्तीर्य तीरान्तरं गतः प्रयतोऽप्याचामेत् । नद्याः रुत्तरणमाचमनस्य निमित्तमिति सूत्रार्थः ॥११॥ *नाप्रोक्षितमिन्धनमग्नावादध्यात् ॥१२॥ श्रौते स्मार्ते लौकिके वाग्नौ अप्रोक्षितमिन्धनं नादध्यात्, न प्रक्षिपेत् । केचिल्लौकिके नेच्छन्ति ॥ १२ ॥ *मृढस्वस्तरेऽचामंस्पृशन्नन्यानप्रयतान्प्रयतो मन्येत ॥१३॥ 'पतितपतिकाचण्डालोदक्याशवस्पृष्टितत्स्पृष्टुपस्पर्शने सचेल'मिति गौतमः । तद्विषय इदमुच्यते । आसनतया शयनतया वा 'सुष्ठ्वास्तीर्णः पलालादिमयस्तृणस्वस्तरः । पृषोदरादिषु दर्शनाद्रूपसिद्धिः । यत्रातिश्लक्ष्णतया पलालादिमयाग्रविभागो न ज्ञायते स मूढः । मूढश्चासौ स्वस्तरश्चेति समस्यैस्तस्मिन् । पतितादिना प्रयतेष्वासीनेषु यः कश्चित्प्रयत उपविशेत् न च तान् संस्पृशेत् । तदा स प्रयतो मन्येत । यथा प्रयतमात्मानं मन्यते प्रयतोऽस्मीति तथैव मन्येत । तद्विधे विषये तत्स्पृष्टिन्यायः प्रवर्तत इति ॥ १३ ॥*तथा तृणकाष्ठेषु निखातेषु ॥१४॥ तृणकाष्ठेष्वपि भूमौ निखातेषु तत्स्पृष्टिन्यायो न भवतीति ॥ १४ ॥ *प्रोक्ष्य वास उपयोजयेत् ॥१५॥ शुद्धमपि वासः प्रोक्ष्यैवोपयोजयेत् वसीत । अपर आह—अशुद्धस्यापि वाससः प्रोक्षणमेव शुद्धिहेतुरिति ॥१५॥ *शुनोपहतः सचेलोऽवगाहेत ॥१६॥ शुना उपहतः स्पृष्टः । यद्यपि चेलं न शुना स्पृष्टं तथापि सचेलोऽवगाहेत भूमिगतास्वप्सु स्नायात्, नोद्धृतादिभिः । दष्टस्य स्मृत्यन्तरे प्रायश्चित्तम् । तत्र वसिष्ठः—"ब्राह्मणस्तु शुना दष्टो नदीं गत्वा समुद्रगाम् । प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति ॥" अङ्गिराः—'ब्रह्मचारी शुना दष्टस्त्रिरात्रेणैव शुध्यति । गृहस्थस्तु द्विरात्रेण ह्येकाहेनाग्निहोत्रवान् । नाभेरूर्ध्वं तु दष्टस्य तदेव द्विगुणं भवेत् । तदेव त्रिगुणं वक्त्रे मूर्ध्नि चेत्स्याच्चतुर्गुणम् ॥ क्षत्रविट्छूद्रयोनिस्तु स्नानेनैव शुचिर्भवेत् । द्विगुणं तु वनस्थस्य तथा प्रव्राजितस्य च ॥ ब्राह्मणी तु शुना दष्टा सोमे दृष्टिं निपातयेत् । यदा न दृश्यते सोमः प्रायश्चित्तं तदा कथम् । यां दिशं तु गतस्सोमस्तां दिशं त्ववलोकयेत् ॥ सोममार्गेण सा पूता पञ्चगव्ये-

न शुध्यति ॥' इति ॥१६॥ * प्रक्षाल्य वा तं देशमग्निना संस्पृश्य पुनः प्रक्षाल्य पादौ चाचम्य प्रयतो भवति ॥१७॥ शुना स्पृष्टं प्रदेशं प्रक्षाल्याग्निना च संस्पृश्य पुनश्च प्रक्षाल्य पश्चादाचम्य प्रयतो भवति । व्यवस्थितविकल्पोऽयम् ॥ 'ऊर्ध्वं नाभेः करौ मुक्त्वा यदङ्गमुपहन्यते । तत्र स्नानविधिः प्रोक्तो ह्यधःप्रक्षालनं स्मृतम् ॥' इति मानवे दर्शनात् ॥१७॥ *अग्निं नाप्रयत आसीदेत् ॥१८॥ अप्रयतस्सन्नग्निं नासीदेत् । आसन्नो न भवेत् । यावति देशे ऊष्मोपलम्भः तत्राप्यशक्तौ न दोषः ॥१८॥ *इषुमात्रादित्येके ॥१९॥ इषुमात्रादर्वाङ्नासीदेत् । ऊष्मोपलम्भो भवतु वा माभूदित्येके मन्यन्ते ॥१९॥ *न चैनमुपधमेत् ॥२०॥ अप्रयत इत्येव । एनमग्निमप्रयतो नोपधमेत् । प्रयतस्य न दोषः । 'मुखेनोपधमेदग्निं मुखाद्ध्यग्निरजायत ।' इति स्मृत्यन्तरे दर्शनात् । 'नाग्निं मुखेनोपधमे' दिति मानवे दर्शनादुभयोर्विकल्पः । अपर आह—वाजसनेये श्रौतप्रकरणे 'मुखाद्ध्यग्निरजायत । तस्मान्मुखेनोपसमिन्ध्या' दिति दर्शनात् श्रौतेषु मुखेनोपसमिन्धनम् । अन्यत्र स्मार्ते प्रतिषेध इति । अन्ये तु, वैणवेनायसेन वा सुषिरेणोपसमिन्धनमिच्छन्ति । एवं मुखस्यान्वयाच्छ्रुतिरप्यनुगृहीता भवति आस्यबिन्दूनां पतनशङ्का भवेदिति प्रतिषेधस्मृतिरपीति ॥२०॥ *खट्वायां चाग्निं नोपदध्यात् ॥२१॥ खट्वाया अधोऽग्निं नोपदध्यात् । अत्राप्यशक्तौ न दोषः ॥२१॥ * प्रभूतैधोदके ग्रामे यत्रात्माधीनं प्रयमणं तत्र वासो धार्म्यो ब्राह्मणस्य ॥२२॥ प्रभूता एधा उदकं च यस्मिन् ग्रामे तत्र वासो धार्म्यः धर्मः । अत्रापि न सर्वत्र ? किं तर्हि । यत्रात्माधीनं प्रयमणं प्रायत्यं मूत्रपुरीषप्रक्षालनादीनि यत्रात्माधीनानि तत्र । यत्र तु कूपेष्वेवोदकं तत्र बहुकूपेऽपि न वस्तव्यम् । ब्राह्मणग्रहणाद्वर्णान्तरस्य न दोषः । ग्रामग्रहणादेवंभूतेषु घोषादिष्वपि न वस्तव्यम् ॥२२॥ * मूत्रं कृत्वा पुरीषं वा मूत्रपुरीषलेपानन्नलेपानुच्छिष्टलेपानात्मनस्तसश्च ये लेपास्तान्प्रक्षाल्य पादौ चाचम्य प्रयतो भवति ॥२३॥ मूत्रं पुरीषं वा कृत्वा उत्सृज्य तयोर्मूत्रपुरीषयोर्ये लेपास्तस्मिन्प्रदेशे स्थिताः प्रदेशान्तरे वा पतिताः तान् सर्वान् ।

अन्नलेपांश्चानुच्छिष्टानपि उच्छिष्टलेपांश्चान्नलेपानपि । तथा रेतसश्च ये लेपाः स्वप्नादौ मैथुने च तान् सर्वानद्भिर्मृदा च प्रक्षाल्य पादौ च लेपवर्जितावपि प्रक्षाल्य पश्चादाचम्य प्रयतो भवति । अत्र मृत्प्रमाणस्य सङ्ख्यायाश्चानुक्तत्वात् यावता गन्धलेपक्षयो भवति तावदेव विवक्षितम् । तथा च याज्ञवल्क्यः— 'गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ।' इति । देवलस्तु, व्यक्तमाह— 'यावत्स शुद्धिं मन्येत तावच्छौचं समाचरेत् । प्रमाणं शौचसङ्ख्याया न शिष्टैरुपदिश्यते ॥' इति । पैठीनसिः—'मूत्रोच्चारे कृते शौचं न स्यादन्तर्जलाशये । अन्यत्रोद्धृत्य कुर्यात्तु सर्वदैव समाहितः ।' इति ॥ २३ ॥

॥ इति पञ्चदशी खण्डिका ॥ प्र०१-प०५-ख० १५ ॥

---

* तिष्ठन्नाचामेत्प्रह्वो वा ॥ १ ॥ तिष्ठन् प्रह्वो वा नाचामेत् । नायं प्रतिषेधः शक्यो वक्तुम् । कथं 'आसीनस्त्रिराचामे'दिति वक्ष्यति । ततश्च यथा शयानस्याचमनं न भवति तथा तिष्ठतः प्रह्वस्य च न भविष्यति । एवं शौचार्थस्याचमनस्य न प्रतिषेधः किं तर्हि पानीयपानप्रतिषेधः । तथा च गौतमः—'नाञ्जलिना जलं पिबेन्न तिष्ठ'न्निति । अपर आह—'अस्मादेव प्रतिषेधात्क्वचित्तिष्ठतः प्रह्वस्य वाचमनमनुज्ञातं भवति । तेन 'भूमिगतास्वप्स्वि'त्यत्र तीरस्यायोग्यत्वे ऊरुदघ्ने जानु[illegible] वा जले स्थितस्याचमनं भवति । गौतमोऽपि 'न तिष्ठन्नुद्धृतोदकेनाचामे'दिति सूत्रभेदादुद्धृतोदकेनैव तिष्ठतः प्रतिषेधमाह ॥ १ ॥ अथाचमनविधिः—

* आसीनस्त्रिराचामेद्धृदयङ्गमाभिरद्भिः ॥ २ ॥ तृतीया द्वितीयार्थे । अत्रानुक्तं स्मृत्यन्तरवशादुपस्क्रियते । आसीनः शुचौ देशे नासने भोजनान्ते त्वासने दक्षिणं बाहुं जान्वन्तरे कृत्वा प्राङ्मुख उदङ्मुखो वा हृदयङ्गमा अपः करतलस्थासु यावतीषु माषो निमज्जन्ति तावतीः फेनबुद्बुदरहिताः वीक्षितास्त्रिराचामेत् । पिबेत् ब्राह्मणः हृदयङ्गमाः क्षत्रियः कण्ठगताः । वैश्यस्तालुगताः शूद्रो जिह्वास्पृष्टाः सकृत् ॥२॥ * त्रिरोष्ठौ परिमृजेत् ॥३॥ परिमृज्यात् ॥३॥ * द्विरित्येके ॥४॥ तुल्यविकल्पः ॥४॥

*सकृदुभमस्पृशेत् ॥५॥ मध्यमाभिस्तिसृभिरङ्गुलीभिरोष्ठौ ॥५॥ * द्विरित्येके ॥६॥ गतः ॥६॥ * दक्षिणेन पाणिना सव्यं प्रोक्ष्य पादौ शिरश्चेन्द्रियाणीत्युपस्पृशेत् चक्षुषी नासिके श्रोत्रे च ॥ ७ ॥ दक्षिणेन पाणिना सव्यं पाणिं प्रोक्ष्य तथा पादौ शिरश्च इन्द्रियाण्युपस्पृशेत् अङ्गुलीभिः । सर्वेषामिन्द्रियाणां प्रसङ्गे परिसंख्यष्टे 'चक्षुषी नासिके श्रोत्रे चे'ति। चक्षुरादीनीन्द्रियाणीति वचनं स्वरूपकथनमात्रम् । तत्रांगुष्ठानामिकाभ्यां चक्षुषी । केचिद्युगपत् केचित्पृथक् । अङ्गुष्ठप्रदेशिनीभ्यां नासिके । अङ्गुष्ठकनिष्ठिकाभ्यां श्रोत्रे । अत्र सहभावस्याशक्यत्वात् पृथगपि क्रियते । अत्र पृथग्भावस्य निश्चितत्वात् पूर्वत्रापि पृथगेवेति युक्तमित्यन्ये ॥ ७ ॥ *अथाप उपस्पृशेत् ॥८॥ इन्द्रियस्पर्शनानन्तरं हस्तौ प्रक्षालयेत् ॥८॥ *भोक्ष्यमाणस्तु प्रयतोऽपि द्विराचामेद्द्विः परिमृजेत्सकृदुपस्पृशेत् ॥९॥ भोजनं करिष्यन्प्रयतोऽपि द्विराचमनं कुर्यात् । अत्र विशेषः । द्विःपरिमृजेत् न विकल्पेन त्रिः । सकृदुपस्पृशेत् न विकल्पेन द्विः । 'प्रयतोऽपी'ति वचनादप्रायत्ये सर्वत्र द्विराचमनमाचार्यस्याभिप्रेतम् । तत्र स्मृत्यन्तरम्—'भुक्त्वा क्षुत्त्वा च सुप्त्वा च ष्ठीवित्वोक्त्वानृतं वचः । आचान्तः पुनराचामेद्वासोऽपि परिधाय च ॥' ९ ॥ *श्यावान्तपर्यन्तावोष्ठावुपस्पृश्याचामेत् ॥१०॥ दन्तमूलात्प्रभृति ओष्ठौ । तत्रालोमकः प्रदेशः श्यावः । तस्यान्तः सुलोमकः । तत्पर्यन्तावोष्ठावुपस्पृश्याचामेत् । ओष्ठयोरलोमकप्रदेशमङ्गुल्यात्मकानिष्ठादिना वा उपस्पृश्याचामेदिति। १०। *न श्मश्रुभिरुच्छिष्टो भवत्यन्तरास्ये सद्भिः ॥११॥ श्मश्रूणि यदा आस्यान्तर्भवन्ति तदा तैरन्तरास्ये सद्भिरुच्छिष्टो न भवति ॥११॥* यावन्न हस्तेनोपस्पृशति ॥१२॥ स्पर्शने तूच्छिष्टो न भवति ततश्चाचामेदिति । अस्मादेव प्रतिषेधात् ज्ञायते यत्किञ्चिदपि द्रव्यमन्तरास्ये सत् तदुच्छिष्टताया निमित्तमिति॥१२॥*य आस्याद्बिन्दवः पतन्त उपलभ्यन्ते तेष्वाचमनं विहितम् ॥१३॥ भाषमाणस्यास्यात् पतन्तो ये लालाबिन्दव 'उपलभ्यन्ते' चक्षुषा स्पर्शनाद्वा उपलब्धुं योग्यास्तेष्वाचमनं विहि

तम्। वेदोच्चारणे तु गौतमः—'' मन्त्रब्राह्मणमुच्चारयतो ये बिन्दवः रीर उपलभ्यन्ते न तेष्वाचमन'मिति ॥१३॥ * ये भूमौ न तेष्वाचमेदित्येके ॥१४॥ ये बिन्दवो भूमौ पतन्ति न शरीरे तेषु नाचामेदित्ये मन्यन्ते । स्वमतं तु तेष्वप्याचामेदिति ॥ १४ ॥ * **स्वप्ने क्षवथौ शिङ्घाणिकाश्र्वालम्भे लोहितस्य केशानामग्नेर्गवां ब्राह्मणस्त्रियाश्चालम्भे महापथं च गत्वाऽमेध्यं चोपस्पृश्याप्रयतं च मनुष्यं नीवीं च परिधायाप उपस्पृशेत्** ॥ १५ ॥ स्वप्नं स्वापनम् क्षवथुः क्षुतं तयोः कृतयोः । शिङ्घाणिका नासिकामलम् । अश्रु नेत्रजलं नयोरालम्भे स्पर्शे । लोहितस्य रुधिरस्य । केशानां शिरोगतानां भूगतानां च अग्न्यादीनां चतुर्णामालम्भे । महापथं च गत्वा । अमेध्यं च गोव्यतिरिक्तानां मूत्रपुरीषादि । ताम्बूलनिषेकादि चोपस्पृश्य । अप्रयतं च मनुष्यमुपस्पृश्य । नीवी प्रसिद्धा तद्योगादधोवासो लक्ष्यते । तच्च परिधायाप उपस्पृशेत् । केषुचित् स्नानं केषुचिदाचमनं केषुचित् स्पर्शनमात्रं यावता प्रयतो मन्यते ॥१५॥ * **आर्द्रं वा शकृदोषधीर्भूमिं वा** ॥१६॥ आर्द्रं वा शकृदुपस्पृशेत् ओषधीर्वा आर्द्राः भूमिं वा आर्द्राम् । पूर्वोक्तेष्वेव कल्पेषु वैकल्पिकमिदम् ॥१६॥ एवमाचमनं-[illegible]मित्तैरुक्तम् । अथाभक्ष्याधिकारः— * **हिंसार्थेनासिना मांसं छिन्नमभोज्यम्** ॥१७॥ असिग्रहणं क्षुरादेरुपलक्षणम् । यन्मांसं पाकाद्वे हिंसार्थेनासिना छिन्नं तदभोज्यम्॥१७॥ * **दद्भिरपूपस्य नापच्छिन्द्यात्** ॥१८॥ अपूपग्रहणं मूलफलादेरप्युपलक्षणम् । द्वितीयार्थे षष्ठी दन्तैरपूपं नापच्छिन्द्यात् । किं तु हस्तादिभिरपच्छिद्य भक्षयेत् ॥१८॥ * **यस्य कुले म्रियेत न तत्रानिर्दशे भोक्तव्यम्** ॥१९॥ यस्य कुले कश्चिन्म्रियते असपिण्डतायां सत्यां तत्रानिर्गते दशाहे न भोक्तव्यम् । 'अनिर्दश' इत्याशौचकालस्योपलक्षणम् । तेन क्षत्रियादिष्वधिकं पक्षिण्यादिषु न्यूनम् ॥ १९ ॥ * **तथानुत्थितायां सूतकायाम्** ॥२०॥ सूतकैव सूतिका । तस्यामनुत्थितायाम् । उत्थानं नाम

सूतिकागारे निवेशितानामुदकुम्भादीनामपनयनम् । तच्च दशमेऽहनि भवति । 'दशम्यामुत्थितायां' मिति गृह्ये उक्तत्वात् । तत्राप्याशौचकालोपलक्षणत्वात् । यावदाशौचमभोजनम् । अत्राङ्गिराः—'ब्रह्मक्षत्रविशां भुक्त्वा न दोषस्त्वग्निहोत्रिणाम् । सूतके शाव आशौचे त्वस्थिसञ्चयनात्परम् ॥' इति ॥ २० ॥ * अन्तःशवे च ॥ २१ ॥ 'यावद्ग्रामान्तं न निर्ह्रियते शवः तावत्तत्र न भोक्तव्यम् । आचारस्तु धनुश्शतादर्वाक् तत्रापि प्रदीपमारोप्य उदकुम्भं चोपनिधाय भुञ्जते यदि समानं वंशगृहं न भवति ॥ २१ ॥ * अप्रयतोपहतमन्नमप्रयतं न त्वभोज्यम् ॥ २२ ॥ अप्रयतेनाशुचिना उपहतं स्पृष्टमप्रयतं भवति । किंतु अशुद्धमप्यभोज्यं न भवति । कः पुनरप्रयतस्याभोज्यस्य च विशेषः । उच्यते । अप्रयतमन्नमग्नावधिश्रित्याद्भिः प्रोक्षितं भस्मना मृदा वा स्पृष्टं वाचा च प्रशस्तं प्रयतं भवति भोज्यं च । अभोज्यं तु लशुनादि कथञ्चिदपीति ॥ २२ ॥ * अप्रयतेन तु शूद्रेणोपहृतमभोज्यम् ॥ २३ ॥ अप्रयतेन शूद्रेणोपहृतमानीतमन्नं न भोज्यम् । स्पृष्टमस्पृष्टं च । स्पृष्टमेवेत्यन्ये ॥ २३ ॥ * यस्मिंश्चान्ने केशः स्यात् ॥ २४ ॥ तदप्यभोज्यम । एतच्च पाकदशायामेव पतितेन केशेन सह यत्पक्वमन्नं तद्विषयम् । भोजनकाले तु केशपाते घृतप्रक्षेपादिना संस्कृतं भोज्यम् ॥ २४ ॥ * अन्यद्वा मेध्यम् ॥ २५ ॥ अन्यद्वा नखादि यस्मिन्नन्ने स्यात् तदप्यभोज्यम् । इदमपि पूर्ववत् । अत्र बोधायनः—'केशकीटनखरोमाखुपुरीषाणि दृष्ट्वा तावन्मात्रमन्नमुद्धृत्य शेषं भोज्य'मिति । वसिष्ठस्तु—'कामं तु केशकीटानुत्सृज्याद्भिः प्रोक्ष्य भस्मनावकीर्य वाचा प्रशस्तमुपयुञ्जीते'ति ॥ २५ ॥ * अमेध्यैरवमृष्टम् ॥ २६ ॥ अमेध्यैः करञ्जपलण्ड्वादिभिरवमृष्टमभोज्यम् ॥ २६ ॥ * कीटोऽमेध्यसेवी ॥ २७ ॥ यस्मिंश्चान्ने कीटः स्यादिति व्यवहितमभिसम्बध्यते । अमेध्यसेवी पूत्यण्डाख्यः ॥ २७ ॥ * मूषिकलाङ्गं वा ॥ २८ ॥ पूर्ववत्सम्बन्धः । मूषिकला मूषिकपुरीषमङ्गं वा उपसमस्तमपि । मूषिकग्रहणं सम्बध्यते । यस्मिन्नन्ने मूषिकस्याङ्गं पुच्छपादादि भवति तदप्यभोज्यम् ॥ २८ ॥ * पदा वोपहतम् ॥ २९ ॥ प्रयतेनापि पदा यत्स्पृष्टं तद-

स्पातिमूलफलवर्जम् ॥१९॥ अनन्तरोक्तं विविद्रव्यं फाणितादीन्वर्जयित्वा द्रष्टव्यम् । फाणितं पानविशेषः । इक्षुरस इति केचित् । भृष्टानां व्रीहीणां तण्डुलाः पृथूकृताः पृथुकाः । करम्बो दधिसक्तुसमाहारः यः करम्ब इति प्रसिद्धः । वेदेऽप्युभयं भवति—'यत्करम्भैर्जुहोति धानाः करम्भः परिवाप' इति ॥ भरूजाः भृष्टा यवाः । क्षीरविकारो दध्यादि । प्रसिद्धमन्यत् । 'अथाशूक्तं चेत्यस्य विधेः शेषम् ॥ १९॥ *शूक्तं चापरयोगम् ॥२०॥ परेण द्रव्यान्तरेण योगो यस्य तत् परयोगं, ततोऽन्यदपरयोगम् । तदेव शूक्तं वर्ज्यं यत्तद्रव्यादि द्रव्यान्तरसंसृष्टं शूक्तं तदभोज्यमेव। एवं च पूर्वत्रैवापरयोगमिति विशेषणं वक्तव्यम् । इदमेव वा सूत्रमस्तु। सूत्रद्वयकरणं चाचार्यप्रवृत्तिकृतम् । यथा 'सलावृक्येकसृकोलूकशब्दा' इति पूर्वं सामान्येनाभिधाय 'सलावृक्यामेकसृक' इति 'स्वप्नपर्यन्त'मिति पश्चाद्विशेष उक्तः ॥२०॥*सर्वं मद्यमपेयम् ॥२१॥ मद्यं मदकरं तत्सर्वमपेयम् । अत्र स्मृत्यन्तरवशाद्व्यवस्था । तत्र मनुः—'गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा । यथैवैका न पातव्या तथा सर्वा द्विजोत्तमैः ॥' इति । सुराव्यतिरिक्तं तु मद्यं ब्राह्मणस्य नित्यमपेयम् । तथा च गौतमः— 'मद्यं नित्यं ब्राह्मणस्ये'ति 'क्षत्रियवैश्ययोस्तु ब्रह्मचारिणो'रिति।२१।*तथैलकं पयः॥२२॥अविः एलका । तस्याः क्षीरमपेयम्॥२२॥*उष्ट्रीक्षीरमृगीक्षीरसन्धिनीक्षीरयमसूक्षीराणीति ॥२३॥उष्ट्रमृगौ प्रसिद्धौ। या गर्भिणी दुग्धे सा सन्धिनी शास्त्रान्तरे प्रसिद्धा । एककालदोहेत्यन्ये । एकस्मिन् प्रसवे या अनेकं गर्भं सूते, सा यमसूः । उष्ट्र्यादीनां क्षीराण्यपेयानि । इतिकरणमेकशफानां क्षीरमपेयमिति । तथा च मनुः— 'आरण्यानां च सर्वेषां मृगाणां माहिषीं विना । स्त्रीक्षीरं चैव वर्ज्यानि सर्वशूक्तानि चैव हि ॥ अनिर्दशाया गोः क्षीरमौष्ट्रमैकशफं तथा । आविकं सन्धिनीक्षीरं विवत्सायाश्च गोः पयः ॥' इति ॥२३॥* धेनोश्चानिर्दशायाः ॥२४॥ या धेनुर्नवसूतिका गौः । चकारादजामहिष्योश्च । 'अजा गावो महिष्यश्चे'ति मानवे दर्शनात् ॥२४॥* तथा कीललालौषधीनां च ॥२५॥ कीललौषध्यः सुरा-

र्था ओषधयः तासां च विकारभूतमन्नमनाद्यम् ॥२५॥ ***कलञ्जपलाण्डुपरारीकाः** ॥२६॥ कलञ्जं रक्तलशुनम् । पलाण्डु श्वेतम् । परारीका कृष्णम् । मण्डुभाख्यया म्लेच्छानां प्रसिद्धम् । एते चाभक्ष्याः ॥२६॥ प्रतिपदपाठो न शक्यत इति समासेनाह—***यच्चान्यत्परिचक्षते** ॥२७॥ यच्चान्यदेवं युक्तं शिष्टाः परिचक्षते वर्जयन्ति तदप्यभक्ष्यम् । तत्राह मनुः—'लशुनं गृञ्जनं चैव पलाण्डुकवकानि च । अभक्ष्याणि द्विजातीनाममेध्यप्रभवानि च ॥' इति ॥२७॥ ***क्याकभोज्यमिति हि ब्राह्मणम्** ॥२८॥ क्याकु छत्राकं तदभोज्यमभक्ष्यम् । ब्राह्मणग्रहणमुत्तरार्थम् ॥ २८ ॥ ***एकखुरोष्ट्रगवयग्रामसूकरशरभगवाम्** ॥ २९ ॥ मांसमित्यर्थाद्गम्यते । एकखुरा अश्वादयः । गवयो गोसदृशः पशुः । शरभोऽष्टापदः आरण्यो मृगः । अन्ये प्रसिद्धाः । एतेषां मांसमभक्ष्यम् ॥२९॥ ***धेन्वनडुहोर्भक्ष्यम्** ॥३०॥ गोप्रतिषेधस्य प्रतिप्रसवः ॥३०॥ *** मेध्यमानडुहमिति वाजसनेयिकम्** ॥ ३१ ॥ अनडुहः मांसं न केवलं भक्ष्यं किं तर्हि मेध्यमपीति वाजसनेयिनः समामनन्ति ॥३१॥ ***कुक्कुटो विकिराणाम्** ॥३२॥ व्यवहितमप्यभोज्यमिति सम्बध्यते । पादाभ्यां विकीर्य कीटधान्यादि ये भक्षयन्ति मयूरादयो विकिरास्तेषां मध्ये कुक्कुटोऽभक्ष्यः । स्मृत्यन्तरवशात् ग्राम्यो नारण्यः ॥३२॥ ***प्लवः प्रतुदाम्** ॥ ३३॥ तुण्डेन प्रतुद्य ये भक्षयन्ति ते दार्वाघाटादयः प्रतुदः । तेषां मध्ये प्लव एवाभक्ष्यः । प्लवः शकटबल्लाख्यो बकविशेषः ॥३३॥ ***क्रव्यादो हंसभासचक्रवाकसुपर्णाश्च क्रुञ्चक्रौञ्च वार्ध्राणसलक्ष्मणवर्जम्** ॥३४॥ क्रव्यादः क्रव्यं मांसं तदेव केवलं ये अदन्ति ते क्रव्यादः गृध्रादयः । ते अभक्ष्याः । हंसः प्रसिद्धः । भासः श्येनाकृतिः पीनतुण्डः । चक्रवाकः मिथुनचरः । सुपर्णः श्येनः एते चाभक्ष्याः । क्रुञ्चा वृन्दचाराः । क्रौञ्चा मिथुनचाराः । ते चाभक्ष्याः । सूत्रे क्रौञ्चेति विभक्तिलोपश्छान्दसः । किमविशेषेण क्रुञ्चक्रौञ्चा अभक्ष्याः । नेत्याह—वार्ध्राणसलक्ष्मणवर्जम् । श्वेतो लोहितो वा येषां मूर्धा ते लक्ष्मणाः त एव विशिष्यन्ते वार्ध्राणमा इति । वार्ध्रं चर्म तदाकारा नासिका

येषां ते वार्ध्राणसाः । एवंभूतान् लक्ष्मणान् वर्जयित्वा क्रुञ्चक्रौञ्चा न भक्ष्या इति । अन्ये त्वाहुः—क्रव्याद इति प्राप्तस्य प्रतिषेधस्य क्रुञ्चादिषु चतुर्षु प्रतिषेध इति । तत्र लक्ष्मणा सारसी लक्ष्मणवर्जामिति 'ङ्यापोस्संज्ञाच्छन्दसो'रिति ह्रस्वः । एवं कुञ्चादिशब्दस्याप्यजादिटाबन्तस्य ॥३४॥ *पञ्चनखानां गोधाकच्छपश्वाविट्छ्र्यकखड्गशशपूतिखषवर्जम् ॥ ३५ ॥ पञ्चनखा नरमार्जारादयः । तेषां मध्ये गोधादीन् सप्त वर्जयित्वा अन्ये अभक्ष्याः । गोधा कृकलासाकृतिर्महाकायः । कच्छपः कूर्मः । श्वाविट् वराहविशेषः । यस्य नाराचाकाराणि लोमानि । शल्यकः शल्यकः । यस्य चर्मणा तनुत्राणं क्रियते । श्वाविट्शल्यक इति युक्तः पाठः । एके तु छकारं पठन्ति । छकारात्पूर्वमिकारम् । खड्गो मृगविशेषः । यस्य शृङ्गं तैलभाजनम् । पूतिखषः शशाकृतिः हिमवति प्रसिद्धः ॥३५॥ *अभक्ष्यश्चेटो मत्स्यानाम् ॥३६॥ मत्स्यानां मध्ये चेटाख्यो मत्स्यो न भक्ष्यः ॥३६॥ *सर्पशीर्षी मृदुरः क्रव्यादो येचान्ये विकृता यथा मनुष्यशिरसः॥३७॥ सर्पस्येव शिरो यस्य सोऽपि मत्स्यो न भक्ष्यः । मृदुरो मकरः । ये च क्रव्यमदन्ति शिशुमारादयः तेऽप्यभक्ष्याः । ये च उक्तेभ्योऽन्ये मत्स्या विकृताकाराः । तत्रोदाहरणम्—यथा मनुष्यशिरसः जलमनुष्याख्या जलहस्त्यादयश्च तेऽपि सर्वे न भक्ष्याः । अत्र मनुः—'अनुमन्ता विशसिता निहन्ता क्रयविक्रयी । संस्कर्ता चोपहर्ता च खादकश्चेति घातकाः ॥ न मांसभक्षणे दोषो न मद्ये न च मैथुने । प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥' इति । अप्रतिषिद्धेष्वपि भक्षणान्निवृत्तिरेव ज्यायसीत्यर्थः ॥ ३७ ॥

॥ इति सप्तदशी खण्डिका ॥ प्र०१ प०५ ख०१७ ॥

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां प्रथमप्रश्ने पञ्चमः पटलः ॥५॥

एवं तावन्निमित्तदुष्टं जातिदुष्टं कालदुष्टं चाभोज्यमुक्तम् । तत्र निमित्तदुष्टं 'यस्य कुले म्रियेते'त्यादि । जातिदुष्टं करञ्जादि । कालदुष्टं पर्युषितादि । इदानीं प्रतिग्रहार्थं तु शुचीनि कानिचित् अनुज्ञाय कानिचित् प्रतिषेधति—***मध्वामं मार्गं मांसं भूमिं मूलफलानि रक्षा गव्यूतिर्निवेशनं युग्यघासश्चोग्रतः प्रतिग्राह्याणि ॥ १ ॥** मधु पक्वमपक्वं वा । आमं तण्डुलादि । मृगस्य विकारो मार्गं मांसम् । भूमिः शालेयादिक्षेत्रम् । विश्रमस्थानमित्यन्ये । मूलफलानि मूलकन्दादीनि । रक्षा अभयदानम् । गव्यूतिर्गोमार्गः । निवेशनं गृहम् । युगं वहतीति युग्यो बलीवर्दः । तस्य घासो भक्षणं पलालादि । एतान्युग्रतोऽपि प्रतिग्राह्याणि अदुर्भिक्षेऽपि । उग्रः पापकर्मा द्विजातिः वैश्याद्वा शूद्रायां जातः । उग्रग्रहणं तादृशानामुपलक्षणम् ॥ १ ॥ ***एतान्यपि नानन्तेवास्याहृतानीति हारीतः ॥ २ ॥** एतानि मध्वादीन्यपि अन्तेवास्याहृतान्येव प्रतिग्राह्याणि । न स्वयमुग्रत इति हारीत आचार्यो मन्यते ॥ २ ॥ ***आमं वा गृह्णीरन् ॥ ३ ॥** पूर्वोक्तेष्वामं स्वयमेव वा गृह्णीरन् द्विजा इति हारीतस्य पक्षः ॥ ३ ॥ ***कृतान्नस्य वा विरसस्य ॥ ४ ॥** आमस्यालाभे कृतान्नस्यापि लवणादिरसासंयुक्तस्य । षष्ठीनिर्देशात् स्तोकं स्वयमन्तेवास्याहृतं वा गृह्णीरन् ॥ ४ ॥ ***न सुभिक्षाः स्युः ॥ ५ ॥** अनन्तरोक्तविधामद्वये यद्गृहीतमन्नं तेन सुभिक्षाः सुविहिता न भवेयुरेव । यावता प्राणयात्रा भवति तावदेव गृह्णीरन् न यावता सौहित्यं तावदिति ॥ ५ ॥ ***स्वयमप्यवृत्तौ सुवर्णं दत्त्वा पशुं वा भुञ्जीत ॥ ६ ॥** यदा तु दुर्भिक्षतया आत्मनोऽपि वृत्तिर्न लभ्यते प्रागेव पोष्यवर्गस्य तदा स्वयमप्यवृत्तौ यत्रैव वृत्तिर्लभ्यते तत्रैव भुञ्जीत । तत्र गुणविधिः । सुवर्णं दत्त्वा सकृदेवोपकल्पतमुपरिष्टात्सुवर्णेन स्पृष्ट्वा । एतेन पशुं वा दत्त्वेत्यपि व्याख्यातम् । 'पशुरग्निः अग्निः पशुरासी'दिति मन्त्रलिङ्गात् गोमूक्तेनाग्नेरुपस्थानदर्शनात् ॥ ६ ॥ ***नात्यन्तमन्ववस्येत् ॥ ७ ॥** न पुनरत्यन्तमन्ववसीदेत् ॥ ७ ॥ ***वृत्तिं प्राप्य विरमेत् ॥ ८ ॥** यदा विहिता वृत्तिर्लभ्यते तदा निषिद्धाया विरमेत् । न पुनस्सकृत्प्रवृत्तायाः किमवकुण्ठनेनेति

यायेन तत्रैव रमते । अत्र छान्दोग्योपनिषत्—'मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास । स हेभ्य कुल्माषान् खादन्तं बिभिक्षे' इत्यादि । मन्त्रश्च भवति—'अवृत्त्याशुन आन्त्राणि पेच' इति । अवृत्त्या वृत्त्यभावेन । अपर आह—स्वयमप्यवृत्तौ आ तन्निवृत्तेर्यत्र कुत्रचिन्नीचे दातरि भुञ्जानो वसेत् यां च यावतीं च स्वर्णमात्रां य कञ्चन पशुं वा तस्मै दत्वा । न पुनरत्यन्तमन्ववस्येत् वृत्तिं प्राप्य विरमेदिति ॥८॥ एवमापदि वृत्तिमुक्त्वा सुभिक्षेऽनापदि वृत्तिमाह—*त्रयाणां वर्णानां क्षत्रियप्रभृतीनां समावृत्तेन न भोक्तव्यं प्रकृत्या ब्राह्मणस्य भोक्तव्यम् ॥९॥ समावृत्तो द्विजातिः क्षत्रियादीनां त्रयाणां वर्णानां गृहे न भुञ्जीत । पक्वभोज्यं ब्राह्मणस्यान्नं प्रकृत्या स्वभावेनैव भोक्तव्यम् ॥९॥ *कारणादभोज्यम् ॥१०॥ कारणादेव त्वभोज्यम् ॥१०॥ कारणमाह—*यत्राप्रायश्चित्तं कर्मासेवते प्रायश्चित्तवति ॥११॥ यत्र यदा अग्निहोत्रवैश्वदेवाद्यकरणे प्रायश्चित्तं मुक्त्वा तदनुरूपं नित्यमाभ्युदयिकं वा कर्मासेवते तात्पर्येण करोति न प्रायश्चित्तवत्यात्मनि चोदितं प्रायश्चित्तं, तदैतस्मात्कारणादभोज्यमिति ॥११॥ *चरितनिर्वेषस्य भोक्तव्यम् ॥१२॥ चरितो निर्वेषः प्रायश्चित्तं येन तस्यान्नं भोक्तव्यं तद्भोजने न दोषः । निष्ठया भूतकालस्याभिधानाच्चर्यमाणेऽपि निर्वेषे न भोक्तव्यम् । किं तर्हि । चरिते ॥१२॥ *सर्ववर्णानां स्वधर्मे वर्तमानानां भोक्तव्यं शूद्रवर्जमित्येके ॥१३॥ शूद्रवर्जितानां स्वधर्मे वर्तमानानां सर्वेषामेव वर्णानामन्नं भोज्यम् । न ब्राह्मणस्यैवेत्येके मन्यन्ते ॥१३॥ *तस्यापि धर्मोपनतस्य ॥१४॥ तस्यापि

१ 'मटचीहतेषु मटच्यः अशनयः ताभिर्हतेषु नाशितेषु कुरुषु सस्येष्वित्यर्थः । ततो दुर्भिक्षे जाते आटिक्या अनुपजातपयोधरादिस्त्रीव्यञ्जनया जायया उपस्तिर्ह नामतश्चक्रस्यापत्यं चाक्रायण इभो हस्ती तमर्हतीतीभ्य ईश्वरः हस्त्यारोहो वा तस्य ग्राम इभ्यग्रामः तस्मिन् प्रद्राणकः अन्नालाभात् । द्रा कुत्सायां गतौ । कुत्सितां गतिं गतः अन्त्यावस्थां प्राप्त इत्यर्थः । उवास उषितवान् कस्याचिद्गृहमाश्रित्य । सोऽन्नार्थमटन्निभ्यं कुल्माषान् कुत्सितान्माषान् खादन्तं भक्षयन्तं यदृच्छयोपलभ्य बिभिक्षे याचितवान् ।'' इति शाङ्करभाष्यम् ॥ २. 'अग्निहोत्रवैश्वदेवादि अप्रायश्चित्तरूपं नित्यं' इति पाठान्तरम् ॥

शूद्रस्यान्नं भोज्यम् । यद्यसौ धर्मार्थमुपनतः आश्रितो भवति । धर्मग्रहणादर्थार्थमुपनतस्याभोज्यम् । आपत्कल्पश्चायम् ॥ १४ ॥ तत्र गुणविधिः— *सुवर्णं दत्त्वा पशुं वा भुञ्जीत नात्यन्तमन्ववस्येद्वृत्तिं प्राप्य विरमेत् ॥ १५॥ गतम् ॥१५॥ *सङ्घान्नमभोज्यम् ॥१६॥ सङ्घो गण. तस्य यत् स्वमन्नं न त्वेकस्य । तदभोज्यं यद्यपि ते सर्वे दद्युः ॥१६॥ *परिक्रुष्टं च ॥१७॥ भोक्तुकाम आगच्छ इत्येवं परिक्रुश्य सर्वत आहूय यद्दीयते तत्परिक्रुष्टं तदभोज्यम् ॥१७॥ *सर्वेषां च शिल्पाजीवानाम् ॥१८॥ चित्रनिर्माणादिकं शिल्पं यत् तदादिकं ये आजीवन्ति उपजीवति तेन ये जीवन्ति तेषां सर्वेषामपि ब्राह्मणादीनामन्नमभोज्यम् ॥१८॥ *ये च शस्त्रमाजीवन्ति ॥१९॥ ये च शस्त्रेण जीवन्ति तेषामप्यन्नमभोज्यम् । क्षत्रियवर्जम् ॥१९॥*ये चाधिम् ॥२०॥ आजीवन्तीत्यपेक्षते । स्वगृहे परान्वासयित्वा तेभ्यो भृतिग्रहणमाधिः । यः स्तोम इति प्रसिद्धः । 'परभूमौ कुटिं कृत्वा स्तोमं दत्त्वा वसेत्तु यः ।' इति । त चाधिं ये आजीवन्ति तेषामप्यन्नमभोज्यम् । ये तु प्रसिद्धमाधिमाजीवन्ति तेषां वार्धुषिकत्वादेव सिद्धो निषेधः ॥२०॥ *भिषक् ॥२१॥ अभोज्यान्न इति प्रकरणाद्गम्यते । भिषक् भैषज्यवृत्तिः । धर्मार्थं तु ये सर्पदंष्ट्रादींश्चिकित्सन्ति ते भोज्यान्नाः ॥२१॥*वार्धुषिकः॥२२॥वृध्द्याजीवी। सोऽप्यभोज्यान्न. ॥२२॥*दीक्षितोऽक्रीतराजकः ॥२३॥ दीक्षितो दीक्षणीयेष्ट्या संस्कृत· सोऽपि यावत् क्रीतराजको न भवति सोमक्रयं न करोति तावदभोज्यान्नः ॥ २३ ॥ * अग्नीषोमीयसंस्थायामेव ॥२४ ॥ भोक्तव्यमिति वक्ष्यमाणमपेक्षते । अग्नीषोमीये पशौ संस्थिते समाप्त एव भोक्तव्यम् । न प्रागिति ॥ २४ ॥ पक्षान्तरमाह—* हुतायां वपायां दीक्षितस्य भोक्तव्यम् ॥ २५ ॥ अग्नीषोमीयस्य वपायां हुतायां वा दीक्षितस्य भोक्तव्यम् । तथा च बह्वृचब्राह्मणम्— 'अशितव्यं वपायां हुतायाम्' इति ॥ २५ ॥ पक्षान्तरमाह— *यज्ञार्थे वा निर्दिष्टे शेषाद्भुञ्जीरन्निति हि ब्राह्मणम् ॥ २६ ॥ इद यज्ञार्थमिति व्यादेशे कृते शेषाद्भुञ्जीरन्निति ब्राह्मणं भवति । ब्राह्मणग्रहणं प्रत्युपलब्धिनः प्रवृत्ते·

रपस्मृतिना, म। भूदिति प्रत्यक्षमेवात्र ब्राह्मणं भवति ॥२६॥ *क्लीबः ॥ २७॥ षण्डकः । सोऽप्यभोज्यान्नः ॥२७॥ *राज्ञां प्रेषकरः ॥२८॥ राज्ञामिति बहुवचनात् ग्रामादेर्यः प्रेषकरः तस्यापि प्रतिषेधः ॥ २८ ॥ *अहविर्याजी ॥२९॥ यश्चाहविषा नररुधिरादिना यजेताभिचारादौ 'यथायममिचरेत्तस्य लोहितमवदानं कृत्वे'ति सोऽप्यभोज्यान्नः ॥ २९ ॥ *चारी ॥३०॥ चारो गूढचारः स्पशः । सोऽप्यभोज्यान्नः ॥ ३० ॥ *अविधिना च प्रव्रजितः ॥३१॥ यश्चाविधिना प्रव्रजितः शाक्यादिः सोऽप्यभोज्यान्नः ॥३१॥ *यश्चाग्नीनपास्यति ॥३२॥ योऽग्नीनपास्याग्नि त्यक्त्वा प्रायश्चित्तं न करोति सोऽप्यभोज्यान्नः । अपिच अविधिनेत्येव । यश्चाविधिना उत्सर्गेष्ट्या विनाग्नीनपास्यति सोऽप्यभोज्यान्नः ॥ ३२॥ *यश्च सर्वान्वर्जयते सर्वान्नी च श्रोत्रियो निराकृतिर्वृषलीपतिः ॥ ३३ ॥ यश्च सर्वान्वर्जयते भोजने न कचिद्भुङ्क्ते न कञ्चिद्भोजयति सः सर्ववर्जी। यश्च सर्वान्नी सर्वेषामन्नं भुङ्क्ते तावप्युभावभोज्यान्नौ। श्रोत्रिय श्रोत्रियोऽश्रोत्रिय इत्युभयोश्शेषः । श्रोत्रियोऽपि सन्नभोज्यान्न इति । निराकृतिः निस्स्वाध्यायः । निर्व्रत इत्यन्ये । सोऽप्यभोज्यान्नः । वृषलीपतिः क्रमविवाहे यस्य वृषली जीवति इतरा मृताः स वृषलीपतिः । स श्रोत्रियोऽप्यभोज्यान्न इति ॥ ३३ ॥

॥ इति अष्टादशी खण्डिका ॥ प्र० १ प० ६ ख० १८ ॥

---

*मत्त उन्मत्तो बद्धोऽणिकः प्रत्युपविष्टो यश्च प्रत्युपवेशयते तावन्तं कालम् ॥१॥ मदकरद्रव्यसेवया अप्रकृतिं गतो मत्तः । उन्मत्तो भ्रान्तः । बद्धो निगलितः । अणिकः पुत्रात् श्रुतग्राही । पुत्राचार्य इति शास्त्रेषु निन्दितः । प्रत्युपविष्टः ऋणादिना कारणेनाधमर्णादिकं निरुध्य तत्पार्श्वे उपविष्टः । इतरस्तस्य परिहारं कुर्वंस्तेन सहासीनः प्रत्युपवेशयिता । एते मत्तादयस्तावन्तं कालमभोज्यान्नाः । यावन्मदाद्यनुवृत्तिः । अपर आह—अणिकः ऋणस्य दाता प्रत्युपवेष्टुरिदं विशेषणम् इति ॥ १ ॥*क आश्यान्नः ॥२॥ यद्येते अभोज्यान्नाः कस्तर्हि आश्यान्नः । कस्य तर्ह्यन्न

मशनीयमिति । यद्यप्येते अभोज्यान्ना इत्युक्ते परिशिष्टा भोज्यान्ना इति गम्यते। तथाप्यनेकमतोपन्यासार्थं प्रश्नपूर्वक आरम्भः ॥२॥ *य ईप्सेदिति कण्वः ॥ ३ ॥ य एव प्रार्थयते स एवाश्यान्न इति कण्व ऋषिर्मन्यते ॥ ॥३॥ *पुण्य इति कौत्सः ॥४॥ सर्ववर्णानां स्वधर्मे वर्तमानानामित्युक्तत्वात् भोज्यान्नास्सर्वे पुण्या एव । इह पुनः पुण्यग्रहणमतिशयार्थम् । तपोहोमजप्यैः स्वधर्मेण च युक्तः पुण्यः । स स्वयं प्रार्थ्यमानोऽपि भोज्यान्न इति कौत्सस्य पक्षः ॥ ४ ॥* यः कश्चिद्दद्यादिति वार्ष्यायणिः ॥५॥ यः कश्चित्पुण्योऽपुण्यो वा सततं दानशील स भोज्यान्न इति वार्ष्यायणिराह । तथा च मनुः—'श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत् ।' इति ॥५॥ अत्रोपपत्तिः—*यदि हि रजः स्थावरं पुरुषे भोक्तव्यमथ चेच्चलं दानेन निर्दोषो भवति ॥६॥ रजः पापम् । तद्यदि पुरुषे कर्तरि स्थावरं स्थिरं नोपभोगमन्तरेण क्षीयते । तदा ततः प्रतिग्रहे भोक्तरि संक्रमाभावात् भोक्तव्यम् । अथ चेच्चलमुपभोगमन्तरेण च क्षीयते तदा सततं दानशीले न मुहूर्तमपि पापमवतिष्ठत इति कुतो भोक्तुर्दोष इति ॥ ६ ॥ *शुद्धा भिक्षा भोक्तव्यैककुणिकौ काण्वकुत्सौ तथा पुष्करसादिः ॥७॥ धार्मिकेणोद्यता आहृता भिक्षा शुद्धा भिक्षा । सा भोज्येत्येकादीनां पञ्चानां पक्षः । पुष्करसादिराचार्यः पौष्करसादिः । वृद्ध्यभावश्छान्दसः ॥ ७ ॥ *सर्वतोपेतं वार्ष्यायणीयम् ॥ ८ ॥ सर्वत उपेतं सर्वतोपेतम् । छान्दसो गुणः । उपेतमयाचितोपपन्नम् । तत्सर्वतोऽपि भोज्यमिति वार्ष्यायणीयं मतम् ॥ ८ ॥ इदानीं स्वमतमाह— *पुण्यस्येप्सतो भोक्तव्यम् ॥ ९ ॥ कण्वकुत्सयोः पक्षौ समुच्चितावाचार्यस्य पक्षेण ॥ ९ ॥ *पुण्यस्याप्यनीप्सतो न भोक्तव्यम् ॥ १० ॥ यः प्रार्थितोऽपि नित्यं सकृद्दुकृत्वा कथञ्चिद्दापादितप्सुः सोऽनीप्सुरुच्यते तस्य पुण्यस्याप्यभोज्यमिति । अपर आह— अनीप्सत इति कर्तरि षष्ठी । पुण्यस्याप्यन्नं न भोज्यम् । यदि भिक्षमाणः पूर्ववैरादिना स्वयमीप्सन्न भवतीति ॥ १० ॥ *यतः कुतश्चाभ्युद्यतं

भोक्तव्यम् ॥ ११ ॥ 'सर्वतोपेत' मित्युक्तमेव पुनरुच्यते विशेषविवक्षया ॥ ११ ॥ तमाह—* **नानानियोगपूर्वमिति हारीतः ॥ १२॥** अद्य तुभ्यमिदमाहरिष्यामि तदत्रभवता ग्राह्यमिति निवेदनं नियोगः । तदभावः अनियोगः । पुनर्नञ्समासः । द्वौ नञौ प्रकृतमर्थं गमयतः । अननियोगो नियोगः तत्पूर्वं तदभ्युपेतं न भोज्यमिति ॥ १२॥ * **अथ पुराणे श्लोकावुदाहरन्ति—उद्यतामाहृतां भिक्षां पुरस्तादप्रवेदिताम् । भोज्यां मेने प्रजापतिरपि दुष्कृतकारिणः ॥ न तस्य पितरोऽश्नन्ति दश वर्षाणि पञ्च च । न च हव्यं वहत्यग्निर्यस्तामभ्यधिमन्यते ॥ इति ॥ १३ ॥** अथ अपि च । पुराणे 'सर्गश्च प्रतिसर्गश्च वंशमन्वन्तराणि च । वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥' इति । एवंलक्षणे भविष्यत्पुराणादौ । उद्यतां हस्ताभ्यामुद्यम्य धारिताम् । आहृतां स्वयमानीताम् । पूर्वमनिवेदितां भिक्षाम् । दुष्कृतकारिणोऽपि सकाशात् भोज्यं प्रजापतिर्मनुर्मेने । 'प्रजापतिर्यस्मिन्नि'ति मानवे दर्शनात् । यस्तु तामभ्यधिमन्यते प्रत्याचष्टे तस्य पितरः कव्यं नाश्नन्ति । कियन्तं कालम् । दश वर्षाणि पञ्च च । अग्निश्च हव्यं न वहति । तावन्तमेव कालमिति प्रत्याख्यातुर्निन्दार्थवादः ॥ १३ ॥ * **चिकित्सकस्य मृगयोश्शल्यकृन्तस्य पाशिनः । कुलटायाष्षण्डकस्य च तेषामन्नमनाद्यम् ॥ १४ ॥** चिकित्सको भिषक् । मृगयुर्मृगघाती लुब्धकः । शल्यकृन्तः शस्त्रेण ग्रन्थ्यादीनां छेत्ता अम्बष्ठः । पाशी पाशवान् पाशजालेन मृगादीनां ग्राहकः । कुलात्कुलमटतीति कुलटा व्यभिचारिणी । षण्डकः तृतीयाप्रकृतिः । तेषां चिकित्सकादीनामन्नमनाद्यम् । चिकित्सकषण्डकयोः पुनर्वचनमुद्यतस्यापि प्रतिषेधार्थम् । पूर्वत्र तर्हि ग्रहणं शक्यमकर्तुम् । एवं तर्हि सूत्रकारस्य स प्रतिषेधः । अयं तु पुराणश्लोक इत्यपौनरुक्त्यम् ॥ १४ ॥ * **अथाप्युदाहरन्ति—अन्नादे भ्रूणहा मार्ष्टि अनेना अभिशंसति । स्तेनः प्रमुक्तो राजनि याचन्ननृतसङ्करे ॥ इति ॥ १५ ॥** षडङ्गस्य वेदस्याध्येता भ्रूणः । तं यो हतवान् स भ्रूणहा । सोऽन्नादे मार्ष्टि लिम्पति । किम् । प्रकरणादेन इति गम्यते । भ्रूणघ्नो योऽन्नमत्ति तस्मिंस्तदेनः

संक्रामति 'तस्मात्तस्योद्यतमप्यभोज्यमिति' प्रकरणसङ्गतः पादः । इतरत् पुराणश्लोके पठ्यमानेऽपि पठितम् । अनेनसं योऽभिशंसति मिथ्यैव ब्रूते इदं त्वया कृतमिति । स तस्मिन्नभिशंसति तदेनो मार्ष्टि । मनुस्तु—'पतितं पतितेत्युक्त्वा चोरं चोरेति वा पुनः । वचनात्तुल्यदोषस्स्यान्मिथ्या द्विर्दोषभाग्भवेत् ॥' इति द्वैगुण्यमाह । तदभ्यासे द्रष्टव्यम् । 'स्तेनः प्रकीर्णकेश' इति वक्ष्यति । स एव तृतीयस्य पादस्यार्थः । कर्तृभेदादपौनरुक्त्यम् । सङ्करः प्रतिज्ञा प्रतिश्रवः । सत्यसङ्कर इति यथा । यः प्रतिश्रुत्य न ददाति सोऽनृतसङ्कर इति । ककारस्तु छान्दसः । तस्मिन् याचकः स्वयमेनो मार्ष्टि । तस्मात्प्रतिश्रुत देयमिति ॥ १९ ॥

॥ इति एकोनविंशतितमी खण्डिका ॥ प्र०१ प०६ ख०१९ ॥

---

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां प्रथमप्रश्ने षष्ठः पटलः ॥ ६ ॥

---

*नमं लौकिकमर्थं पुरस्कृत्य धर्मांश्चरेत् ॥ १ ॥ इम लौकिकं लोके विदितं ख्यातिलाभपूजात्मकम् । अर्थं प्रयोजनम् । पुरस्कृत्य अभिसन्धाय धर्मान्न चरेत् ॥ १ ॥ किं कारणम्—*निष्फला ह्यभ्युदये भवन्ति ॥ २ ॥ हि यस्मादेवं क्रियमाणा धर्मा अभ्युदये फलकाले निष्फला भवन्ति । लोकभक्त्या ह्यसौ धर्मं चरति । न कर्तव्यमिति श्रद्धया । न च श्रद्धयां विना धर्मः फलं साधयति । 'यो वै श्रद्धामनारभ्ये'ति श्रुतेः ॥२॥ किमत्रेदानीं दृष्टं फलं त्याज्यमेव नेत्याह—*तद्यथाम्रे फलार्थे निमित्ते छाया गन्ध इत्यनूत्पद्येते । एवं धर्मंमपि चर्यमाणमर्था अनूत्पद्यन्ते ॥ ३ ॥ तदिति वाक्योपन्यासे । फलार्थं ह्याम्रवृक्षो निर्मीयते आरोप्यते । तस्मिन् फलार्थे निमित्ते छाया गन्धश्चानूत्पद्येते । एवं धर्ममपि चर्यमाणमर्थाः ख्यात्यादयोऽनूत्पद्यन्ते अनुनिष्पद्यन्ते । तथैव स्वीकार्याः तथा चाह—'यथेक्षुहेतोः सलिलं प्रसिञ्चयंस्तृणानि वल्लीरपि च प्रसिञ्चति । तथा नरो धर्मप-

थेन वर्तयन्. यशश्च कामांश्च वसूनि चाश्नुते ॥' इति ॥३॥ *नो चेदनूत्पद्यन्ते न धर्महानिर्भवति ॥४॥ यद्यपि दैवादर्था नानूत्पद्यन्ते तथापि धर्मस्तावद्भवति । स च स्वतन्त्रः पुरुषार्थः । किमन्यैरर्थैरिति ॥४॥ * अनसूयुर्दुष्प्रलम्भः स्यात्कुहकशठनास्तिकबालवादेषु ॥५॥ कुहकः प्रकाशे शुचिरेकान्ते यथेष्टचारी । शठः वक्रचित्तः । नास्तिकः प्रेत्याभाववादी । बालः श्रुतिरहितः । एतेषां वादेषु अनसूयुः स्यात् । असूयया द्वेषो लक्ष्यते । द्वेष्टा न स्यात् । तान्विषयीकृत्य द्वेषमपि न कुर्यात् । तथा दुष्प्रलम्भश्च स्यात् । प्रलम्भनं विसंवादनं मिथ्याफलाख्यानम् । 'प्रलिपिवञ्च्योः प्रलम्भन' इति दर्शनात् । दुष्प्रलम्भो विसंवादयितुं मिथ्याफलाख्यानेन प्रवर्तयितुमशक्यः । कुहकादिवादेषु वञ्चितो न स्यात् । तद्वशो न स्यादित्यर्थः ॥५॥ वञ्चनस्य सम्भवमाह—* न धर्माधर्मौ चरत आवं स्व इति न देवगन्धर्वा न पितर इत्याचक्षतेऽयं धर्मोऽयमधर्म इति ॥६॥ आवमिति छान्दसं रूपम् । भाषायां तु, 'प्रथमायाश्च द्विवचने भाषाया'मित्यात्व प्राप्नोति । यदि हि धर्माधर्मौ विग्रहवन्तौ गोऽश्ववच्चरेताव स्व इति ब्रुवाणौ यदि वा देवादयः प्रकृष्टज्ञाना ब्रूयुरिमौ धर्माधर्माविति ततः कुहकादिवादेषु न स्याद्वञ्चना । तदभावात्तु वञ्चनासम्भव इति । इदं चात्र द्रष्टव्यम् । प्रत्यक्षादेरगोचरौ धर्माधर्मौ । किंतु नित्यनिर्दोषवेदगम्यौ । तदभावे तन्मूलशास्त्रगम्याविति ॥६॥ यत्र तु प्रायश्चित्तादौ विषयव्यवस्था दुष्करा तत्र निर्णयमाह—*यं त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मो यं गर्हन्ते सोऽधर्मः ॥७॥ आर्याः शिष्टास्त्रैवर्णिकाः । बहुवचनाच्चत्वारस्त्रयो वा । यथाह याज्ञवल्क्यः—'चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा । सा ब्रूते यं स धर्मस्स्यादेको वाध्यात्मवित्तमः ॥' इति ॥ ७ ॥ इदानीं श्रुतिस्मृत्योः प्रत्यक्षयोरदर्शने शिष्टाचारादप्यवगम्य धर्मः कार्य इत्याह— * सर्वजनपदेष्वेकान्तसमाहितमार्याणां वृत्तं सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामदाम्भिकानां वृत्तसादृश्यं भजेत ॥८॥ सम्यग्विनीताः 'आचार्याधीनः स्या' दित्यादिना विनयेन सम्प-

न्नाः । वृद्धाः परिणतवयसः । यौवने विषयवश्यतापि स्यादितीदमुक्तम् । आत्मवन्तो जितेन्द्रियाः । अलोलुपा अकृपणाः । अदाम्भिका अधर्मध्वजाः । एवंभूतानामार्याणां सर्वजनपदेषु यदेकान्तेनाऽव्यभिचारेण समाहितमनुमतं वृत्तमनुष्ठानम् । न मातुलसुतापरिणयनवत्कतिपयविषयम् । तद्वृत्तसादृश्यं भजेत । तदनुरूपं चेष्टेत । न तेषामनुष्ठानं च निर्मूलम् । सम्भवति च वैदिकानामुत्सन्नपाठब्राह्मणानुभव इति ॥ ८ ॥ *एवमुभौ लोकावभिजयति ॥ ९ ॥ एवं श्रुतिस्मृतिमूलसदाचारमनुष्ठानं कुर्वन् उभौ लोकावभिजयति इमं चामुं च ॥ ९ ॥ *अविहिता ब्राह्मणस्य वाणिज्या ॥ १० ॥ क्रयविक्रयव्यवहारो वाणिज्या । सा स्वयं कृता ब्राह्मणस्य वृत्तिर्न विहिता । प्राप्तानुवादोऽयम् । नापदि विधानार्थः ॥ १० ॥ *आपदि व्यवहरेत पण्यानामपण्यानि व्युदस्यन् ॥ ११ ॥ ब्राह्मणवृत्तेरभाव आपत् । तस्यां सत्याम् । पण्यानाम् । 'व्यवहृतिपणोः समर्थयो'रिति कर्मणि षष्ठी । व्यवहरेत । क्रयश्च विक्रयश्च व्यवहारः । पण्यानि क्रीणीयात् विक्रीणीत चेत्यर्थः । अपण्यानि वक्ष्यमाणानि व्युदस्यन् वर्जयन् । कृत्स्नाया वैश्यवृत्तेरुपलक्षणमिदम् । क्षत्रियवृत्तिश्च दण्डापूपिकया सिद्धा । तथा च गौतमः—'तदलाभे क्षत्रियवृत्तिस्तदलाभे वैश्यवृत्ति'रिति ॥ ११ ॥ अपण्यान्याह—*मनुष्यान्रसान्रागान्गन्धानन्नं चर्म गवां वशां श्लेष्मोदके तोक्मकिण्वे पिप्पलीमरीचे धान्यं मांसमायुधं सुकृताशां च ॥ १२ ॥ मनुष्या दारदासादयः । रसा गुडलवणादयः । क्षीरादयो वा । रागाः कुसुम्भादयः । रज्यन्तेऽनेनेति रज्यन्त इति वा रागा वस्त्रादयः । गन्धाश्चन्दनादयः । गवां मध्ये वशा वन्ध्या गौः । श्लेष्म जतुवज्रादि । येन विश्लिष्टं चर्मादि सन्धीयेत । यथा 'श्लेष्मणा चर्मण्यं वान्यद्वा विश्लिष्टं संश्लेषये'दिति बह्वृचब्राह्मणे दर्शनात् । उदकं कुम्भजलम् । तोक्मानि ईषदङ्कुरितानि व्रीह्यादीनि । किण्वं सुराप्रकृतिद्रव्यम् । सुकृतं पुण्यं तस्य फलं सुकृताशा । शिष्टानि प्रसिद्धानि । एतान्यपण्यानि वर्जयित्वा अन्येषां पण्यानां व्यवहरेत । मनुष्यादीन्वर्जयित्वेत्येव सिद्धे 'अपण्यानी'ति वचनमन्येषामप्यपण्यानां व्युदासार्थम् । तत्र मनुः—'सर्वान् रसा

नपोहेन कृतमन्नं च तिलैस्सह । अश्मनो लवणं चैव पशवो ये च मानुषाः ॥ सर्वं च तान्तवं रक्तं शाणक्षौमाविकानि च । अपि चेत्स्युररक्तानि फलमूले तथौषधीः ॥ अपः शस्त्रं विषं मांसं सोमं गन्धांश्च सर्वशः । क्षीरं क्षौद्रं दधि घृतं तैलं मधु गुडं कुशान् ॥ आरण्यांश्च पशून् सर्वान् दंष्ट्रिणश्च वयांसि च मद्यं नीलीं च लाक्षां च सर्वांश्चैकशफान् पशून् ॥' इति ॥ १२ ॥ *तिलतण्डुलांस्त्वेव धान्यस्य विशेषेण न विक्रीणीयात् ॥ १३ ॥ धान्यानां मध्ये तिलतण्डुलादेर्विशेषतोऽतिशयेन न विक्रीणीयात् न विक्रीणीत अन्येषां विकल्पः । स्वयमुत्पादितेषु नायं प्रतिषेधः । मानवे हि श्रुतम्—'काममुत्पाद्य कृष्यां तु स्वयमेव कृषीवलः । विक्रीणीत तिलाञ्छुद्धान् धर्मार्थमचिरस्थितान् ॥' इति ॥ १३ ॥ * अविहितश्चैतेषां मिथो विनिमयः ॥ १४ ॥ विनिमयः परिवर्तनम् । येषां विक्रयः प्रतिषिद्धः तेषां परस्परेण विनिमयोऽप्यविहितः प्रतिषिद्धः न कर्तव्य इत्यर्थः ॥ १४ ॥ तेष्वेव केषुचिद्विनिमयोऽनुज्ञायते—*अन्नेन चान्नस्य मनुष्याणां च मनुष्यै रसानां च रसैर्गन्धानां च गन्धैर्विद्यया च विद्यानाम् ॥ १५ ॥ अन्नादीनां विद्यान्तानां विनिमयो भवत्येवेत्यर्थः । तथा च वासिष्ठः—'रसा रसैस्समतो हीनतो वा तिलतण्डुलपक्वान्नविद्यामनुष्याश्च विहिताः परिवर्तिन' इति । मानवे तु विशेषः—'रसा रसैर्निमातव्या न त्वेव लवणं रसैः । कृतान्नं च कृतान्नेन तिला धान्येन [illegible] ॥' इति । गौतमीये तु—'नियमस्तु रसानां रसैः पशूनां च [illegible] तत्समाः ॥' इति । [illegible] च न लवणकृतान्नयोस्तिलानां च समानेन तु पक्वस्यासम्प्रतिपत्त्यर्थे' इति । तस्मादत्र प्रतिषेधानुवृत्तिर्न शङ्कनीया । पूर्वत्र चोक्तं 'ब्रह्मणि मिथोविनियोगे न गतिर्विद्यत' इति । नियमाभ्यनुज्ञानादेव विद्यादीनां विक्रयोऽपि प्रतिषिद्धो वेदितव्यः ॥ १५ ॥ *अक्रीतपण्यैर्व्यवहरेत ॥ १६ ॥ अक्रीतानि स्वयमुत्पादितानि अरण्यादाहृतानि वा यानि पण्यानि तैर्व्यवहरेत ॥ १६ ॥

॥ इति विंशतितमी खण्डिका ॥ प्र० १ प० ७ ख० २० ॥

* **मुञ्जबल्बजैर्मूलफलैः** ॥ १ ॥ मुञ्जादिभिः । मुञ्जबल्बजास्तृणविशेषाः ॥ १ ॥ * **तृणकाष्ठैरविकृतैः** ॥ २ ॥ तृणानां विकारो रज्ज्वादिभाव काष्ठानां विकारः स्थूणादिभावः । तृणत्वादेव सिद्धे मुञ्जबल्बजग्रहणं विकारार्थम् ॥ २ ॥ * **नात्यन्तमन्ववस्येत्** ॥ ३ ॥ प्रतिषिद्धानामपि विक्रयविनियमाभ्यां जीवेत् । न पुनरत्यन्तमन्ववस्येत् । तथा च गौतमः—'सर्वथानुवृत्तिरशक्तावशूद्रेणेति तदप्येके प्राणसंशय' इति । मनुरपि—'जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । आकाशमिव पङ्केन स दोषेण न लिप्यते' ॥ इति ॥ ३ ॥ * **वृत्तिं प्राप्य विरमेत्** ॥ ४ ॥ गतम् ॥ ४ ॥ * **न पतितैस्संव्यवहारो विद्यते** ॥ ५ ॥ पतिताः स्तेनादयो वक्ष्यमाणास्तैः सह न कश्चिदपि व्यवहारः कर्तव्यः । तत्र मनुः—'संवत्सरेण पतति पतितेन सहाचरन् । याजनाध्यापनाद्यौनान्न तु यानासनाशनात् ॥' इति । यानादिभिस्संवत्सरेण पतति । याजनादिभिस्तु सद्य एव ॥ ५ ॥ * **तथापपात्रैः** ॥ ६ ॥ अपपात्राश्चण्डालादयः । तैश्च संव्यवहारो न कर्तव्यः ॥ ६ ॥ * **अथ पतनीयानि** ॥ ७ ॥ द्विजातिकर्मभ्यो हानिः पतनं तस्य निमित्तानि कर्माणि वक्ष्यन्ते ॥ ७ ॥ * **स्तेयमाभिशस्त्यं पुरुषवधो ब्रह्मोज्झं गर्भशातनं मातुःपितुरिति योनिसम्बन्धे सहापत्ये स्त्रीगमनं सुरापानमसंयोगसंयोगः** ॥ ८ ॥ स्तेयं सुवर्णचौर्यम् । आभिशस्त्यं ब्रह्महत्या । 'ब्राह्मणमात्रं च हत्वाभिशस्त' इति वक्ष्यमाणत्वात् । पुरुषवधो मनुष्यजातिवधः । तेन स्त्रीवधोऽपि गृह्यते । ब्रह्मोज्झ उज्झ उत्सर्गे । भावे घञ् । छान्दसो लिङ्गव्यत्ययः । ब्रह्म वेदः तस्याधीतस्य नाशनं ब्रह्मोज्झम् । औषधादिप्रयोगेण गर्भस्य वधो गर्भशातनम् । मातृयोनिसम्बन्धे मातृष्वस्रादौ मातुः आदौ । पितृयोनिसम्बन्धे पितृष्वस्रादौ सहापत्ये अपत्येन सहित स्त्रीगमनं मातृष्वसृगमनं तत्सुतागमनं मातुलसुतागमनं चेत्यर्थः । 'गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा ।' तस्याः पानं सुरापानम् । असंयोगाः संयोगानर्हाः प्रतिलोमादयः । तैः संयोग एकगृहवासादिः असंयोगसंयोगः । एतानि पतनीयानि ।

॥८॥ *गुर्वीसखिं गुरुसखिं च गत्वान्यांश्च परतल्पान् ॥९॥ सखीशब्दस्य छान्दसो ह्रस्वः । गुर्वीसखी मात्रादीनां सखी । गुरुसखी पित्रादीनां सखी । तां गत्वा । किं? पततीत्युत्तरत्र श्रुतमपेक्ष्यते । अन्यांश्च परतल्पान् गत्वा पतति । तल्पशब्देन शयनवाचिना दारा लक्ष्यन्ते ॥९॥ *नागुरुतल्पे पततीत्येके ॥१०॥ गुरुदारव्यतिरेकेण परतल्पगमने पातित्यं नास्तीत्येके मन्यन्ते । यद्यपि सामान्येन पतनीयानीत्युक्तम् । प्रायश्चित्ते तु गुरुलघुभावो द्रष्टव्यः ॥१०॥ *अधर्माणां तु सततमाचारः ॥११॥ तुश्चार्थे । उक्तव्यतिरिक्तानामप्यधर्माणां सततमाचारः पतनहेतुः ॥११॥ *अथाशुचिकराणि ॥१२॥ अशुचिं पुरुषं कुर्वन्तीत्यशुचिकराणि तानि कथ्यन्ते ॥१२॥ *शूद्रगमनमार्यस्त्रीणाम् ॥१३॥ त्रैवर्णिकस्त्रीणां शूद्रगमनमशुचिकरम् ॥१३॥ प्रतिषिद्धानां मांसभक्षणम् ॥१४॥ येषां मांसं प्रतिषिद्धं तेषां मांसस्य भक्षणमशुचिकरम् ॥१४॥ तत्रोदाहरणम्—*शुनो मनुष्यस्य च कुक्कुटसूकराणां ग्राम्याणां क्रव्यादसाम् ॥१५॥ 'ग्राम्याणा'मिति वचनादारण्यानामप्रतिषेधः । अदनमदः । भावेऽसुन्प्रत्ययः । क्रव्यविषयमदनं येषां ते क्रव्यादसः केवलं मांसवृत्तयो गृध्रादयः ॥१५॥ *मनुष्याणां मूत्रपुरीषप्राशनम् ॥१६॥ मूत्रपुरीषग्रहणात्तादृशस्य रेतसोऽप्युपलक्षणम् ॥१६॥ *शूद्रोच्छिष्टमपपात्रगमनं चार्याणाम् ॥१७॥ शूद्रोच्छिष्टं भुक्तमार्याणां त्रैवर्णिकानामशुचिकरम् । अपपात्राः प्रतिलोमस्त्रियः तासां च गमनम् ॥१७॥ *एतान्यपि पतनीयानीत्येके ॥१८॥ यान्येतान्यशुचिकराण्यनुक्रान्तानि एतान्यपि पतनीयान्येवेत्येके मन्यन्ते ॥१८॥ *अतोऽन्यानि दोषवन्त्यशुचिकराणि भवन्ति ॥१९॥ उक्तव्यतिरिक्तानि दोषवन्ति कर्माणि दुष्प्रतिग्रहहिंसादीनि तान्यशुचिकराणि भवन्ति ॥१९॥ *दोषं बुध्वा न पूर्वः परेभ्यः पतितस्य समाख्याने स्याद्वर्जयेत्त्वेनं धर्मेषु ॥२०॥ पतितस्य दोषं परैरविदितं बुध्वा परस्य समाख्याने पूर्वो न स्यात् । परैरविदितमपि स्वयं विद्वानपि न परेभ्यः पूर्वमाचक्षीत । किं तु स्वयं धर्मकृत्येष्वेनं वर्जयेत् । यथा परे न जानन्ति । अ

न्यथा दोषवान् स्यात् ॥ २० ॥

॥ इति एकविंशतितमी खण्डिका ॥ प्र०१ प०७ ख०२१ ॥

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां प्रथमप्रश्ने सप्तमः पटलः ॥ ७ ॥

* ॐ अध्यात्मिकान्योगाननुतिष्ठेन्न्यायसंहितानानैश्चारिकान् ॥१॥ उक्तानि पतनीयान्यशुचिकराणि च कर्माणि । तेषां प्रायश्चित्तानि वक्ष्यन्नादित आत्मज्ञानं तदुपयोगिनश्च योगानधिकुरुते । तस्यापि सर्वपापहरत्वेन मुख्यप्रायश्चित्तत्वात् । श्रूयते हि—'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥' इति । 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति च । याज्ञवल्क्योऽप्याह—'सत्याचारदमाहिंसादानस्वाध्यायकर्मणाम् । अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥' इति । अध्यात्मनि भवानध्यात्मिकान् । छान्दसो वृद्ध्यभावः । आत्मलम्भयितॄन् । योगान् चित्तसमाधानहेतून् वक्ष्यमाणानक्रोधादीनुपायान् । अनुतिष्ठेत् सेवेत न्यायसंहितान् उपपद्यन्ते हि ते न्यायतः क्रोधादीनां दोषाणां निर्घाते । अनैश्चारिकान् निश्चारश्चित्तस्य बहिर्विक्षेपः तस्मै ये प्रभवन्ति क्रोधादयो वक्ष्यमाणाः ते नैश्चारिकाः तत्प्रतिपक्षभूतान् । अक्रोधादिषु सत्सु चित्तमनिश्चरणशीलमात्मावलम्बं निश्चलं तिष्ठति तस्मात्ताननुतिष्ठेत् । आत्मानं लब्धुमक्रोधादिलक्षणं चित्तसमाधानं कुर्यादित्यर्थः ॥ १ ॥ किंपुनरात्मा प्रयत्नेन लब्धव्यः । ओमित्याह— *आत्मलाभान्न परं विद्यते ॥ २ ॥ आत्मलाभात्परमुत्कृष्टं लाभान्तरं नास्ति । तस्मात्तस्य लाभाय यत्न आस्थेय इति । कः पुनरसावात्मा ॥ नन्वसौ नित्यलब्धः । न हि स्वयमेव स्वस्यालब्धो भवति । सत्यम् । प्रकृतिमेलनात्तद्धर्मतामुपगतो विनष्टस्वरूप इव भवति । प्रकृत्या हि नित्यसम्बद्धः पुरुषः । तथा च सश्च तत्सम्बद्धः यथा परस्परं विवेको न ज्ञायते । अन्योन्यधर्माश्चान्योऽन्यत्राध्यास्य-

न्ते । यथा क्षीरोदके सम्पृक्ते न ज्ञायते विवेकः इयत् क्षीरमियदुदकमित्य-मुष्मिन्नवकाशे उदकमिति । यथा वा अग्न्ययोगोलकयोरभिसम्बद्धयोर्ये अग्निधर्मा उष्णत्वभास्वरत्वादयः ते अयोगोलके अध्यस्यन्ते । ये वा अयो-गोलकधर्माः काठिन्यदैर्घ्यादयः ते अग्नावध्यस्यन्ते । एवं हि तत्र प्रति-पत्तिः । एकं वस्तु उष्णं दीर्घं भास्वरं कठिनमिति तद्वदिहापि पुरुषधर्मा-श्चैतन्यादयः प्रकृतावध्यस्यन्ते प्रकृतिधर्माश्च सुखदुःखमोहपरिणामादयः पुरुषे । ततश्च एकं वस्तु चेतनं सुखादिकलिलं परिणामीति व्यवहारः । व-स्तुतस्तु तस्मिन् सङ्घाते अचेतनांशः परिणामी । चेतनांशस्तु तमनुधावति । येनयेन रूपेण परिणमते तेनतेनाभेदाध्यासमापद्यते । यथा क्षीरावस्थागतं घृ-तं क्षीरे दध्यात्मना परिणमते तामप्यवस्थामनुप्रविशति । तद्वदिदमुच्यते 'तत्सृष्ट्वा तदेवानुप्राविश'दिति । सर्गेऽप्यात्मनः कर्तृत्वमिदमेव । यदुत भो-क्तृतया निमित्तत्वम् । तदेव स्वभावतः स्वच्छोऽप्यात्मा प्रकृत्यादावभेद-मापन्नः तद्धर्मा भवति । एवं तद्विकारेण महता तद्विकारेणाहङ्कारेण । इत्या-शरीराद्द्रष्टव्यम् । स्थूलोऽहं कृशोऽहं देवोऽहं मनुष्योऽहं तिर्यगहमिति । तस्यैवमनवाप्तोपेक्षितव्यस्वरूपलाभः नीचैरिव वर्धितस्य राजपुत्रस्य । तद्यथा शबरादिभिर्बाल्यप्रभृति स्वसुतैस्सह संवर्धितो राजपुत्रस्तज्जातीयमात्मान-मवलोकयन्मात्रा स्वरूपे कथिते लब्धस्वरूप इव भवति । तथा प्रकृत्या वेश्ययेव स्वरूपान्तरं नीत आत्मा मातृस्थानीयया 'तत्त्वमसी'ति श्रुत्या स्वभावं नीयते । यदेवंविधं परिशुद्धं वस्तु तदेव त्वमसि । यथा मन्यसे 'मनुष्योऽहं दुःख्यह'मित्यादि न तथेति । यथा य एवंभूतो राजा स त्वमसीति राजपुत्रः । ननु तत्त्वमसीति ब्रह्मणा तादात्म्यमुच्यते । को ब्रूते नेति । ब्रह्मापि नान्यदात्मनः । किं पुनरयमात्मा एकः आहो स्विन्नाना । किमनेन ज्ञानेन त्वं तावदेवंविधश्चिदेकरसो नित्यनिर्मलः कलुषवस्तुसंसर्गात्क-लुषतामिव गतः । तद्वियोगश्च ते मोक्षः । त्वयि मुक्ते यद्यन्ये सन्ति ते संस-रिष्यन्ति । का ते क्षतिः । अथ न सन्ति तथापि कस्ते लाभ इत्यलमियता । महत्येषा कथा ॥ तदप्येते श्लोका भवन्ति—

नीचानां वसतौ तदीयतनयैः सार्धं चिरं वर्धित-
तज्जातीयमवैति राजतनयः स्वात्मानमप्यञ्जसा ।
संघाते महदादिभिस्सहवसंस्तद्वत्परः पूरुषः
स्वात्मानं सुखदुःखमोहकलिलं मिथ्यैव भिमन्यते ॥ १ ॥
(ता भोगपरः समग्रविभवो यः शासिता दुष्कृतां
राजा-स त्वमसीति मातृमुखतः श्रुत्वा यथावत्स तु ।
राजीभूय नृपार्थमेव यतते तद्वत्पुमान् बोधितः
श्रुत्या तत्त्वमसीत्यपास्य दुरितं ब्रह्मैव सम्पद्यते ॥ २ ॥
इत्येवं बहवोऽपि राजतनयाः प्राप्ता दशामीदृशीं
नैवान्योन्यभिदामुपेत्य सहसा सर्वे भजन्त्येकताम् ।
किं तु स्वे परमे पदे पृथगमी तिष्ठन्ति भिन्नास्तथा
क्षेत्रज्ञा इति तत्त्वमादिवचसः का भेदवादे क्षतिः॥ ३ ॥
तेष्वेको यदि जातु मातृवचनात् प्राप्तो निजं वैभवं
नान्येन क्षतिरस्य यत्किल परे सन्त्यन्यथा च स्थिताः ।
यद्वान्ये न भवेयुरेवमपि को लाभोऽस्य तद्वद्गतिः
पुंसामित्यभिदां भिदां च न वयं निर्बन्ध्य निश्चिन्महे ॥४॥ इति ॥२॥

तदिहापेक्षितमात्मज्ञानमुपदिश्यते। तच्च त्रिविधम्। श्रुतं मननं निदिध्यासनमिति। 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति श्रवणात् । तत्र श्रुतमुपनिषदादिशब्दजन्यज्ञानम् । मननमुपपत्तिभिर्निरूपणम् । एवं श्रुते मते चात्मनि साक्षात्कारहेतुरविक्षिप्तेन चेतसा निरन्तरं भावना निदिध्यासनम्। तत्रात्मसिद्धये श्रौतं ज्ञानं तावदाह—* **तत्रात्मलाभीयाञ्छ्लोकानुदाहरिष्यामः** ॥३॥ तत्रेति वाक्योपन्यासे। आत्मलाभीयानात्मलाभप्रयोजनान्। अनुप्रवचनादिषु दर्शनाच्छप्रत्ययः। श्लोकान् पादबद्धानौपनिषदान्। उदाहरिष्यामः उद्धृत्याहरिष्यामः ग्रन्थे निवेशयिष्याम ॥३॥ ***पूः प्राणिनः सर्व एव गुहाशयस्याहन्यमानस्य विकल्मषस्याचलं चलनिकेतं येऽनुतिष्ठन्ति तेऽमृताः॥ ४ ॥** गुहेति प्रकृतिनाम। 'यत्तत्स्मृतं कारणमप्रमेयं ब्रह्म प्रधानं प्रकृति-

प्रसूतिः। आत्मा गुहायां निरनाद्यनन्तः क्षेत्रं तथैवामृतमक्षरं च ॥' इति पुराणे दर्शनात्। पूः प्राणिनस्सर्व एव। तस्यां शेते तया सहाविभागमापन्नस्तिष्ठतीति गुहाशय आत्मा॥ 'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्। अजो ह्येको जुषमाणोऽनुशेते' इति च मन्त्रान्तरम्। अहन्यमानस्य न ह्यसौ शरीरे हन्यमाने हन्यते। त्रिकल्मषस्य निर्लेपस्य। सर्व एव हि धर्माधर्मादिरन्तःकरणस्य धर्मः, आत्मनि त्वध्यस्तः। एवंभूतस्यात्मनः सर्व एव प्राणिनः ब्रह्माद्यास्तिर्यगन्ताः प्राणादिमन्तः संघाताः। पूः पुरम् उपभोगस्थानम्। यथा राजा पुरमधिवसन् सचिवैरानीतान् भोगानुपभुङ्क्ते, तथायं देवादिशरीरमधिवसन् करणैरुपस्थापितान् भोगानुपभुङ्क्ते। तमेवंभूतमचलं सर्वगतत्वेन निश्चलम्। चलनिकेतं निकेत स्वस्थानं शरीरं तदस्य चलं तं येऽनुतिष्ठन्ति उपासते एवंभूतोऽहमिति प्रतिपद्यन्ते। तेऽमृताः मुक्ता भवन्तीति ॥ ४ ॥ विषयसङ्गत्यागेनायमुपास्य इत्याह—***यदिदमिदिहेदिह लोके विषयमुच्यते विधूय कविरेतदनुतिष्ठेद्गुहाशयम् ॥ ५ ॥** यदिद विषयमेतदिति सर्वत्र लिङ्गव्यत्ययश्छान्दसः। एवमितिशब्दे तकारस्य दकारः। हशब्द आश्चर्ये। इतिशब्देनावृत्तेन शब्दादिषु विषयेष्ववान्तरप्रकारभेदः प्रतिपाद्यते। विषयापहृतचेतसो हि वदन्ति 'इति ह तस्या गीत,मिति ह तस्याः सुखस्पर्श', इति ह तस्या रूपं निष्टप्तमिव कनक, इति ह तस्याः स्वादिष्ठोऽधरमणिः, इति ह तस्या गन्धो घ्राणतर्पण इति'। एवं दिव्यमानुषभेदोऽपि द्रष्टव्यः। इति ह इति ह। अत्रानन्तरमपर इतिशब्दोऽध्याहार्यः। इति ह इति हेति योऽयं लोके विषय उच्यते। सामान्यापेक्षमेकवचनम्। एतद्विधूय गुहाशयमनुतिष्ठेत्। कविर्मेधावी ॥ ६ ॥ विषयत्यागहेतुमाह—***आत्मन्नेवाहमलब्ध्वैतद्धितं सेवस्व नाहितम्। अथान्येषु प्रतीच्छामि साधुष्ठानमनपेक्षया। महान्तं तेजस्कायं सर्वत्र निहितं प्रभुम् ॥ ७ ॥** शिष्यं प्रत्याचार्यस्य वचनमेतत्। द्वौ चात्र हेतू। विषयाणां पराधीनत्वम(नभिमत)हितत्वं च। महान्तं गुण(वन्त)तः। तेजस्कायं तेजश्शरीरं तेजोराशिं स्वयंप्रकाशम्। 'आत्मज्योतिः सम्राडिति होवाचे'ति बृहदारण्यकम्। सर्वत्र निहितं सर्वत्र गतम्। प्रभु स्वतन्त्रम्। एवंभूतं गुहाशयं एतावन्तं का-

लं अहमात्मन् सप्तम्येकवचनस्य लुक् । आत्मनि । अस्मिन् मदीये संघाते अन्यानपेक्षयैव लब्धुं योग्यमलब्ध्वा अथान्येषु इन्द्रियादिषु तं तं विषयं प्रतीच्छामि । लङर्थे लट् । प्रत्यैच्छम् । इदानीं तु तं लब्ध्वा न तथाविधोऽस्मि । त्वमप्येतदेव हितं साधुष्ठानं साधुमार्गं सेवस्व नाहितं विषयानुधावनमिति ॥ ६ ॥ पुनरप्यसौ कीदृश इत्याह—*सर्वभूतेषु यो नित्यो विपश्चिदमृतो ध्रुवः । अनङ्गोऽशब्दोऽशरीरोऽस्पर्शश्च महाञ्छुचिः । स सर्वं परमा काष्ठा स वैषुवतं स वै वैभाजनं पुरम् ॥ ७ ॥ सर्वेषु भूतेषु मनुष्यादिषु संघातेषु यो नित्यः विनश्यत्स्वपि न नश्यति । विपश्चित् मेधावी चित्स्वरूपः । अमृतः नित्यत्वादेवामरणधर्मा । अत ध्रुवः एकरूपः विकाररहित । न प्रधानवद्विकारिणस्सतो धर्मिरूपेणास्य नित्यत्वमित्यर्थः । अङ्गः करचरणाद्यङ्गरहितः । अशब्दोऽस्पर्श इति भूतगुणानामुपलक्षणम् । शब्दादिगुणरहितः अशरीरः सूक्ष्मशरीरेणापि वर्जित । महाञ्छुचिः महत्त्वं शौचस्य विशेषणम् । परमार्थतोऽत्यन्तशुद्ध । स सर्व प्रकृत्यभेदद्वारेण । स एव परमा काष्ठा । ततः परं गन्तव्याभावात् । स वैषुवतं विषुवान्नाम गवामयनस्य मध्ये भवमहः । 'एकविंशमेतदहरुपयन्ति विषुवन्तं मध्ये संवत्सरस्ये'ति दर्शनात् । विषुवानेव वैषुवतम् । तद्यथा संवत्सरस्य मध्ये भवति एवमङ्गानामेष मध्ये । 'मध्यं ह्येषामङ्गानामात्मे'ति बह्वृचब्राह्मणम् । स एव च वैभाजनं पुरं विविधैर्भोगैर्भजनीयं विभजनम् । तदेव वैभाजनं प्रज्ञादिरनुशातिकादिश्च । यथा समृद्धं पुरं सर्वैरर्थिभिः प्राप्यमेवमयमपीति ॥ ७ ॥ *तं योऽनुतिष्ठेत्सर्वत्र प्राध्वं चास्य सदाचरेत् । दुर्दर्शं निपुणं युक्तो यः पश्येत्स मोदेत विष्टपे । इति ॥ ८ ॥ तमेवभूतमात्मानं योऽनुतिष्ठेदुपासीत यश्चास्य सर्वत्र सर्वास्ववस्थासु सदा प्राध्वमानुकूल्यमाचरेत् । आनुकूल्यं प्रतिषिद्धवर्जनं नित्यनैमित्तिककर्मानुष्ठानं च । यश्च दुर्दर्शं निपुणं सूक्ष्ममेतं युक्तः समाहितो भूत्वा पश्येत् साक्षात्कुर्यात् । सः विष्टपे विगततापे स्वे महिम्नि स्थितो मोदेत सर्वदुःखवर्जितो भवति । समारब्धशौया वा तिरोहित निरतिशयं स्वमानन्दमनुभवतीति ॥ ८ ॥

॥ इति द्वाविंशतितमी खण्डिका ॥ प्र० १ प० ८ ख० २२ ॥

*** आत्मन् पश्यन् सर्वभूतानि न मुह्येच्चिन्तयन्कविः । आत्मानं चैव सर्वत्र यः पश्येत्स वै ब्रह्मा नाकपृष्ठे विराजति ॥ १ ॥** सर्वाणि भूतानि आत्मन् आत्मनि शेषत्वेन स्थितानि पश्यन् उपनिषदादिभिर्जानन् । पश्चाच्चिन्तयन् युक्तिभिः निरूपयन् यो न मुह्येत् मध्ये मोहं न गच्छेत् । कविर्मेधावी । पश्चाच्च सर्वत्रैव शेषत्वेन स्थितमात्मनं पश्येत् साक्षात्कुर्यात् । स वै ब्रह्मा ब्राह्मणः नाकपृष्ठे तत्सदृशे स्वे महिम्नि स्थितो विराजति स्वयं प्रकाशते ॥ १ ॥ *** निपुणोऽणीयान् बिसोर्णाया यस्सर्वमावृत्य तिष्ठति । वर्षीयांश्च पृथिव्या ध्रुवः सर्वमारभ्य तिष्ठति । स इन्द्रियैर्जगतोऽस्य ज्ञानादन्योऽनन्यस्य ज्ञेयात्परमेष्ठी विभाजः । तस्मात्कायाः प्रभवन्ति सर्वे समूलं शाश्वतिकः स नित्यः ॥ २ ॥** निपुणो मेधावी चित्स्वरूपः । बिसोर्णायाः बिसतन्तोरप्यणीयान् सूक्ष्मः । यः सर्वमावृत्य व्याप्य तिष्ठति । यश्च पृथिव्या अपि वर्षीयान् प्रवृद्धतरः सर्वगत्वादेव सर्वमारभ्य विष्टभ्य शेषित्वेनाधिष्ठाय तिष्ठति । ध्रुवः एकरूपः । सः इन्द्रियैरस्य जगतो यदिन्द्रियैर्ज्ञानं इन्द्रियजन्यं ज्ञानं तस्मात् । कीदृशात् । अनन्यस्य ज्ञेयात् । पञ्चम्यर्थे षष्ठी ज्ञेया । ज्ञेयात् नीलपीतादेराकारादनन्यभूतं नीलपीताद्याकारं, तस्माद्विषयज्ञानादन्य इत्यर्थः । श्रूयते च 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमय' इति । 'ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः । तमेवार्थस्वरूपेण भ्रान्तिदर्शनतस्स्थितम्॥' इति पुराणम्। स्वभावस्वच्छस्य चिद्रूपस्यात्मनो नीलपीताद्याकारकालुष्यं तद्रूपाया बुद्धेरनुरागकृतं भ्रान्तमित्यर्थः । वैषयिकज्ञानादन्य इति विशेषणेन ज्ञानात्मक इत्यपि सिद्धम् । 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति श्रुतिः । एवंभूत आत्मा परमेष्ठी परम(श्वर)स्वरूपे तिष्ठति । विभाज इत्यस्य परेण सम्बन्धः । विभजत्यात्मानं देवमनुष्यादिरूपेण नानाशरीरानुप्रवेशेनेति विभाजः । तस्माद्विभाजो निमित्तभूतात् सर्वे कायाः देवमनुष्यशरीराणि भवन्ति उत्पद्यन्ते । स मूलं प्रपञ्चसृष्टेर्मोक्तृतया मूलं कारणम् । सः नित्यः अविनाशी । शाश्वतिकः एकरूपः अविकारः ॥ २ ॥ *** दोषाणां तु निर्घातो योगमूल इह जीविते । निर्हृत्य भूतदाहीयान् क्षेमं गच्छति पण्डितः ॥ ३ ॥** दोषाणां वक्ष्यमा-

णानां क्रोधादीनां निर्घातः निर्मूलनाशः । इह जीविते योगमूलः योगा व क्ष्यमाणाः अक्रोधादयः तन्मूलकः । अतश्च तान् भूतदाहीयान् भूतानि दहतः क्रोधादीन्दोषान् निर्हृत्य क्षेमं गच्छति आत्मध्यानद्वारेण । पण्डितो लब्धज्ञानः आत्मसाक्षात्कारी । क्षेमं अभयं मोक्षम् । 'अभयं वै जनक प्राप्तोसी' ति बृहदारण्यकम् ॥ समाप्ताः श्लोकाः ॥ ३ ॥ * **अथ भूतदाहीयान्दोषानुदाहरिष्यामः** ॥ ४ ॥ भूतानां दाहो भूतदाहः तस्मै हिता भूतदाहीयाः ॥ ४ ॥ * **क्रोधो हर्षो रोषो लोभो मोहो दम्भो द्रोहो मृषोद्यमत्याशपरीवादावसूया काममन्यू अनात्म्यमयोगस्तेषां योगमूलो निर्घातः** ॥ ५ ॥ ताडनादिहेतुकोऽन्तःकरणविक्षोभः स्वेदकम्पादिलिङ्गः क्रोधः । हर्षः इष्टलाभाच्चेतस उद्रेको रोमाञ्चादिलिङ्गः । रोषः क्रोधस्यैव कियानपि भेदः मात्रादिषु प्रतिकूलेषु मनसो वैलोम्यमात्रकार्यकरः । लोभो द्रव्यसङ्गमः । मोहः कार्याकार्ययोरविवेकः । स च प्रायेण क्रोधादिजन्योऽपि पृथगुपदिश्यते, कदाचित्तदभावेऽपि सम्भवेदिति । दम्भो धार्मिकत्वप्रदर्शनेन लोकवञ्चनम् । द्रोहोऽपकारः । मृषोद्यमनृतवादः । अत्याशोऽत्यशनम् । परीवादः परदोषाभिधानम् । असूया परगुणेष्वक्षमता । कामः स्त्रीसंसर्गः । मन्युः गूढो द्वेषः[1] । अनात्म्यं अजितेन्द्रियत्वं जिह्वाचापलगादि । अयोगो विक्षिप्तचित्तता । एते भूतदाहीया दोषाः । तेषां योगमूलो निर्घातः ॥ ५ ॥ के पुनस्ते योगास्तानाह—* **अक्रोधोऽहर्षोऽरोषोऽलोभोऽमोहोऽदम्भोऽद्रोहः सत्यवचनमनत्याशोऽपैशुनमनसूया संविभागस्त्याग आर्जवं मार्दवं शमो दमः सर्वभूतैरविरोधो योग आर्यमानृशंस्यं तुष्टिरिति सर्वाश्रमाणां समयपदानि तान्यनुतिष्ठन्विधिना सार्वगामी भवति** ॥ ६ ॥ एते चाक्रोधादयोऽपि भावरूपा । न क्रोधाद्यभावमात्रम् । क्रोधादीनां निर्घातहेतुतयोपदेशात् । के पुनस्ते—अलोभ सन्तोषोऽलंबुद्धिः ; अमोहोऽवधानम् । अदम्भो धर्मानुष्ठानम् । अनसूया परगुणेष्वभिमोदनम् । अद्रोहः पुनः प्रसक्तेष्वपि क्रोधादिषु माकार्षमिति सङ्कल्पः । सत्यवचनं

[1] 'श्रद्धा द्वेषः' इति पाठान्तरम् ।

यथादृष्टार्थवादित्वम् । संविभागः- आत्मानमवरुध्यापि दानम् । त्यागोऽपरिग्रहः । आर्जवं मनोवाक्कायानामेकरूपत्वम् । मार्दवं सूपगम्यता । शमः काममन्युपरित्यागः । दमः इन्द्रियजयः । एताभ्यामेव गतत्वात् अस्मिन् क्रमे अकामः अमन्युः आत्मवत्त्वमिति नोपदिष्टम् । सर्वभूतैरविरोधः । सर्वग्रहणं क्षुद्रैरविरोधार्थम् । योग ऐकात्म्यम् । आर्याणां भाव आर्यं शिष्टाचारानुपालनम् । आनृशंस्यं व्यवहारवचनादौ प्रसक्तस्यापि नैष्ठुर्यवर्जनम् । तुष्टिरनिर्वेदः । समयो व्यवस्था । सा च प्रकरणाद्धर्मज्ञानाम् । पदं विषयः । एते अक्रोधादयः सर्वेषामाश्रमाणां सेव्याः । न केवलं योगिनामेवेति धर्मज्ञानां समय इत्यर्थः । एते हि भाव्यमानाः क्रोधादीन् समूलघातं घ्नन्ति । अतश्च तान्यनुतिष्ठन् विधिना सार्वगामी भवति । तान्यक्रोधादीनि तुष्ट्यन्तानि । विधिना यथाशास्त्रम् । अनुतिष्ठन् सार्वगामी सर्वस्मै हितः आत्मानं गच्छति । 'विधिने'ति वचनात् 'प्राणिना तु वधो यत्र तत्र साक्ष्यनृतं वदेत् ।' इत्यादिके विषये अनृतवचनादावपि न दोष इति ॥ ६ ॥

इति त्रयोविंशतितमी खण्डिका ॥ प्र०१ प०८ ख०२३ ॥

---

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां प्रथमप्रश्ने अष्टमः पटलः ॥ ८ ॥

---

*क्षत्रियं हत्वा गवां सहस्रं वैरयातनार्थं दद्यात् ॥ १ ॥ क्षत्रियं हत्वा गवां सहस्रं ब्राह्मणेभ्यो दद्यात् । किमर्थं वैरयातनार्थं वैरं पापं तस्य यातनं निर्हरणं तदर्थम् । ऋषभश्चात्राधिकः सर्वत्र प्रायश्चित्तार्थ इति । तेन प्रायश्चित्तरूपमिदं दानम् । प्रायश्चित्तं च पापक्षयार्थं तत्किमर्थं वैरयातनार्थमित्युच्यते । केचिन्मन्यन्ते—नाभुक्तं क्षीयते पुण्यमपुण्यं च । प्रायश्चित्तं तु नैमित्तिकं कर्मान्तरं यथा गृहदाहादौ क्षामवत्यादय इति तान्निराकर्तुमिदमुक्तम् । अपर आह—यो येन हन्यते, स हतो म्रियमाणस्तस्मिन्वैरं करोति अपि नामाहमेनं जन्मान्तरेऽपि वध्यासमिति तस्य वैरस्य यातनार्थमिदमिति प्रायश्चित्तार्थत्वमपि वक्ष्यमाणेन सिद्धमिति ॥ १ ॥ *शतं वैश्ये ॥ २ ॥

वैश्ये हते गवां शतं दद्यात् ॥ २॥ *दश शूद्रे ॥ ३ ॥ शूद्रे हते दश दद्यात् । गौ इति प्रकरणाल्लभ्यते ॥ ३॥ *ऋषभश्चात्राधिकः सर्वत्र प्रायश्चित्तार्थः ॥ ४ ॥ सर्वेष्वेतेषु निमित्तेषु ऋषभोऽप्यधिको देयः । न केवलं गा एव । इदं प्रायश्चित्तत्रयं मानवेन समानविषयम् । यथाह—'अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः । ऋषभैकसहस्रां गां दद्याच्छुद्ध्यर्थमात्मनः ॥ त्र्यब्दं चरेद्वा नियतो जटी ब्रह्महणो व्रतम् । वसन् दूरतरे ग्रामाद्वृक्षमूलनिकेतनः ॥ एतदेव चरेदब्दं प्रायश्चित्तं द्विजोत्तमः । प्रमाप्य वैश्यं वृत्तस्थं दद्याद्वैकशतं गवाम् ॥ एतदेव व्रतं कृत्स्नं षण्मासांश्छूद्रहा चरेत् । ऋषभैकादशा वापि दद्याद्विप्राय गाः सिताः ॥' इति ॥ ४ ॥*स्त्रीषु चैतेषामेवम् ॥ ५ ॥ एतेषां क्षत्रियादीनां स्त्रीषु च हतासु एवमेव प्रायश्चित्तं यथा पुरुषेषु ॥५॥*पूर्वयोर्वर्णयोर्वेदाध्यायं हत्वा सवनगतं वाभिशस्तः ॥ ६ ॥ प्रकृतेषु यो पूर्वौ वर्णौ क्षत्रियवैश्यौ तयोर्यो वेदाध्यायः अधीतवेदः तं हत्वा अभिशस्तो भवति । अभिशस्त इति ब्रह्मघ्नोऽभिधानम् सवनगतं वा । तयोरेव वर्णयोः यः सवनगतः सवनशब्देन प्रातस्सवनादीन्युच्यन्ते । नापि यागमात्रम् । किं तर्हि सोमयागः । तत्र यो दीक्षितः सवनगतः । 'ब्राह्मणो वा एष जायते यो दीक्षित' इति दर्शनात् । तं च हत्वाभिशस्तो भवति । पूर्वयोर्वर्णयोरिति किम् । ब्राह्मणे माभूत् । इष्यते ब्राह्मणे वक्ष्यति च ब्राह्मणमात्रं चेति । एवं तर्हि शूद्रे माभूत् । न शूद्रो वेदाध्यायः सवनगतो वा भवति । इदं तर्हि प्रयोजनं पूर्वयोर्वर्णयोरेव यथा स्यात्तयोरेव यावनुलोमौ सवर्णाम्बष्ठौ तयोर्माभूदिति । तेनान्ये वर्णधर्मा अनुलोमानामपि भवन्ति ॥ ६ ॥ *ब्राह्मणमात्रं च ॥ ७॥ हत्वाभिशस्तो भवति । मात्रग्रहणान्नाभिजनविद्यासंस्काराद्यपेक्षा ॥ ७ ॥ *गर्भं च तस्याविज्ञातम् ॥ ८ ॥ तस्य ब्राह्मणमात्रस्य । गर्भं च स्त्रीपुन्नपुंसकभेदेनाविज्ञातम् । हत्वाभिशस्तो भवति ॥ ८ ॥ *आत्रेयीं च स्त्रियम् ॥ ९ ॥ ऋतुस्नातामात्रेयीमाहुरिति वसिष्ठः । तस्येति वर्तते । आत्रेयीं च ब्राह्मणस्त्रियं हत्वा ब्रह्महा भवति । सम्भवत्यस्यां ब्राह्मणगर्भ इति । अत्रिगोत्रजा आत्रेयीत्यन्ये ॥ ९॥ *तस्य निर्वेषः ॥ १० ॥ तस्य सर्वप्रकारस्याभिशस्तस्य नि-

वैषः प्रायश्चित्तं वक्ष्यते ॥ १० ॥ ***आरण्यके कुटिं कृत्वा वाग्यतः शवशिरध्वजोऽर्धशाणीपक्षमधोनाभ्युपरिजान्वाच्छाद्य ॥ ११ ॥** कृत्वेति वचनान्न परकृता कुटी ग्राह्या। वाग्यता नियता येन स वाग्यतः वाचंयमः। आहिताग्न्यादिषु दर्शनात् निष्ठान्तस्य परनिपातः। शवशिरः ध्वजो यस्य स शवशिरोध्वजः। सकारलोपश्छान्दसः। स्वव्यापादितस्य शिरो ध्वजदण्डाग्रे प्रोतं कृत्वेत्यर्थः। यस्यकस्यचिच्छवस्येत्यन्ये। शणस्य विकारः शाणी पटी तस्या अर्धमर्धशाणी तस्याः पक्षमर्धशाणीपक्षं आयामविस्तारयोरुभयोरप्यर्धम्। अधोनाभि उपरिजानु च यथा भवति तथा तावन्तं प्रदेशमाच्छाद्य। सापेक्षत्वात् 'ग्रामे प्रतिष्ठेते'ति वक्ष्यमाणेन सम्बन्धः। मध्ये क्रियान्तरविधिः ॥ ११ ॥ ***तस्य पन्था अन्तरा वर्त्मनि ॥ १२ ॥** तस्य ग्रामं प्रविशतः वर्त्मनी अन्तरा शकटादेर्वर्त्मनोर्मध्ये पन्था वेदितव्यः। अपर आह—यत्र रथ्यादौ उभयोः पार्श्वयोर्वर्त्मनी भवतः तत्र तयोर्मध्ये सूकरादिपथेन सञ्चरेतेति ॥ १२ ॥ ***दृष्ट्वा चान्यमुत्क्रामेत् ॥ १३ ॥** अन्यमार्यं दृष्ट्वा पथ उत्क्रामेत्। तत्र कौटिल्यः 'पञ्चारत्नी रथपथश्चत्वारो हस्तिपथः द्वौ क्षुद्रपशुमनुष्याणा'मिति। तेन मनुष्येषु द्वौ हस्तावुत्क्रामेदिति ॥ १३ ॥ ***खण्डेन लोहितकेन शरावेण ग्रामे प्रतिष्ठेत ॥ १४ ॥** खर्परमात्रं खण्डम्। लोहितं मनागरक्तताम्रम्। एवम्भूतं शरावं भिक्षापात्रं गृहीत्वा ग्रामे प्रतिष्ठेत ग्रामं गच्छेत् ॥ १४ ॥ ***कोऽभिशस्ताय भिक्षामिति सप्तागाराणि चरेत् ॥ १५ ॥** अभिशस्तो ब्रह्महा। तस्मै मह्यं को धार्मिको भिक्षां ददातीति उच्चैर्ब्रुवाणः सप्तागाराणि चरेत्। सप्तग्रहणमधिकनिवृत्त्यर्थम्। द्वित्रेष्वेवागारेषु यदि पर्याप्तं लभ्यते तदा निवर्तेत ॥ १५ ॥ ***सा वृत्तिः ॥ १६ ॥** सप्तस्वगारेषु या च यावती लभ्यते सैव वृत्तिः अपर्याप्तापि ॥ १६ ॥ ***अलब्ध्वोपवासः ॥ १७ ॥** यदि सप्तागारेषु न किञ्चिल्लभ्यते तदोपवास एव तस्मिन्नहनि ॥ १७ ॥ ***गाश्च रक्षेत् ॥ १८ ॥** एवं प्रायश्चित्तं कुर्वन्नहरहर्गाश्च रक्षेत् ॥ १८ ॥ ***तासां निष्क्रमणप्रवेशने द्वितीयो ग्रामेऽर्थः ॥ १९ ॥** तासां गवां निष्क्रमणसमये प्रवेशनसमये च द्वितीयो ग्रामेऽर्थः। अर्थः प्रयोजनम्। भिक्षार्थं प्रथममुक्तम्। नान्यदा

ग्रामं प्रविशेदित्युक्तं भवति ॥१९॥ *द्वादशवर्षाणि व्रतमेतच्चरित्वा सिद्धः सद्भिः सम्प्रयोगः ॥ २० ॥ एवं द्वादशवर्षाणि व्रतमेतच्चरित्वा सद्भिः सम्प्रयोगः कर्तव्यः । सद्भिः सम्प्रयुज्यते येन विधिना स कर्तव्यः। स शिष्टाचारे शास्त्रान्तरे च सिद्धः उच्यते—कृतप्रायश्चित्तः स्वहस्ते यवसं गृहीत्वा गामाह्वयेत् । सा यद्यागत्य श्रद्दधाना भक्षयति तदा सम्यगनेन व्रतं चरितमिति जानीयात् । अन्यथा नेति ॥२०॥ *आजिपथे वा कुटिं कृत्वा ब्राह्मणगव्योऽपजिगीषमाणो वसेत्त्रिः प्रतिराद्धोऽपजित्य वा मुक्तः ॥ २१ ॥ सङ्ग्रामेण जेतव्या दस्यवो येन पथा ग्रामं प्रविश्य गवादिकमपहृत्यापसरन्ति स आजिपथः । तस्मिन्वा कुटिं कृत्वा वसेत् । किं चिकीर्षन् । ब्राह्मणगव्यः 'वा छन्दसी'ति पूर्वसवर्णाभावे यणादेशः ब्राह्मणगवीः । अपजिगीषमाणः दस्यूनपजित्य प्रत्याहर्तुमिच्छन् । एवं वसन् दस्युभिर्ह्रियमाणं गवादिकमुद्दिश्य तैर्युद्धं कुर्वन् त्रिः प्रतिराद्धः तैरपजितः अपजित्य वा तान् गवादिकं प्रत्याहृत्य ब्राह्मणेभ्यो दत्वा मुक्तो भवति तस्मादेनसः । द्वादशवार्षिके प्रवृत्तस्येदम् । एवमुत्तरमपि ॥२१॥ *आश्वमेधिकं वावभृथमवेत्य मुच्यते ॥ २२ ॥ अथ वाश्वमेधावभृथे स्नात्वा मुच्यते ॥ २२ ॥ *धर्मार्थसन्निपातेऽर्थग्राहिण एतदेव ॥ २३ ॥ धर्मस्याग्निहोत्रादेरर्थस्य च युगपद्यत्र सन्निपातः तत्रोभयानुग्रहासम्भवे धर्मलोपेन योऽर्थं गृह्णाति तस्याप्येतदेव प्रायश्चित्तम् । अथवा धर्मं हित्वार्थहेतोः कौटसाक्ष्यादि करोति तद्विषयमेतत् । अत्र गौतमः—'कौटसाक्ष्यं राजगामि पैशुनं गुरोरनृताभिशंसनं महापातकसमानी'ति । मनुरपि—'अनृतं च समुत्कर्षे राजगामि च पैशुनम् । गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया' ॥ इति ॥ २३ ॥ *गुरुं हत्वा श्रोत्रियं वा कर्मसमाप्तमेतेनैव विधिनोत्तमादुच्छ्वासाच्चरेत् ॥ २४ ॥ गुरुः पित्राचार्यादिः । श्रोत्रियोऽधीतवेदः । स यदि कर्मसमाप्तो भवति सोमान्तानि कर्माणि समाप्तानि यस्य स कर्मसमाप्तः । तौ हत्वा एतेनैवानन्तरोक्तविधिना आोत्तमादुच्छ्वासात् उत्तम उच्छ्वासः प्राणवियोगः । आ तस्माच्चरेत् ॥ २४ ॥ *नास्यास्मिल्लोँके प्रत्यापत्तिर्विद्यते कल्मषं तु निर्हण्यते ॥ २५ ॥ अश्वमेधावभृथादिषु सम्भवत्स्वपि अस्या-

स्मिँल्लोके जीविते प्रत्यापत्तिः शुद्धिर्नास्तीत्यर्थः । कल्मषं तु निर्हण्यते । तस्य पुत्रादिभिः संस्कारादिः कर्तव्य इति भावः । अन्ये तु पूर्वं सूत्रं तन्निवृत्त्यर्थं मन्यन्ते । प्रत्यापत्तिः पुत्रादिभिः पित्रादिभावेन सम्बन्ध इति ।२९।

॥ इति चतुर्विंशतितमी खण्डिका ॥ प्र० १ प० ९ ख० २४ ॥

---

* **गुरुतल्पगामी सवृषणं शिश्नं परिवास्याञ्जलावाधाय दक्षिण दिशमनावृत्तिं व्रजेत्** ॥ १ ॥ गुरुरत्र पिता । नाचार्यादिः । तल्पशब्देन शयनवाचिना भार्या लक्ष्यते । सा च साक्षाज्जननी । न तत्पत्नी । तां गत्वा सवृषणं साण्ड शिश्नं परिवास्य क्षुरादिना छित्वाञ्जलावाधाय दक्षिणां दिशं व्रजेत् । अनावृत्तिम् आवृत्तिर्न क्रियते यस्या तां दिशमनादर्तमानो गच्छेदिति । अत्र ये दक्षिणस्योदधेस्तीरे वसन्ति तेऽपि यावद्देशं गत्वा उदधिमेव प्रवेशयन्ति । मरणं ह्यत्र विवक्षितम् । अत्र सवर्तः—'पितृदारं समारुह्य मातृवर्ज नराधम. । भगिनीं मातुराप्तां वा स्वसारं चान्यमातृजाम् ॥ एता गत्वा स्त्रियो मोहात् तप्तकृच्छ्रान् समाचरेत् ।' इति । नारदस्तु—'माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा । पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा ॥ दुहिताचार्यभार्या च सगोत्रा शरणागता । राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या ॥ आसामन्यतमां गत्वा गुरुतल्पग उच्यते । शिश्नस्योत्कर्तनं तत्र नान्यो दण्डो विधीयते ॥' इति ॥ १ ॥

* **ज्वलितां वा सूर्मिं परिष्वज्य समाप्नुयात्** ॥ २ ॥ आयसी ताम्रमयी वा अन्तस्सुषिरा स्त्रीप्रतिकृतिरत्र सूर्मिः । तां ज्वलितामग्नौ तप्ताम् । परिष्वज्य । समाप्नुयात समाप्तिं गच्छेत् म्रियेत ॥ २ ॥ * **सुरापोऽग्निस्पर्शां सुरां पिबेत्** ॥ ३ ॥ 'गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ।' तस्याः पाता सुरापः । अग्निस्पर्शां अग्निक्वथितां सुरां पिबेत् । तया दग्धकाय. शुद्ध्यति ॥ ३ ॥ * **स्तेनः प्रकीर्णकेशोंऽसे मुसलमाधाय राजानं गत्वा कर्माचक्षीत । तेनैनं हन्याद्वधे मोक्षः** ॥ ४ ॥ स्तेनो ब्राह्मणः स्वर्णहारी । अंसे स्वे स्कन्धे । मुसलमाधाय आयसं खादिरं वाधाय । राजानं गत्वा कर्माचक्षीत एवंकर्मास्मि शाधि मामिति । स तेन मु-

सलेन एनं स्तेनं हन्यात् । यथा मृतो भवति । वधे सति स्तेनस्य मोक्षो मुक्तिर्भवत्येनसो नान्यथेति ॥४॥ * अनुज्ञातेऽनुज्ञातारमेनः स्पृशति ॥५॥ यदि राजा दयादिना तमनुजानीयात् गच्छेति, तदा तमनुज्ञातारं राजानमेवं तदेनः स्पृशति ॥५॥ * अग्निं वा प्रविशेत् ॥६॥ गतम् ॥६॥ * तीक्ष्णं वा तप आयच्छेत् ॥७॥ तीक्ष्णं तपः महापराकादि । तद्वा आयच्छेत् आवर्तयेत् ॥७॥ * भक्तापचयेन वात्मानं समाप्नुयात् ॥८॥ भक्तमन्नम् । तस्यापचयो ह्रासः । प्रथमे दिने यावन्तो ग्रासाः ते एकेन न्यूना द्वितीये । एवं तृतीयादिष्वपि । अ एकस्माद्ग्रासात् । तत्रापि यदि न समाप्तिः ततस्तत्रैव परिमाणापचयः कर्तव्यः । एवं भक्तापचयेनात्मानं समाप्नुयात् समापयेत् ॥८॥ * कृच्छ्रसंवत्सरं वा चरेत् ॥९॥ अथवा संवत्सरमेकं नैरन्तर्येण कृच्छ्रांश्चरेत् । एषामेनस्सु गुरुषु गुरूणि लघुषु लघूनीति व्यवस्था ॥९॥ * अथाप्युदाहरन्ति ॥१०॥ अस्मिन्नेव विषये पुराणश्लोकमप्युदाहरन्तीत्यर्थः ॥१०॥ * स्तेयं कृत्वा सुरां पीत्वा गुरुदारं च गत्वा ब्रह्महत्यामकृत्वा । चतुर्थकाला मितभोजिनः स्युरपोऽभ्युपेयुः सवनानुकल्पम् । स्थानासनाभ्यां विहरन्त एते त्रिभिर्वर्षैरपपापं नुदन्ते ॥११॥ ब्रह्महत्याव्यतिरिक्तानि स्तेयादीनि कृत्वा चतुर्थकालाश्चतुर्थो भोजनकालो येषाम् । यथा अद्य दिवा भुङ्क्ते श्वो नक्तमिति । तथोक्ताः । तथापि मितभोजिनः न मिष्टाशिनः । अपोऽभ्युपेयुः भूमिगतास्वप्सु स्नानं कुर्युः । सवनानुकल्पं यथा सवनानि प्रातस्सवनादीन्यनुकल्प्यानि अनुसृतानि भवन्ति तथा त्रिषवणमित्यर्थः । तिष्ठेयुरहनि रात्रावासीरन् । एवं स्थानासनाभ्यां विहरन्तः कालक्षेपं कुर्वन्तः । एते त्रिभिर्वर्षैस्तत्पापमपनुदन्ते ॥११॥ * प्रथमं वर्णं परिहाप्य प्रथमं वर्णं हत्वा सङ्ग्रामं गत्वावतिष्ठेत् तत्रैनं हन्युः ॥१२॥ प्रथमो वर्णो ब्राह्मणः । तं हत्वा सङ्ग्रामं गत्वा सेनयोर्मध्येऽवतिष्ठेत । किम्भूतं सेन्याह—प्रथमं वर्णं परिहाप्य ब्राह्मणवर्जमितरो वर्णः क्षत्रियादिरित्यर्थः । तत्र स्थितमेनं ते सैनिका हन्युः त एनं हतं विदध्युः । अघ्नन्त एनस्विनः स्युः । यथा राजा स्तेनम् । स मृतः शुद्ध्यति ॥१२॥ * अपि वा लोमानि त्वचं मांसमिति हाव-

यित्वाग्निं प्रविशेत् ॥ १३ ॥ अनन्तरोक्त एव विषये प्रायश्चित्तान्तरम् । इति शब्द उपलक्षणार्थः । आत्मनो लोमादीन्युत्कृत्य, पुरोहितेन हावयित्वा होमं कारयित्वा स्वयं तस्मिन्नग्नौ प्रविशेत् मृतः शुद्ध्यति । तत्राग्निमुपसमाधाय जुहुयात् 'लोमानि मृत्योर्जुहोमि लोमभिः मृत्युं वासयते स्वाहा, त्वचं मृत्योर्जुहोमि त्वचा मृत्युं वायवे स्वाहा, लोहितं मृत्योः, स्नाय्वादीनि मृत्योः, मांसानि मृत्योः, अस्थीनि मृत्योः, मज्जा मृत्योः, मेदो मृत्योर्जुहोमि मेदसा मृत्युं वायवे स्वाहा' इत्येते मन्त्राः वसिष्ठेन पठिताः ॥ १३ ॥ *वायसप्रचलाकबर्हिणचक्रवाकहंसभासमण्डूकनकुलडेरिकाश्वहिंसायां शूद्रवत्प्रायश्चित्तम् ॥ १४ ॥ वायसः काकः । प्रचलाकः कामरूपी कृकलासः । बर्हिणो मयूरः । चक्रवाको दिवमिथुनचरः रात्रौ विरही । हंसो मानसवासी । भासो गृध्रविशेषः । नकुलमण्डूकादयः प्रसिद्धाः । डेरिका गन्धमूषिका । एतेषां समुदितानां वधे शूद्रवत्प्रायश्चित्तम् । प्रत्येकं वधे तु कल्प्यम् । केचित् प्रत्येकं वध एतदित्याहुः ॥ १४ ॥

॥ इति पञ्चविंशतितमी खण्डिका ॥ प्र० १ प० ९ ख० २५ ॥

---

*धेन्वनडुहोश्चाकारणात् ॥ १ ॥ धेनुः पयस्विनी गौः । अनड्वान् अनोवहनयोग्यो बलीवर्दः । तयोः कारणमन्तरेण हिंसायां शूद्रवत्प्रायश्चित्तं कर्तव्यम् । कारणं कोपो मांसेच्छा वा । ताभ्यां विना अबुद्धिपूर्वमित्यर्थः । बुद्धिपूर्वं तु 'गाश्च वैश्यव'दित्यादि स्मृत्यन्तरे द्रष्टव्यम् ॥ १ ॥ *धुर्यवाहप्रवृत्तौ चेतरेषां प्राणिनाम् ॥ २ ॥ धुरं वहतीति धुर्यो बलीवर्दः । तेन वोढुं शक्या धुर्यवाहाः । तावत्सु हिंसायां प्रवृत्तौ सत्याम् 'इतरेषां प्राणिनां केवलं प्राणा एव येषां नास्थीनि तेषां हिंसायां शूद्रवत्प्रायश्चित्तमिति' । अत्र गौतमः—'अस्थन्वतां सहस्रं हत्वा अनस्थिमतामनडुद्भारं चे'ति ॥ २ ॥ *अनाक्रोश्यमाक्रुश्यानृतं वोक्त्वा त्रिरात्रमक्षीराक्षारलवणभोजनम् ॥ ३ ॥ येन यो न कथञ्चनाक्रोशमर्हति स पित्राचार्यादिरनाक्रोश्यः । तमाक्रुश्य । अनृतं वोक्त्वा पातकोपपातकवर्जं, त्रिरात्रं क्षीरादि भोजने वर्जयेत्

---

१. अत्र सर्वत्र 'वमवे स्वाहा' इति पाठान्तरम् ।

क्षीरग्रहणेन तद्विकाराणां दध्यादीनामपि ग्रहणमित्याहुः ॥ ३ ॥ *शूद्रस्य सप्तरात्रमभोजनम् ॥ ४ ॥ शूद्रस्त्वेनन्तरोक्तविषये सप्तरात्रमुपवसेत् ॥४॥ *स्त्रीणां चैवम् ॥ ५ ॥ क्षात्रियं हत्वेत्यादिषु अनृतवचनान्तेषु निमित्तेषु यानि प्रायश्चित्तान्युक्तानि तानि स्त्रीणामप्येवमेव कर्तव्यानि । एत'च्चत्वारो वर्णा' इति जात्यभिधानादेव प्राप्तं सन्नियमार्थमुच्यते । अत ऊर्ध्वं पुरुषस्यैवं न स्त्रीणामिति । अपर आह—'जात्यभिधानादेव सिद्धे अतिदेशार्थं वचनम् । अतिदेशेषु चार्धं प्राप्यत इति स्मार्तो न्यायः । तेन स्त्रीणामर्धप्राप्त्यर्थं वचन'मिति । तथा च भार्गवः—'अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः । प्रायश्चित्तार्धमर्हन्ति स्त्रियो व्याधित एव च ॥' इति ॥ ५ ॥ *येष्वाभिशस्त्यं तेषामेकाङ्गं छित्वाप्राणहिंसायाम् ॥ ६ ॥ येषु हतेषु 'सवनगतं वाभिशस्त' इत्यादिना अभिशस्तत्वमुक्तं तेषामेकाङ्गं छित्वा शूद्रवत्प्रायश्चित्तं कुर्यात् । अप्राणहिंसायां यदि छेदनेन तस्याङ्गस्य शक्तिर्न हन्यते ॥ ६ ॥ *अनार्यपैशुनप्रतिषिद्धाचारेष्वभक्ष्याभोज्यापेयप्राशने शूद्रायां च रेतस्सिक्त्वा योनौ च दोषवच्च कर्माभिसन्धिपूर्वं कृत्वानभिसन्धिपूर्वं वाब्लिङ्गाभिरप उपस्पृशेद्वारुणीभिर्वान्यैर्वा पवित्रमन्त्रैर्यथा कर्माभ्यासः ॥ ७ ॥ आर्याणां भाव आर्यम् । तद्यस्मिन्नाचारेऽस्ति तदार्यवत् । मत्वर्थीयो वप्रत्ययः । ततोऽन्यदनार्यवम् असत्य(भ्य)-भाषणादि । पैशुनं परदोषकथन राजगामि । प्रतिषिद्धाचारः 'ष्ठेवनमैथुनयोः कर्माप्सु वर्जये'दित्यादेरनुष्ठानम् । अभक्ष्यं लशुनकृसरादि । अभोज्यं केशकीटाद्युपहतम् । अपेयम् अनिर्दशाया गोः क्षीरादि । एतेषां प्राशने । शूद्रायां च वैश्याप्रभृतौ रेतः सिक्त्वा । अयोनौ च जलादौ रेतः सिक्त्वा । दोषवच्च कर्म श्यैनमाभिचारिकम् । अभिसन्धिपूर्वं बुद्धिपूर्वं कृत्वा । अनभिसन्धिपूर्वं वा परपीडादिकरं कर्म कृत्वा । अब्लिङ्गाभिः 'आपो हि ष्ठा मयोभुव' इति तिसृभिः 'हिरण्यवर्णाश्शुचयः पावका' इति चतसृभिः अप उपस्पृशेत् । तूष्णीं प्रथमं स्नात्वा पश्चादेतैर्मन्त्रैर्मार्जनं कुर्यात् । वारुणीभिर्वा 'इमं मे वरुण तत्त्वा यामि त्वन्नो अग्ने' इत्येताभिरन्यैर्वा पवित्रैः 'पवमानस्सुवर्जन' इत्येतेनानुवाकेन शुद्धवतीभिस्तरत्समन्दीयेन च । यथा कर्माभ्या-

सः कृतः तथा उपस्पृशेत् । अभ्यासेन रहस्यप्रायश्चित्तमेतदित्याहुः ॥७॥ ***गर्दभेनावकीर्णी निर्ऋतिं पाकयज्ञेन यजेत** ॥८॥ यो ब्रह्मचारी स्त्रियमुपेयात् सः अवकीर्णी । गर्दभेन निर्ऋतिं यजेत । पाकयज्ञेन स्थालीपाकविधानेन । अत्र मनुः —'अवकीर्णी तु काणेन गर्दभेन चतुष्पथे । पाकयज्ञविधानेन यजेन्निर्ऋतिं निशि ॥' इति । हारीतस्तु—"स्त्रीष्ववकीर्णी निर्ऋत्यै चतुष्पथे गर्दभं पशुमालभेत पाकयज्ञधर्मेण भूमौ पशुपुरोडाशश्रपणमवदाने प्रचार्याज्यस्य जुहोति 'कामावकीर्णोऽस्म्यवकीर्णोऽस्मि कामकामाय स्वाहा कामाभिद्रुग्धोऽस्म्यभिद्रुग्धोऽस्मि कामकामाय स्वाहा" इति ॥ ८ ॥ ***तस्य शूद्रः प्राश्नीयात्** ॥९ ॥ तस्य गर्दभस्य सर्पिष्मद्धविः शिष्टं शूद्रः प्राश्नीयात् । 'तेन सर्पिष्मता ब्राह्मण'मित्यस्यापवादः ॥९॥ ***मिथ्याधीतप्रायश्चित्तम्** ॥ १० ॥ नियमातिक्रमेणाधीतं मिथ्याधीतम् । तद्दोषनिर्हरणप्रायश्चित्तं वक्ष्यते ॥ १० ॥ ***संवत्सरमाचार्यहिते वर्तमानो वाचं यच्छेत्स्वाध्याय एवोत्सृजमानो वाचमाचार्य आचार्यदारे वा भिक्षाचर्ये च** ॥ ११ ॥ आचार्यहिते वर्तमानो भूत्वा संवत्सरं वाचंयमः स्यात् । स्वाध्यायादिष्वेव वाचमुत्सृजमानः आचार्ये तं प्रति कार्यनिवेदने । एवमाचार्यदारे भिक्षाचर्ये भिक्षाचरणे तत्र च 'भवति भिक्षां देही'ति । अस्मादेव ज्ञायते असमावृत्तविषयमेतदिति ॥ ११ ॥ ***एवमन्येष्वपि दोषवत्स्वपतनीयेषूत्तराणि यानि वक्ष्यामः** ॥ १२ ॥ यथा मिथ्याधीतस्येदं प्रायश्चित्तमेवमुत्तराणि यानि प्रायश्चित्तानि वक्ष्यामः तान्यन्येषु च अपिशब्दान्मिथ्याधीतेऽपि । दोषवत्स्वपतनीयेषु पतनीयव्यतिरिक्तेषु कर्मसु येष्वाहत्य प्रायश्चित्तं नोक्तं तद्विषयाणि द्रष्टव्यानि ॥ १२ ॥ ***काममन्युभ्यां वा जुहुयात्कामोऽकार्षीन्मन्युरकार्षीदिति** ॥ १३ ॥ स्वाहाकारान्ताभ्यां होमः । आज्यं द्रव्यम् ॥ १३ ॥ ***जपेद्वा** ॥ १४ ॥ अस्मिन् पक्षे न स्वाहाकारः । केचित्तु कामाय स्वाहा मन्यवे स्वाहेति होममिच्छन्ति । जपपक्षे तु सूत्रोपदिष्टौ मन्त्राविति । दोषाभ्यासानुरूपं जपहोमयोरावृत्तिः ॥ १४ ॥ ***पर्वणि वा तिलभक्ष उपोष्य वा श्वोभूत उदकमुपस्पृश्य सावित्रीं प्राणायामशस्सहस्रकृत्व आवर्तयेदप्राणायामशो वा**

॥१५॥ पर्वणि पौर्णमास्याममावास्यायां वा । तिलानेव भक्षयति नान्यदो दनादिकमिति तिलभक्षः । उदकमुपस्पृश्य स्नात्वा सावित्रीं प्राणायामशः प्राणायामेन एकस्मिन्प्राणायामे यावत्कृत्वा आवर्तयितुं शक्यं तत्र तावत्कृत्वा आवर्तयेत् । एवमा सहस्रपूर्तेः प्राणायामावृत्तिः । अप्राणायामशो वा जपकाले प्राणानायच्छेत् तूष्णीं जपेद्वेति ॥ १६ ॥

॥ इति षड्विंशतितमी खण्डिका ॥ प्र०१ प०९ ख०२६ ॥

---

*श्रावण्यां पौर्णमास्यां तिलभक्ष उपोष्य श्वो वा भूते महानदमुदकमुपस्पृश्य सावित्र्याः समित्सहस्रमादध्याज्जपेद्वा ॥ १ ॥ गिरिप्रभवा समुद्रगामिनी नदी महानदी तत्र भवं महानदम् । समित्सहस्रं याज्ञिकस्य वृक्षस्य । 'आदध्या'दिति वचनान्न होमधर्मः स्वाहाकारः ॥१॥ *इष्टियज्ञक्रतून्वा पवित्रार्थानाहरेत् ॥ २ ॥ पवित्रार्थाः शुद्ध्यर्थाः मृगाराद्या इष्टयः । यज्ञाः क्रतवः सोमयागाः अग्निष्टोमादयः । तान्येतानि षट् प्रायश्चित्तानि । एनस्सु गुरुषु गुरूणि लघुषु लघूनि ॥ २ ॥ *अभोज्यं भुक्त्वा नैष्पुरीष्यम् ॥ ३ ॥ अभोज्यस्य मार्जारादिमांसस्य भक्षणे निष्पुरीषभावः कर्तव्यः । यावदुदरं निष्पुरीषं भवति तावदुपवस्तव्यम् ॥ ३ ॥ तत्कियता कालेनावाप्यते तदाह—*तत्सप्तरात्रेणावाप्यते ॥ ४ ॥ सप्तरात्रमुपवसेदित्येव सिद्धे नैष्पुरीष्यवचनाद्येषां त्रिरात्रेणैवं तदवाप्यते तेषां तावतैव शुद्धिः । तथा च गौतमः—'अभोज्यभोजने नैष्पुरीषभावः त्रिरात्रावरमभोजनं सप्तरात्रं वे'ति ॥ ४ ॥ *हेमन्तशिशिरयोर्वोभयोस्सन्ध्योरुदकमुपस्पृशेत् ॥५॥ उभयोः सन्ध्ययोः सायं प्रातश्च । उदकमुपस्पृशेत् भूमिगतमप्स्वप्सु स्नायात् । उद्धृताभिर्वा शीताभिः ॥ ५ ॥ *कृच्छ्रद्वादशरात्रं वा चरेत् ॥६॥ द्वादशरात्रसाध्यो व्रतविशेषः कृच्छ्रद्वादशरात्रः॥६॥ तस्य विधिमाह—*त्र्यहमनक्ताश्यदिवाशी ततस्त्र्यहं त्र्यहमयाचितव्रतस्त्र्यहं नाश्नाति किञ्चनेति कृच्छ्रद्वादशरात्रस्य विधिः ॥७॥ आदितस्त्रिष्वहस्सु नक्तं नाश्नीयात् । दिवैव भुञ्जीत । ततस्त्र्यहमदिवाशी-रात्रावेव भुञ्जीत । न दिवा । ततस्त्र्यहमयाचितमेव भुञ्जीत । याच्ञाप्रतिषे-

घोऽयम् । तेन स्वद्रव्यस्याप्रतिषेधः'। तथा च गौतमः—'त्र्यहं न किंचन याचे'दिति। ततस्त्र्यहं नाश्नाति गिञ्छन् फलादिकमपीति। एवं कृच्छ्रद्वादशरात्रस्य विधिः । तत्र स्मृत्यन्तरवशाद्धविष्यमन्नं ब्रह्मचर्यं स्त्रीशूद्रादिभिरसम्भाषणं च ॥ ७ ॥ * एतमेवाभ्यस्येत्संवत्सरं स कृच्छ्रसंवत्सरः ॥ ८॥ एतमेव व्रत संवत्सरं निरन्तरमभ्यस्येत् । स एष कृच्छ्रसंवत्सरो वेदितव्यः । यः पूर्वोक्तः 'कृच्छ्रसंवत्सरं वा चरे' दिति ॥ ८ ॥ * अथापरं बहून्यप्यपतनीयानि कृत्वा त्रिभिरनश्नत्पारायणैः कृतप्रायश्चित्तो भवति ॥ ९ ॥ अथापरं प्रायश्चित्तमुच्यते । अनश्नन्नेव निरन्तरं त्रीणि पारायणानि कर्तव्यानि। आदित आरभ्याऽऽसमाप्तेर्वेदस्याध्ययनं पारायणम् । बहून्यपि प्रापिशब्दात्किं पुनरेकं द्वे वा ॥९॥ * अनार्यां शयने बिभ्रद्ददद्वृद्धिं कषायपः। अब्राह्मण इव वन्दित्वा तृणेष्वासीत पृष्ठतप् ॥ १०॥ अनार्या शूद्रा शयने बिभ्रत् उपगच्छन् । ददद्वृद्धिं वृद्ध्यर्थं द्रव्यं ददत् । वृद्ध्याजीव इत्यर्थः । सुराव्यतिरिक्तं मद्यं कषायः । तस्य पाता कषायपः । यश्चाब्राह्मण इव सर्वान् वन्दी भूत्वा स्तौति स सर्वोऽपि तृणेषूदयादारभ्यासीत । यावदादित्यः पृष्ठं पश्चाद्भागं तपति आदित्ये तपति तदानुगुण्याचरणात् स्वयमेव पृष्ठतबित्युच्यते । अभ्यासे अभ्यासो यावता शुद्धिं मन्यते ॥ १० ॥ * यदेकरात्रेण करोति पापं कृष्णं वर्णं ब्राह्मणः सेवमानश्चतुर्थकाल उदकाभ्यवायी त्रिभिर्वर्षैस्तदपहन्ति पापम् ॥ ११॥ कृष्णो वर्णः शूद्रः । तमाज्ञाकरो भूत्वा वृत्त्यर्थं सेवमानः । शिष्टं स्पष्टं गतं च । अपर आह—'शूद्रां मैथुने सेवमान' इति । अस्मिन्पक्षे ऋतावुपगमे अपत्योत्पत्ताविदं द्रष्टव्यम् । 'वृषलीफेनपीतस्य निश्वासोपहतस्य च । तस्यां चैव प्रसूतस्य निष्कृतिर्न विधीयते ॥ ' इति ॥ ११ ॥

इति सप्तविंशतितमी खण्डिका ॥ प्र०१ प०९ ख०२७ ॥

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां प्रथमप्रश्ने नवमः पटलः ॥९॥

***यथा कथा च परपरिग्रहमभिमन्यते स्तेनो ह भवतीति कौत्सहारीतौ तथा कण्वपुष्करसादी** ॥१॥ यथा कथा च आपद्यनापदि वा । भूयांसमल्पं वा परपरिग्रहं परस्वमभिमन्यते ममेदमस्त्विति बुद्धौ कुरुते बुद्धौ कृत्वादत्त इत्यर्थः । सर्वथा स्तेन एव भवतीति कौत्सादयो मन्यन्ते ॥१॥ ***सन्त्यपवादाः परपरिग्रहेष्विति वार्ष्यायणिः** ॥२॥ वार्ष्यायणिस्तु मन्यते केषुचित्परपरिग्रहेषु स्तेयस्यापवादाः सन्तीति ॥२॥ तानेवोदाहरति— ***शम्योषा युग्यघासो न स्वामिनः प्रतिषेधयन्ति** ॥३॥ शमीबीजकोशी तस्यामुप्यन्ते (दह्यन्ते) कालवशेन पच्यन्त इति शम्योषाः कोशीधान्यानि मुद्गमाषचणकादीनि । युगं वहतीति युग्यः शकटवाही बलीवर्दः । तस्य घासो भक्षणतृणानि युग्यघासः । एत आदीयमाना स्वामिनो न प्रतिषेधयन्ति स्वामिभिः प्रतिषेधं न कारयन्ति । एतेष्वादीयमानेषु स्वामिनो न प्रतिषेद्धुमर्हन्तीत्यर्थः । स्वयंग्रहणेऽपि न स्तेयदोष इति यावत् । अत्र स्मृत्यन्तरे विशेषः—'चणकव्रीहिगोधूमयवानां मुद्गमाषयोः । अनिषिद्धैर्ग्रहीतव्यो मुष्टिरेकोऽध्वनि स्थितैः ॥' इति । मनुस्तु,—'द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके । आददानः परक्षेत्रान्न दण्डं दातुमर्हति ॥' ॥३॥ ***अतिव्यवहारो वृद्धो भवति** ॥४॥ शम्योषादिष्वपि अतिव्यवहारो वृद्धो दुष्टो भवति अतिमात्रापहारे स्तेयदोषो भवतीत्यर्थः ॥४॥ ***सर्वत्रानुमतिपूर्वमिति हारीतः** ॥५॥ सर्वेषु द्रव्येषु सर्वास्ववस्थासु स्वाम्यनुमतिपूर्वमेव ग्रहणमिति हारीत आचार्यो मन्यते ॥५॥ ***न पतितमाचार्यं ज्ञातिं वा दर्शनार्थो गच्छेत्** ॥६॥ 'न पतितैः सव्यवहारो विद्यते' इत्युक्तेऽपि पुनरुच्यते आचार्यादिषु विशेषं वक्ष्यामीति ॥६॥ ***न चास्माद्भोगानुपयुञ्जीत** ॥७॥ अस्मात्पतितादाचार्यात् ज्ञातेर्वा पित्रादेर्भोगान् भोगसाधनानि दायप्राप्तान्यपि नोपयुञ्जीत न गृह्णीयात् ॥७॥ ***यदृच्छासन्निपात उपसंगृह्य तूष्णीं व्यतिव्रजेत्** ॥८॥ यदि पतितैराचार्यादिभिर्यदृच्छया सन्निपातः सङ्गतिः स्यात् तदा विधिनोपसंगृह्य तूष्णीं तैस्सह किञ्चिदप्यसम्भाष्य व्यतिव्रजेत् गच्छेत् । न क्षणमपि सह तिष्ठेत् ॥८॥ *** माता पुत्रत्वस्य भूयांसि कर्माण्यारभते तस्यां शुश्रूषा**

**नित्या पतितायामपि** ॥९॥ पुत्रत्वस्य स्वार्थिकस्त्वः ; यथा देहत्वमेवान्यदिति । पुत्रस्य कृते माता भूयांसि दुष्कराणि गर्भधारणाशुचिनिर्हरणस्तन्यदानप्रदक्षिणनमस्कारोपवस्तादीनि कर्माणि करोति तस्मात्तस्यां पतितायामपि शुश्रूषा अभ्यङ्गस्नापनादिका । नित्या नित्यमेव कर्तव्या ॥ ९॥ **न तु धर्मसन्निवापः स्यात्** ॥१०॥ एकस्मिन् धर्मे सहान्वयो धर्मसन्निवापः । स पतितया मात्रा सह न कर्तव्यः । नाममुब्रह्मण्यायां मातुर्नामग्रहणं वरुणप्रघासेषु यावन्तो यजमानस्यामात्याः सस्त्रीकास्तावन्त्येकातिरिक्तानीत्येवमादिकमुदाहरणम् । किं पुनरेवमादिषु मातुरन्वयः शुश्रूषा, ओमित्याह । अन्विता हि सा सम्पन्ना सन्धिनं निरस्ता तु विमता वै स्वदेश...पार्श्वे सा न भोजयितव्या । मृतायास्तु तस्याः संस्कारादिकाः क्रियाः कर्तव्या नेति विप्रतिपन्ना ॥१०॥ **अधर्माहृतान्भोगाननुज्ञाय न वयं चाधर्मश्चेत्यभिव्याहृत्याधोनाभ्युपरिजान्वाच्छाद्य त्रिषवणमुदकमुपस्पृशन्नक्षीराक्षारलवणं भुञ्जानो द्वादशवर्षाणि नागारं प्रविशेत्** ॥ ११ ॥ ब्राह्मणस्वहरणम् । 'चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च । पतत्यज्ञानतो विप्रो ज्ञानात्साम्यं तु गच्छति ॥' इत्येवमादिकमुदाहरणम् । ये त्वधर्माहृता भोगास्तानभ्यनुज्ञाय परित्यज्य न वयं चाधर्मश्चेति प्रैष ब्रूयात् । तस्यार्थः—वयं नाधर्मश्च सह न वर्तामहे इति । अधोनाभीत्यादि गतम् । नात्रावेशाणेपक्ष भिक्षाचर्यं वा ॥ ११ ॥ **ततः सिद्धिः** ॥ १२ ॥ एतस्य कृ...शतापि कस्यान्ते सिद्धिः शुद्धिर्भवति ॥ १२ ॥ **अथ सम्प्रयोगस्स्यादार्यैः** ॥ १३ ॥ प्रायश्चित्तोपदेशात् सिद्ध्युपदेशाच्च सिद्धेः पुनर्वचनं 'ज्ञानात्साम्यं तु गच्छती'त्यस्यापवादार्थम् ॥ १३ ॥ **एतदन्येषामपि पतनीयानाम्** ॥ १४ ॥ उक्तव्यतिरिक्तानि यानि पतनीयानि पूर्वमुक्तानि तेषु यत्राहत्य प्रायश्चित्तमनुक्तं तेषामप्येतदनन्तरोक्तमेव प्रायश्चित्तं वेदितव्यम् । उक्तविषये विकल्प इत्यन्ये । तत्र ज्ञानाज्ञानादिकृतो विकल्पः ॥ १४ ॥ **गुरुतल्पगामी तु सुषिरां सूर्मि प्रविश्योभयत आदीप्याभिदहेदात्मानम्** ॥ १५ ॥ यस्तु गुरुतल्पगामी सोऽन्तःप्रवेशयोग्या सुषिरा सूर्मि कृत्वा प्रविशेत् प्रविश्योभयत पार्श्वयोरादीपयेत् । आ-

दीप्यात्मानमग्निदहेत्'। ज्वलितां वा सूर्मिं परिष्वज्य समाप्नुयादित्यत्रैव कियानपि विशेषः । अतन्नरस्य वैकल्पिकस्य निवृत्त्यर्थं वचनम् ॥ १५ ॥

*मिथ्यैतदिति हारीतः ॥ १६ ॥ हारीतस्त्वृषिर्मन्यते एतदनन्तरोक्तं मरणान्तिकप्रायश्चित्तं मिथ्या न कर्तव्यमिति ॥ १६ ॥ कुत इत्यत आह-

*यो ह्यात्मानं परं वाभिमन्यतेऽभिशस्त एव स भवति ॥ १७॥ हिं यस्मात् य आत्मानं परं वाभिमन्यते मारयति सोऽभिशस्त एव भवति ब्रह्महैव भवति । न च महापातकस्य ब्रह्महत्या प्रायश्चित्तं भवितुमर्हतीति हेत्वभिधानादभिशस्तवचनाच्चान्येषां मरणान्तिकानां ब्राह्मणविषये निवृत्तिः ॥ १७॥

किं तर्हि तस्य प्रायश्चित्तमित्याह—*एतेनैव विधिनोत्तमादुच्छ्वासाच्चरेन्नास्यास्मिँल्लोके प्रत्यापत्तिर्विद्यते कल्मषं तु निर्हण्यते ॥ १८ ॥ 'अथानाभ्युपरिजानी'त्यादि यदनन्तरोक्तमेतेनैव विधिना। शिष्टं गतम् ॥१८॥ *दारव्यतिक्रमी खराजिनं बहिर्लोम परिधाय दारव्यतिक्रमिणे भिक्षामिति सप्तागाराणि चरेत् । सा वृत्तिः षण्मासान् ॥१९॥ यस्त्वन्तरेणैव निमित्तं कौमारान् दारान् परित्यजति स दारव्यतिक्रमी । खरस्य गर्दभस्याजिनं बहिर्लोम परिधाय वसित्वा दारव्यतिक्रमिणे भिक्षां दत्तेति सप्तागाराणि भिक्षां चरेत् । 'कौमारदारपरित्यागिने भिक्षां दत्ते'ति वासिष्ठे । सा वृत्तिः षण्मासान् । तत सिद्धिः ॥ १९ ॥ *स्त्रियास्तु भर्तृ(र्तु)व्यतिक्रमे कृच्छ्रद्वादशरात्राभ्यासस्तावन्तं कालम् ॥२०॥ भर्तृ(र्तु)र्व्यतिक्रम इति छान्दसो षष्ठ्यर्थे । व्यतिक्रमः परित्यागः । या तु स्त्री भर्तारं परित्यजत्यन्तरेण निमित्तं, तस्या कृच्छ्रद्वादशरात्राभ्यासः प्रायश्चित्तम् । तावन्तं कालं षण्मासानिति ॥ २० ॥

इति अष्टाविंशतितमी खण्डिका ॥ प्र०१ प०१० ख०२८ ॥

* अथ भ्रूणहा श्वाजिनं खराजिनं वा बहिर्लोम परिधाय पुरुषशिरः प्रतीपानार्थमादाय खट्वाङ्गं दण्डार्थे कर्मनामधेयं प्रब्रुवाणश्चङ्क्रम्येत को भ्रूणघ्ने भिक्षामिति । ग्रामे प्राणवृत्तिं प्रतिलभ्य शून्यागारं वृक्षमूलं वाभ्युपाश्रयेन्न हि मे आर्यैः सम्प्रयोगो विद्यते ॥१॥ एतेनैवोत्तमादुच्छ्वासाच्चरेन्नास्यास्मिँल्लोके प्रत्यापत्तिर्विद्यते । कल्मषं तु

**निर्हण्यते** ॥२॥ षडङ्गस्य वेदस्याध्येता तदर्थवित् प्रयोगशास्त्रस्य च व्याख्यानस्यार्थवित् कर्मणामनुष्ठाता अनुष्ठापयिता च ब्राह्मणो भ्रूणः । तथा च बोधायनः—'वेदानां किञ्चिदधीत्य ब्राह्मणः । एकां शाखामधीत्य श्रोत्रियः । अङ्गाध्याय्यनूचानः । कल्पाध्याय्यृषि । कल्पसूत्रप्रवचनाध्यायी भ्रूण.' इति । तं यो हतवान् स भ्रूणहा । सः शुनः खरस्य वाऽजिनं बहिर्लोम परिधाय पुरुषस्य यस्यकस्यचिन्मृतस्य शिरः । प्रतीपानार्थम् । प्रतिर्धात्वर्थानुवादी । 'उपसर्गस्य घञ्यमनुष्ये बहुल'मिति बाहुलको दीर्घः । पानमेव प्रतीपानम् । पानग्रहणमुपलक्षणम् । भोजनमपि तत्रैव । खट्वाङ्गं दण्डार्थे खट्वाया अङ्गमीषादि तद्दण्डकृत्ये आदाय । भ्रूणहास्मीत्येव कर्मनिबन्धनमात्मनो नामधेयं प्रब्रुवाणश्चङ्क्रम्येत इतस्ततश्चरेत् । कापालिकतन्त्रप्रसिद्धस्य खट्वाङ्गस्य वा ग्रहणम् । भिक्षाचरणकाले च को भ्रूणघ्ने भिक्षां ददातीति चरेत् । चरित्वा ग्रामे प्राणवृत्तिं प्राणयात्रामात्रं प्रतिलभ्य शून्यागारं वृक्षमूलं वा निवासार्थमभ्युपाश्रयेत न हि म आर्यैः सम्प्रयोगो विद्यत इत्येवं मन्यमानः ॥१॥ कियन्तं कालमेवं चरितव्यमित्यत आह—एतेनैवेत्यादि । गतम् । 'श्रोत्रियं वा कर्मसमाप्त'मित्यत्र यः श्रोत्रियः श्रुतिधारी अर्थज्ञश्च स भवति अनुष्ठापयिता च न भवति तस्य ग्रहणम् ॥२॥ * **यः प्रमत्तो हन्ति प्राप्तं दोषफलम्** ॥३॥ 'क्षत्रियं हत्वे'त्येवमादिकेऽनुक्रान्तेऽपि विषये यः प्रमत्तो हन्ति प्रमादेनाबुद्धिपूर्वं वा हन्ति तस्यापि दोषफलं प्राप्तमेव । न तु प्रमादकृतमिति दोषाभावः ॥३॥ * **सह सङ्कल्पेन भूयः** ॥४॥ सङ्कल्पेन सह वधे कृते भूयः प्रभूततरं भवति । तेन प्रमादकृते लघु प्रायश्चित्तम् । बुद्धिपूर्वे तु गुर्विति । यत्पुनः पूर्वमुक्तं 'दोषवच्च कर्माभिसन्धिपूर्वं कृत्वानभिसन्धिपूर्वं वे'ति तत् तेषु प्रायश्चित्तेषु विशेषाभावादुक्तम् ॥४॥ ***एवमन्येष्वपि दोषवत्सु कर्मसु** ॥५॥ अन्येष्वपि हननव्यतिरिक्तेषु दोषवत्सु कर्मसु एवमेव द्रष्टव्यम् । अबुद्धिपूर्वकृतेऽल्पो दोषः । बुद्धिपूर्वे महानिति ॥५॥ * **तथा पुण्यक्रियासु** ॥६॥ पुण्यक्रियास्वप्येष एव न्यायः । अबुद्धिपूर्वेऽल्पं बुद्धिपूर्वे महदिति । तद्यथा ब्राह्मणस्वाम्यपहर्तृषु चोरेषु धावत्सु यदृच्छया कश्चिच्छूर आगतस्तान् हन्यात् स्वयमेव वा शूरं दृष्ट्वा चोरा अप-

हृतानि द्रव्याण्युत्सृज्य पलायेरन् तदा शूरस्याल्पं पुण्यफलम् । यदा तु बुद्धिपूर्वं स्वयमेव चोरेभ्यः प्रत्याहृत्य स्वानि स्वामिभ्यो ददाति तदा महदिति । एवं स्वभार्याबुद्ध्या परदारगमनेऽल्पम् । अन्यत्र महदिति ॥६॥ ***परीक्षार्थोऽपि ब्राह्मण आयुधं नाददीत** ॥७॥ गुणदोषज्ञान परीक्षा । तथा अर्थः प्रयोजनं यस्य सः । एवंभूतोऽपि भूत्वा ब्राह्मण आयुधं न गृह्णीयात् किं पुनर्हिंसार्थं इत्यपिशब्दार्थः ॥७॥ अस्य प्रतिप्रसवः—***यो हिंसार्थमभिक्रान्तं हन्ति मन्युरेव मन्युं स्पृशति न तस्मिन् दोष इति पुराणे** ॥८॥ यस्तु हिंसार्थं मरणार्थमभिक्रान्तमभिपतितं हन्ति न तस्मिन् दोषो विद्यत इति पुराणे श्रुतम् । दोषाभावे हेतुः—यस्मान्मन्युरेव मन्युं स्पृशति न पुनः पुरुषः पुरुषम् । अत्र वसिष्ठबौधायनौ—'स्वाध्यायिनं कुले जातं यो हन्यादाततायिनम् । न तेन भ्रूणहा स स्यान्मन्युस्तं मन्युमृच्छति ॥' इति । मनुस्तु, 'शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते । द्विजातीनां च वर्णानां विप्लवे कालकारिते । आत्मनश्च परित्राणे दक्षिणानां च सङ्गरे ॥ स्त्रीविप्राभ्युपपत्तौ च घ्नन् धर्मेण न दुष्यति ॥' इति । गौतमः—'प्राणसंशये ब्राह्मणोऽपि शस्त्रमाददीते'ति । वसिष्ठः—'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते ह्याततायिनः ॥ आततायिनमायान्तमपि वेदान्तपारगम् । जिघांसन्तं जिघांसीयान्न तेन भ्रूणहा भवेत् ॥' इति ॥८॥ पतितैरकृतप्रायश्चित्तैरुत्पादितानां पुत्राणामपि पातित्यमस्तीति प्रतिपादयितुं पूर्वपक्षमाह—*** अथाभिशस्ताः समवसाय चरेयुर्धार्म्यमिति साशित्येतरेतरयाजका इतरेतराध्यापका मिथो विवहमानाः** ॥९॥ अथशब्दोऽर्थान्तरप्रस्तावं सूचयति । अभिशस्ताः पतिताः । समवसाय चरेयुः । अवसानं गृहम् । समित्येकीभावे । ग्रामाद्बहिरेकस्मिन् प्रदेशे गृहाणि कृत्वा चरेयुः । धार्म्यं धर्म्यं वक्ष्यमाणं वृत्तमिति । साशित्य सशीनां तीक्ष्णां बुद्धिं कृत्वा । निश्चित्येत्यर्थः । इतरेतरं याजयन्तः इतरेतरमध्यापयन्तः परस्परं विवाहसम्बन्धं च कुर्वन्तश्चरेयुः वर्तेरन्निति ॥ ९ ॥ *** पुत्रान् सन्निष्पाद्य ब्रूयुर्विप्रव्रजतास्मदेवं ह्यस्मत्स्वार्यास्सम्प्रत्यपत्स्यतेति** ॥ १० ॥ अथ ते पुत्रान् सन्निष्पाद्य ब्रूयुः । हे पुत्राः । अ-

स्मत अस्मत्तः । विप्रव्रजत विविधं प्रकर्षेण च स्नेहमुत्सृज्यार्यसमीपं गच्छत । एवं ह्यस्मत्सु अस्मास्वार्याः शिष्टाः सम्प्रत्यपत्स्यत । आशंसायां भूतवच्चेति भविष्यति लुङ् । सकारात्परो यकारोऽपपाठश्छान्दसो वा । सम्प्रतिपत्तिं करिष्यन्ति । आर्याणामप्येतदभिप्रेतं भविष्यति । तस्मादस्माभिरेव पतनीयं कर्मानुष्ठितं न भवद्भिः ॥१०॥ न च पतितेनोत्पादितस्य पातित्यम् । अन्यत्वात् । एतदेवोपपादयति—*अथापि न सेन्द्रियः पतति ॥ ११ ॥ न हि पतितो भवन् सहेन्द्रियेण पतति पुरुष एव पतति नेन्द्रियं शुक्रमिति । अथापिशब्दोऽपि चेत्यस्यार्थे ॥ ११ ॥ कथं न सेन्द्रियः पततीत्याह—*तदेतेन वेदितव्यमङ्गहीनो हि साङ्गं जनयति ॥ १२ ॥ तदनन्तरोक्तमर्थरूपमेतेन वक्ष्यमाणेन निर्देशेन वेदितव्यम् । चक्षुराद्यङ्गहीनः साङ्गं चक्षुरादिमन्तं जनयति । एवमधिकारविकलः साधिकारं जनयिष्यति ॥ १२ ॥ स्त्रिया अपि कारणत्वात् तस्याश्च दोषाभावात् । दूषयति—*मिथ्यैतदिति हारीतः ॥ १३ ॥ एतदनन्तरोक्तमर्थरूपं मिथ्या न युक्तमिति हारीतो मन्यते ॥ १३ ॥ कुत इत्याह—*दधिधानीसधर्मा स्त्री भवति ॥ १४ ॥ दधि धीयते यस्यां सा दधिधानी स्थाली तया सधर्मा सदृशी स्त्री भवति ॥ १४ ॥ तत किम्—*यो हि दधिधान्यामप्रयतं पय आतच्य मन्थति न तेन धर्मकृत्यं क्रियत एवमशुचि शुक्रं यन्निवर्तते न तेन सह सम्प्रयोगो विद्यते ॥ १५ ॥ यो हि पुरुषः दधिधान्यां स्थाल्याम् । अप्रयतं श्वाद्युपहतम् । पय आतच्य तक्रायातञ्चनेन सम्कृत्य मन्थति न तेन तदुत्पन्नेन घृतादिना धर्मकृत्यं यागादिकं क्रियते एवमशुचि शुक्रं यन्निवर्तते न तेन सह सम्प्रयोगो विद्यते । पतितसम्बन्धेनाशुचि शुक्रं स्त्रिया निषिक्तं शोणितेनाक्तं यन्निर्वर्तते येन रूपेण निष्पद्येत न तेन सह सम्प्रयोगो विद्यते शिष्टानाम् । अत्र चाशुचि शुक्रमित्येन'दथापि न सेन्द्रियः पतती'त्यस्य दूषणम् । न हि वाचनिकेऽर्थे युक्तयः क्रमन्ते । तथा च समानायामप्युत्पत्तौ पुत्र एव पतति न दुहिता । यथाह वसिष्ठः—'पतितोत्पन्नः पतितो भवति अन्यत्र स्त्रियाः । सा हि परगामिनी तामरिक्थामुपेयात् ।' इति ॥ १५॥ *अभीचारानुव्यवहारा

वशुचिकरावपतनीयौ ॥ १६ ॥ अभिचार एवाभीचारः । उपसर्गस्य घञीति दीर्घः । अभीचारः श्येनादिः । अनृतव्यवहारः शापः । तौ ब्राह्मणविषयौ क्रियमाणावशुचिकरावेव । न तु पतनीयौ ॥ १६ ॥ *पतनीयाविति हारीतः ॥ १७ ॥ हारीतस्तु, तावपि पतनीयाविति मन्यते ॥ १७ ॥

*पतनीयवृत्तिस्त्वशुचिकराणां द्वादशमासान् द्वादशार्धमासान् द्वादश द्वादशाहान् द्वादश सप्ताहान् द्वादश त्र्यहान् द्वादशाहं सप्ताहं त्र्यहमेकाहम् ॥ १८ ॥ अशुचिकराणामपि कर्मणां येषामाहत्य प्रायश्चित्तं नोक्त तेषामपि पतनीयेषु कर्मसु या वृत्तिः प्रायश्चित्त सैव प्रायश्चित्तम् । कियन्तं कालं द्वादशमासाद्येकाहान्तम् ॥ १८ ॥ किमविशेषेण सर्वेष्वेवाशुचिकरेष्वयं कालविकल्पः । नेत्याह—* इत्यशुचिकरनिर्वेषो यथा कर्माभ्यासः ॥ १९ ॥ इत्येषोऽशुचिकरनिर्वेषो यथा कर्माभ्यासस्तथा वेदितव्यः । बुद्धिपूर्वं सानुबन्धेऽभ्यासे भूयासं कालमशुचि । विपरीते विपर्ययं इति । १९ ।

॥ इति एकोनत्रिंशत्तमी खण्डिका ॥ प्र०१ प०१० ख०२९ ॥

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां प्रथमप्रश्ने दशमः पटलः ॥ १० ॥

---

'न समावृत्ता वपेरन् स्नातस्तु काले' इत्यादिषु प्रसक्तस्य स्नानकालमाह—*विद्यया स्नातीत्येके ॥ १ ॥ वेदविद्या विद्या । तया सम्पन्न स्नानं कुर्यादित्येके मन्यन्ते । मनुरप्याह—'वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् । अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत ॥' इति ॥ १ ॥

*अथाष्टाचत्वारिंशत्परीमाणेन ॥ २ ॥ परिमाणमेव परीमाणम् । छान्दसो दीर्घः । अष्टाचत्वारिंशद्ग्रहणं 'पादूनमर्धेने'त्यादिपूर्वोक्तस्याप्युपलक्षणम् । अष्टाचत्वारिंशदादिपरिमाणेन व्रतेन वा सम्पन्नः स्नायात् असम्पन्नोऽपि विद्यया ॥ २ ॥ *विद्याव्रतेन चेत्येके ॥ ३ ॥ विद्येति तृतीयैकवचनस्याकारस्य 'सुपां सुलु'गित्यादिना लुक् । विद्यया व्रतेन चोभाभ्यां सम्पन्नः स्नायादित्येके मन्यन्ते । एवं च 'वेदमधीत्य स्नास्य'न्नित्यत्र वेदमधीत्येत्युपलक्षणम् । अत्र याज्ञवल्क्यः—'वेदं व्रतानि वा पारं नीत्वाप्युभ-

यमेव वा । अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ॥' इति । अत्र व्रतशब्देनाग्नीन्धनभैक्षाचरणादयो ब्रह्मचारिधर्मा उच्यन्ते । तेषु हि कालपरिमाणस्याश्रुतत्वात् पारं नीत्वेति युज्यते । दृश्यते च तेषु व्रतशब्दः । 'यथा व्रतेषु समर्थस्स्याद्यानि वक्ष्याम' इति । न तु सावित्र्यादीनि वेदव्रतान्युच्यन्ते । तेषां तत्तत्प्रदेशाध्ययनशेषतया तदभावेऽभावाद्वेदं व्रतानि वेति विकल्पानुपपत्तेः । अतः कालविशेषावच्छिन्नानि व्रतानि वेदमुभयं वा पारं नीत्वेत्यर्थः ॥ ३ ॥ ***तेषु सर्वेषु स्नातकवद्वृत्तिः ॥ ४ ॥** विद्यास्नातको व्रतस्नातक उभयस्नातक इति त्रयः स्नातका उक्ताः । तेषु सर्वेषु स्नातकवत् 'तदर्ह'मिति वतिः । स्नातकार्हा वृत्तिः पूजा । 'यत्रास्मा अपचिति' मित्यादिः कार्या ॥ ४ ॥ ननु व्रतस्नातके न्यूनाप्युभयस्नातकेऽधिका यद्यप्येवं तथापि पूजयितुः फलविशेषोऽस्तीत्याह—***समाधिविशेषाच्छ्रुतिविशेषाच्च पूजायां फलविशेषः ॥ ५ ॥** कर्तव्येषु कर्मस्ववधानं समाधिः । श्रुतिः श्रुतम् ॥ ५ ॥ ***अथ स्नातकव्रतानि ॥ ६ ॥** इत उत्तरं स्नातकव्रतान्यधिकृतानि वेदितव्यानि । यद्यपि वक्ष्यमाणेषु कानिचित् साधारणान्यपि भवन्ति तथापि भूम्ना स्नातकव्रतान्यधिक्रियन्ते ॥ ६ ॥ ***पूर्वेण ग्रामान्निष्क्रमणप्रवेशनानि शीलयेदुत्तरेण वा ॥ ७ ॥** यदा ग्रामान्निष्क्रामति ग्रामं प्रविशति तदा पूर्वेण द्वारेणोत्तरेण वा कुर्यात् । न द्वारान्तरेण शीलयेदिति वचनाद्यदृच्छया द्वारान्तरेण निष्क्रमणप्रवेशनयोरपि न प्रायश्चित्तम् ॥ ७ ॥ ***सन्ध्योश्च बहिर्ग्रामादासनं वाग्यतश्च ॥ ८ ॥** अहोरात्रयोः सन्धानं सन्धिः । तौ च द्वौ सायं प्रातश्च । सज्योतिषोऽज्योतिषोऽदर्शनात् । तयोस्सन्ध्योर्ग्रामाद्बहिरासीत । वाग्यतश्च भवेत् । मनुः पुनराह—'पूर्वां सन्ध्यां जपंस्तिष्ठेत् सावित्रीमार्कदर्शनात् । पश्चिमां तु समासीत सम्यगृक्षविभावनात् ॥' इति तत् ब्रह्मचारिविषयम् । स्नातके आसनस्य वाग्यमनस्य चात्र विधानात् । अन्ये तु, आसनग्रहणं स्थानस्याप्युपलक्षणम् । वाग्यमनं च लौकिक्या वाचो निवृत्तिः । न सावित्रीजपस्येति वर्णयन्ति ॥ ८ ॥ आहिताग्निविषयेऽस्यापवादः—*** विप्रतिषेधे श्रुतिलक्षणं बलीयः ॥ ९ ॥** विरोधो विप्रतिषेधः । अग्निहोत्रिणो बहिरासनं अग्निहोत्रहोमश्च विरु-

ध्येते । तत्र श्रौतलक्षणमग्निहोत्रमेवं कर्तव्यम् । न स्मार्तं बहिरासनम् । तस्य कल्प्यमूलत्वादितरस्य च क्लृप्तमूलत्वादिति ॥९॥ * सर्वान्रागान्वासांसि वर्जयेत् ॥१०॥ कुसुम्भादयस्सर्वे रागाः वाससि वर्जनीयाः । न केनचिद्रक्तं वासो बिभृयादिति ॥१०॥ * कृष्णं च स्वाभाविकम् ॥ ११॥ यच्च स्वभावतः कृष्णं कम्बलादि । तदपि न वसीत ॥११॥ * अनूद्भासि वासो वसीत ॥१२॥ उद्भासनशीलमुद्भासि उल्बणम् । ततोऽन्यदनूद्भासि । छान्दसो दीर्घः । एवंभूतं वासो वसीत आच्छादयेत् ॥१२॥ * अप्रतिकृष्टं च शक्तिविषये ॥१३॥ प्रतिकृष्टं निकृष्टं जीर्णं मलवत् स्थूलं च । तद्विपरीतमप्रतिकृष्टम् । तादृशं च वासो वसीत । शक्तौ सत्याम् ॥१३॥ * दिवा च शिरसः प्रावरणं वर्जयेन्मूत्रपुरीषयोः कर्म परिहाप्य ॥१४॥ चकारः पूर्वापेक्षया समुच्चयार्थः । दिवा शिरसः प्रावरणं पटादिना न कुर्यात् । किमविशेषेण । मूत्रपुरीषयोः कर्म क्रियां परिहाप्य वर्जयित्वा ॥१४॥ * शिरस्तु प्रावृत्य मूत्रपुरीषे कुर्यात् भूम्यां किञ्चिदन्तर्धाय ॥ १५ ॥ दिवा रात्रौ च मूत्रपुरीषे कुर्वन् शिरः प्रावृत्य कुर्यात् । भूम्यां किञ्चिदन्तधाय तृणादिकम् । न साक्षात् भूम्यामेव । इह कामचारे प्राप्ते 'दिवा च शिरसः प्रावरणं वर्जये'दित्युक्तम् । तस्य पर्युदासः कृतः 'मूत्रपुरीषयोः कर्म परिहाप्ये'ति । तत्र मूत्रपुरीषकाले स एव कामचारः स्थितः । अत आरभ्यते 'शिरस्तु प्रावृत्य मूत्रपुरीषे कुर्या'दिति । एवं तर्हि इदमेवास्तु न पूर्वतः पर्युदासः । सोऽप्यवश्यं कर्तव्यः । अन्यथा 'शिरस्तु प्रावृत्ये'त्यस्य रात्रौ चरितार्थत्वात् दिवाप्रतिषेध एव स्यात् । गौतमस्तु, रात्रौ सदेव प्रावरणमाह 'न प्रावृत्य शिरोऽहनि पर्यटेत्प्रावृत्य रात्रौ मूत्रोच्चारे चे'ति । १५। * छायायां मूत्रपुरीषयोः कर्म वर्जयेत् ॥१६॥ 'न चोपजीव्यच्छायास्वि'ति स्मृत्यन्तरे दर्शनात् । यस्यां पथिकादयो विश्राम्यन्ति सा गृह्यते । तेन छत्रच्छायादेरप्रतिषेधः । मेघच्छायाया अप्यप्रतिषेधः । अवर्जनीयत्वात् ॥ १६॥ * स्वां तु छायामवमेहेत् ॥१७॥ छान्दसस्तुगभावः । द्वितीयाश्रुतेः प्रतिशब्दाध्याहारः । अवमेहनं मूत्रकर्म । अनुपजीव्यत्वान्नायं पूर्वस्य प्रतिषेधस्य विषय इति । प्रतिप्रसवोऽयं न भवति । तेन सति सम्भवे स्वामेव

छायां प्रत्यक्पमेढ्यम् ॥ १७ ॥ * न सीपानन्मूत्रपुरीषे कुर्यात् ॥ १८ ॥ *कृष्टे ॥ १९ ॥ * पथि ॥ २० ॥ * अप्सु च ॥ २१ ॥ *तथा ष्ठेवनमैथुनयोः ॥ २२ ॥ * [redacted] ॥ २३ ॥ स्पष्टानि षट् ॥ १८–२३ ॥ * अग्निम् ॥ २४ ॥ *आदित्यम् ॥ २५ ॥ * अपः ॥ २६ ॥ * ब्राह्मणम् ॥ २७ ॥ *गा देवताश्च ॥ २८ ॥ *अभिमुखो मूत्रपुरीषयोः कर्म वर्जयेत् ॥ २९ ॥ स्पष्टानि षट् । ष्ठेवनमास्यश्लेष्मादीनामुत्सर्गः । देवताः देवताप्रतिमाः ॥ २४–२९ ॥ *अश्मानं लोष्टमार्द्रानोषधिवनस्पतीनूर्ध्वानाच्छिद्य मूत्रपुरीषयोः शुन्धने वर्जयेत् ॥ ३० ॥ फलपाकावसाना ओषधयः । ये पुष्पैर्विना फलन्ति ते वनस्पतयः । 'आर्द्रा'निति वचनात् शुष्केषु न दोषः । 'ऊर्ध्वा'निति वचनाद्वातादिनिमित्तेन भग्नेषु न दोषः । एतैरश्मादिभिर्मूत्रपुरीषयोः शोधनं न कुर्यात् ॥ ३० ॥ *अग्निमादित्यमपो ब्राह्मणं गा देवता द्वारं प्रति पादं च शक्तिविषये नाभिप्रसारयीत ॥ ३१ ॥ अग्न्यादीन्प्रति पादौ न प्रसारयेत् ॥ ३१ ॥ *अथाप्युदाहरन्ति ॥ ३२ ॥ ३२ ॥

॥ इति त्रिंशत्तमी खण्डिका ॥ प्र० १ प० ११ ख० ३० ॥

---

* प्राङ्मुखोऽन्नानि भुञ्जीतोच्चरेद्दक्षिणामुख उदङ्मुखो मूत्रं कुर्यात्प्रत्यक्पादावनेजनमिति ॥ १ ॥ उच्चारः पुरीषकर्म । पादावनेजनं पादप्रक्षालनम् । भोजनादिषु चतस्रो दिशो नियम्यन्ते । मनुस्तु— 'आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः । श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते उदङ्मुखः ॥' इति । याज्ञवल्क्यश्च—'दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः । कुर्यान्मूत्रपुरीषे तु रात्रौ चेद्दक्षिणामुखः ॥' इति ॥ १ ॥ * आराच्चावसथान्मूत्रपुरीषे कुर्याद्दक्षिणां दिशं दक्षिणापरां वा ॥ २ ॥ आवसथो गृहम् । तस्य दूरतो मूत्रपुरीषे कुर्यात् । दक्षिणां दिशम् । द्वितीयादर्शनादुपनिष्क्रम्येति गम्यते । दक्षिणापरा नैर्ऋती ॥ ॥ २ ॥ *अस्तमिते च बहिर्ग्रामादारादावसथाद्वा मूत्रपुरीषयोः कर्म वर्जयेत् ॥ ३ ॥ अस्तमित आदित्ये बहिर्ग्रामान्मूत्रपुरीषे न कुर्यात् । तथा अन्तर्ग्रामेऽपि गृहस्य दूरतो न कुर्यात् । दृष्टार्थोऽयं प्रतिषेधः । चोरव्याघ्रादि-

शङ्कया । निम्ने देशे नास्ति दोषः ॥३॥ *देवताभिधानं चाप्रयतः ॥४॥ अप्रयतस्सन् देवताभिधानं वर्जयेत् । अभिधानमित्यपि पाठे एष एवार्थः ॥४॥ *परुषं चोभयोर्देवतानां राज्ञश्च ॥५॥ देवतानां राज्ञश्चेत्युभयोः । राज्यपेक्षया द्विवचनम् । परुषं निन्दां वर्जयेत् ॥ ५ ॥ *ब्राह्मणस्य गोरिति पदोपस्पर्शनं वर्जयेत् ॥६॥ ब्राह्मणं गां च पदेन नोपस्पृशेत् । इतिशब्दः प्रकारे । तेन विद्यावयोवृद्धानां ब्राह्मणानामपि वर्जयेत् ॥ ६ ॥ *हस्तेन चाकारणात् ॥७॥ कारणमभ्यङ्गकण्डूयनादि । तेन विना हस्तेनाप्युपस्पर्शनं वर्जयेत् पूर्वोक्तानाम् ॥७॥ *गोर्दक्षिणानां कुमार्याश्च परीवादान्वर्जयेत् ॥८॥ गोरदक्षिणाया अपि दक्षिणानां गवामपि हिरण्यादीनां कुमार्याः कन्यायाश्च दोषान् सतोऽपि न कथयेत् । अध्यात्मप्रकरणे योगाङ्गतया परीवादः प्रतिषिद्धः । अनन्तरं च वक्ष्यति 'क्रोधादींश्चे'त्यादि । इदं च वचनं गवादिषु प्रायश्चित्तातिरेकार्थम् ॥ ८ ॥ *स्तृहतीं च गां नाचक्षीत ॥९॥ सस्यधान्यादिकं भक्षयन्तीं गां स्वामिने न ब्रूयात् ॥ ९ ॥ *संसृष्टां च वत्सेनानिमित्ते ॥ १० ॥ या च गौर्वत्सेन संसृज्यते तामपि न ब्रूयादनिमित्ते । इयं वै गौर्वत्सेन पीयत इति । 'अनिमित्त' इतिवचनात् यस्य हविषे वत्सा अपाकृता धयेयुरित्यादिके निमित्ते सति वक्तुर्नास्ति दोषः ॥१०॥ *नाधेनुमधेनुरिति ब्रूयात् ॥११॥ या च गौरधेनुः पयस्विनी न भवति तामप्यधेनुरिति न ब्रूयात् ॥११॥ किं तर्हि—*धेनुभव्येत्येव ब्रूयात् ॥ १२ ॥ भविष्यन्ती धेनुर्धेनुभव्या । धेनोर्भव्याया वक्तव्य इति मुम् न भवति । छन्दस्तत्वेनाव्ययत्वात् । वक्तव्यत्वे च सति शब्दनियमोऽयम् । न पुनरधेनुदर्शन एवं वक्तव्यम् ॥१२॥ *न भद्रं भद्रमिति ब्रूयात् ॥१३॥ यन्न भद्रं तन्न भद्रमिति न ब्रूयात् ॥१३॥ किं तु—*पुण्यं प्रशास्तमित्येव ब्रूयात् ॥१४॥ पुण्यं प्रशास्तमित्यनयोरन्यतरेण शब्देन ब्रूयात् । प्रशास्तं प्रशस्तम् । छान्दसो दीर्घः ॥१४॥ *वत्सतन्तीं च नोपरिगच्छेत् ॥१५॥ वत्सानां बन्धनरज्जुर्वत्सतन्ती । तस्या उपरि न गच्छेत् । तां न लङ्घयेत् । वत्सग्रहणं गोजातेरुपलक्षणम् ॥१५॥ *प्रेङ्खान्तरेण च नातीयात् ॥१६॥ प्रेङ्खौ डोलास्तम्भौ । तोरणस्तम्भ-

रित्यन्ये। तावन्तरेण नातीयात्। 'तयोर्मध्ये न गच्छेत्' ॥१६॥ *नासौ मे सपत्न इति ब्रूयाद्यदसौ मे सपत्न इति ब्रूयाद्द्विषन्तं भ्रातृव्यं जनयेत् ॥१७॥ असौ देवदत्तो मे सपत्न इति न ब्रूयात् सदसि। किं कारणम्। यत् यद्यसौ सपत्न इति ब्रूयात्, द्विषन्तं क्रियाशब्दोऽयम्। द्विषाणं भ्रातृव्यं सपत्नं जनयेत्। एवं ह्युक्ते स मन्यते नाकस्मादसावेवं ब्रूते नूनमस्य मयि द्वेषो वर्तत इति। ततश्च तत्प्रतीकारार्थं यतमानस्सपत्न एव जायत इति ॥१७॥ *नेन्द्रधनुरिति परस्मै प्रब्रूयात् ॥१८॥ इन्द्रधनुराकाशे पश्यन् परस्मै तेन शब्देन न ब्रूयात्। यद्यवश्यं वक्तव्यं मणिधनुरिति ब्रूयात्। गौतमीये दर्शनात् ॥१८॥ *न पततः सञ्चक्षीत ॥१९॥ पततः पक्षिणः सङ्घीभूय स्थितान्न सञ्चक्षीत न गणयेत् इयन्त इति। अपर आह—'पुण्यक्षये स्वर्गात्पततः सुकृतिनः परस्मै न सञ्चक्षीत ज्योतींषि पतन्तीति न कथयेत् ॥ १९ ॥ *उद्यन्तमस्तं यन्तं चादित्यं दर्शने वर्जयेत् ॥२०॥ उदयसमये अस्तमयसमये वा आदित्यं न पश्येत्। मनुस्तु,—'नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन। नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥' इति ॥२०॥ *दिवादित्यः सत्वानि गोपायति नक्तं चन्द्रमास्तस्मादमावास्यायां निशायां स्वाधीय आत्मनो गुप्तिमिच्छेत् प्रायत्यब्रह्मचर्यकालेचर्यये च ॥ २१ ॥ दिवा अहनि। आदित्यः सत्वानि गोपायति प्राणिनो रक्षति आलोकदानेन। नक्तं चन्द्रमाः। तस्मादमावास्यायां निशायां रात्रौ स्वाधीयः। वकारश्छान्दसः। अन्तिकबाढयोर्नेदसाधौ'। बाढतरं भृशतरं आत्मनो गुप्तिं रक्षणमिच्छेत्। केन प्रकारेण प्रायत्यब्रह्मचर्याभ्यां काले चर्यया च। अयं तावदर्थानुरूपः पाठः। अधीयमानस्तु प्रमादश्छान्दसो वा। प्रयतस्य भावः प्रायत्यं नित्यप्रायत्यादधिकेन प्रायत्येन स्नानादिना। ब्रह्मचर्येण मैथुनत्यागेन। काले कृतया चर्यया देवार्चनजपादिकया च। कस्मात्पुनरस्यां रात्रौ चन्द्रमा न गोपायतीत्याह—॥ २१ ॥ *सह ह्येतां रात्रिं सूर्याचन्द्रमसौ वसतः ॥ २२ ॥ एतां रात्रिम्। अत्यन्तसंयोगे द्वितीया। सर्वामेतां रात्रिं सूर्याचन्द्रमसौ सह वसतः। न च सूर्येण सह वसतश्चन्द्रमसः प्र-

काशोऽस्ति ॥ २२ ॥ *न कुसृत्या ग्रामं प्रविशेत् ॥ २३ ॥ कुसृतिः कुमार्गः तया ग्रामं न प्रविशेत् ॥ २३ ॥ *यदि प्रविशेन्नमो रुद्राय वास्तोष्पतय इत्येतामृचं जपेदन्यां वा रौद्रीम् ॥ २३ ॥ यदि गत्यन्तराभावात् प्रविशेत् 'नमो रुद्राये'त्यादिकामृचं जपेत् अन्यां वा रौद्रीम् 'इमा रुद्राय तवसे' इत्यादिकाम् । अत्र वाजसनेयगृह्ये—'वनं प्रवेक्ष्यन्ननुमन्त्रयते 'नमो रुद्राय वनसदे स्वस्ति मा सम्पारये'ति पन्थानमारोक्ष्यन्ननुमन्त्रयते 'नमो रुद्राय पथिषदे स्वस्ति मा सम्पारये'ति अपः प्रवेक्ष्य'न्ननुमन्त्रयते नमो रुद्रायाप्सुषदे स्वस्ति मा सम्पारये'ति।तस्माद्यत्किञ्चन कर्म कुर्व'न्नमो रुद्राये'त्येव कुर्यात्. 'सर्वो ह्येष रुद्र' इति श्रुतेरिति । भारद्वाजगृह्येऽप्यस्मिन्विषये क्रियानेव भेदः ॥ २४ ॥ *नाब्राह्मणायोच्छिष्टं प्रयच्छेत् ॥ २५ ॥ अब्राह्मणः शूद्रः । 'न शूद्रायोच्छिष्टमनुच्छिष्टं वा दद्या'दिति वासिष्ठे दर्शनात् तस्मा उच्छिष्टं न प्रयच्छे'दित्यनाश्रितविषयम् ॥ २५ ॥ *यदि प्रयच्छेद्दन्तान्स्कुप्त्वा तस्मिन्नवधाय प्रयच्छेत् ॥ २६ ॥ इदमाश्रितविषयम् । दन्तान्नखेन स्कुप्त्वा प्रयच्छेत् दन्तान्नखेनावलिख्य तन्मल तस्मिन्नुच्छिष्टे निधाय प्रयच्छेत् । 'स्कुप्त्वे'ति स्कुभ्नोतेः क्त्वाप्रत्यये छान्दसं भकारस्य चर्त्वम् । स्कुभ्नोतेर्वा पकार उपसर्जनः ॥२६॥ *क्रोधादींश्च भूतदाहीयान्दोषान्वर्जयेत् ॥२७॥ क्रोधाद्यो भूतदाहीया अध्यात्मपटले व्याख्याताः । तद्वचनं योगिविषयमित्ययोगिनोऽपि स्नातकस्य क्रोधादिनिवृत्त्यर्थमिदं वचनम् । इदमेव तदुभयार्थमस्तु योग्यर्थमयोग्यर्थं च । एवं सिद्धे तद्वचनं क्रोधादिवर्जनस्य योगाङ्गत्वप्रतिपादनार्थम् । तेन क्रोधाद्यनुष्ठाने योगसिद्धिर्न भवति । न पुनः स्नातकव्रतलोपप्रायश्चित्तमिति ॥ २७ ॥

॥ इति एकत्रिंशत्तमी खण्डिका ॥ प्र० १ प० ११ ख० ३१ ॥

---

*प्रवचनयुक्तो वर्षाशरदं मैथुनं वर्जयेत् ॥ १ ॥ प्रवचनमध्यापनम्। तेन युक्तो वर्षासु शरदि च मैथुन वर्जयेत् ऋतावपि ॥ १ ॥ *मिथुनीभूय च न तया सह सर्वां रात्रिं शयीत ॥ २ ॥ मिथुनीभूय मैथुनं कृत्वा तया भार्यया सह तां रात्रिं सर्वां न शयीत ॥ २ ॥ *शयानश्चाध्यापनं

वर्जयेत् ॥ ३ ॥ दिवा नक्तं च शयानस्याध्यापनप्रतिषेधः । स्वयं तु धारणार्थमधीयानस्य नास्ति दोषः ॥ ३ ॥ *न च तस्यां शय्यायामध्यापयेद्यस्यां शयीत ॥ ४ ॥ यस्यां शय्यायां भार्यया सह शयीत रात्रौ तस्यां शय्यायामासीनोऽपि नाध्यापयेत् ॥४॥ *अनाविःस्रगनुलेपणस्स्यात् ॥ ५॥ आविर्भूते प्रकाशिते स्रगनुलेपने यस्य एवंभूतो न स्यात् । णत्वं पूर्ववत् ॥ ५ ॥ *सदा निशायां दारं प्रत्यलङ्कुर्वीत ॥६॥ 'दारं प्रती'ति वचनादुपगमनार्थमलङ्करणम् । तेन भार्याया अशक्त्यादिना उपगमनायोग्यत्वे नायं नियमः ॥ ६ ॥ *सशिरा वमज्जनमप्सु वर्जयेत् ॥ ७ ॥ वमज्जममवमज्जनम् । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो'रित्यकारलोपः । तत्सशिरा अवमज्जनं वर्जयेत् सह शिरसा स्नानं न कुर्यात् । अवगाहनविषयः सर्वे स्नातकव्यतिरिक्ते चरितार्थाः नैमित्तिकाश्च । स्नातकस्य तु नित्यस्नानमवगाहनरूपं न भवतीत्याचार्यस्य पक्षः ॥७॥ *अस्तमिते च स्नानम् ॥ ८ ॥ अस्तमित आदित्ये सर्वप्रकारं स्नानं वर्जयेत् ॥८॥ *पालाशमासनं पादुके दन्तप्रक्षालनमिति च वर्जयेत् ॥ ९ ॥ पालाशमासनादि वर्जयेत् । दन्तप्रक्षालनं दन्तकाष्ठम् । इतिशब्दः प्रकारे । तेनान्यदपि गृहोपकरणं पालाशं वर्जयेत् ॥ ९ ॥ *स्तुतिं च गुरोस्समक्षं यथा सुस्नातमिति ॥ १० ॥ 'सुस्नात'मित्यादिकां च स्तुतिं गुरोस्सन्निधौ वर्जयेत् ॥ १० ॥ *आ निशाया जागरणम् ॥ ११ ॥ निशा रात्रेर्मध्यमो भागः । आ तस्मात् जागृयात् न स्वप्यात् ॥ ११ ॥ *अनध्यायो निशायामन्यत्र धर्मोपदेशाच्छिष्येभ्यः ॥ १२ ॥ निशायामनध्यायः अध्ययनमध्यापनं च न कुर्वीत् । शिष्येभ्यस्तु धर्मोपदेशोऽनुज्ञायते ॥ १२ ॥ *मनसा वा स्वयम् ॥ १३ ॥ निशायामनध्यायस्य प्रतिप्रसवः मनसा वा स्वयं चिन्तयेदिति ॥ १३ ॥ * ऊर्ध्वमर्धरात्रादध्यापनम् ॥ १४ ॥ अयमपि प्रतिप्रसवः । निशायामपि षोडश्या नाडिकाया आरभ्याध्यापनं भवतीति ॥ १४ ॥ * नापररात्रमुत्थायानध्याय इति संविशेत् ॥ १५ ॥ रात्रेस्तृतीयो भागोऽपररात्रः । ऊर्ध्वमर्धरात्रादुत्थायाध्यापयन्नपररात्रं न संविशेत् न शयीत । यद्यपि तस्मिन्नष्टम्यादिरनध्यायः प्राप्तो भवति । किं पुनःस्वा-

ध्याये । तथा च मनुः—'न निशान्ते परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत्' इति ॥ १५ ॥ *काममुपाश्रयीत ॥१६॥ अनेन स्तम्भाद्युपाश्रयणेनासीनस्य स्वापोऽनुज्ञायते । तत्र रेफलोपश्छान्दसः । तथा शकारस्य द्विर्वचनम् ॥१६॥ *मनसा वाधीयीत ॥१७॥ अयमप्यूर्ध्वमर्धरात्रादुत्थायाध्यापयतोऽनध्यायप्राप्तावेवोच्यते । मनसा प्राप्तं प्रदेशमधीयीत स्वयं चिन्तयेत । अपाश्रित्य वा स्वप्यात् ॥१७॥ *क्षुद्रान् क्षुद्राचरितांश्च देशान्न सेवेत ॥१८॥ क्षुद्रानल्पकान् । पुरुषान्न सेवेत । क्षुद्रैर्निषादादिभिरधिष्ठितांश्च देशान्न सेवेत ॥१८॥ *सभास्समाजांश्च ॥१९॥ सभास्समाजाश्च व्याख्याताः । तान्न सेवेत ॥१९॥ *समाजं चेद्गच्छेत्प्रदक्षिणीकृत्यापेयात् ॥२०॥ यद्यर्थात् समाजं गच्छेत् तं प्रदक्षिणीकृत्यापेयादपगच्छेत् ॥२०॥ *नगरप्रवेशनानि च वर्जयेत् ॥२१॥ बहुवचननिर्देशात् बहुकृत्वो नगरं न प्रवेष्टव्यम् । यदाकदाचिद्यादृच्छिके प्रवेशे न प्रायश्चित्तम् ॥२१॥ *प्रश्नं च न विब्रूयात् ॥२२॥ विविच्य वचनं विवचनं निर्णयः । पृष्टमर्थं न विविच्य ब्रूयादिदमित्थमिति । दुर्निरूपार्थविषयमिदम् ॥२२॥ *अथाप्युदाहरन्ति ॥२३॥ अपि चास्मिन्नर्थे श्लोकमुदाहरन्ति ॥२३॥ *मूलं तूलं वृहति दुर्विवक्तुः प्रजां पशूनायतनं हिनस्ति । धर्मप्रह्लाद न कुमालनाय रुदन् ह मृत्युर्व्युवाच प्रश्नम् । इति ॥२४॥ दुर्निरूपमर्थं सहसा निर्णीय यो दुर्विवक्ति अन्यथा निर्णयति तस्य दुर्विवक्तुस्तदेव दुर्वचनं मूलं तूलं च वृहति । मूलं पितृधनम् । तूलमागामिनी सम्पत् । तदुभयमपि वृहति उत्पाटयति । दन्तोष्ठ्यो वकारः । किमेतावदेव । न । प्रजां पुत्रादिकाम् । पशून् गवादिकान् । आयतनं गृहं हिनस्ति । अतो दुर्वचनसम्भवात् प्रश्नमात्रमेव न विब्रूयादिति । अत्रेतिहासः । कस्यचिदृषेर्धर्मप्रह्लादः कुमालनश्चेति द्वौ शिष्यावास्ताम् । तौ कदाचिदरण्यान्महान्तौ समिद्भारावाहृत्य श्रमाद्दृष्टिपथ एवाचार्यगृहे प्राक्षिपताम् । तयोरेकेनाक्रान्त आचार्यस्य शिशुः पुत्रो मृतः । ततः शिष्यावाहूयाचार्यः पप्रच्छ । केनायं मारित इति । तावुभावपि न मयेत्यूचतुः । पतितस्य प-

रित्यागमदुष्टस्य परिग्रहं कर्तुमशक्नुवन्नृषिर्मृत्युमाहूय पप्रच्छ ‘केनायं व्यापादित इति’। ततो धर्मसङ्कटे पतितो मृत्यूरुदन्नेव प्रश्नं व्युवाच विविच्य कथितवान्। हे धर्मप्रह्राद न कुमालनाय। षष्ठ्यर्थे चतुर्थी। कुमालनस्य नेदं पतनीयमिति। धर्मप्रह्राद त्वयेदं कृतमिति वक्तव्ये इतरस्य नास्तीत्युक्तम्। तथापीतरस्यास्तीत्यर्थाद्गम्यते। इति रुदन् ह व्युवाचेति। हशब्द ऐतिह्यत्वद्योतनार्थः। प्रह्रादशब्दे हकारात्परो रेफः ॥२४॥ *** गार्दभं यानमारोहणे विषमारोहणावरोहणानि च वर्जयेत्** ॥२५॥ गर्दभयुक्तं यानं गार्दभं शकटादि। आरोहणे वर्जयेत नारोहेत्। तथा विषमेषु निम्नोन्नतेष्वारोहणमवरोहणं च वर्जयेत्। उन्नतेष्वारोहण निम्नेष्वेवावरोहणम् ॥२५॥ *** बाहुभ्यां च नदीतरणम्** ॥२६॥ तरणं तरः। बाहुभ्यां नद्यास्तरणं वर्जयेत्। ‘बाहुभ्या’मिति वचनात् नावादिना न दोषः॥२७॥ ***नावं च सांशयिकीम्** ॥२७॥ भिद्यते न वेति संशयमापन्ना सांशयिकी नौः। जीर्णां नावं वर्जयेत्। ‘नावा’मिति षष्ठ्यन्तपाठे नावां मध्ये सांशयिकीं नावं वर्जयेत् ॥ २७ ॥ *** तृणच्छेदनलोष्टविमर्दनष्ठीवनानि चाकारणात्** ॥ २८॥ तृणच्छेदनादि चाकारणाद्वर्जयेत् न कुर्यात्। तृणच्छेदनस्याग्न्यभिज्वलनादि कारणम्। ष्ठीवनस्य कारण प्रतिश्यायादि। इतरत्तस्य मृग्यम् ॥ २८॥ *** यच्चान्यत्परिचक्षते यच्चान्यत्परिचक्षते** ॥ २९ ॥ यच्चान्यदेवं युक्तमाचार्याः परिचक्षते वर्जयन्ति तदप्यक्षक्रीडादि वर्जयेत्। द्विरुक्तिः प्रश्नपरिसमाप्तिकृता ॥ २९ ॥

॥ इति द्वात्रिंशत्तमी खण्डिका ॥ प्र० १ प० ११ ख० ३२ ॥

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां प्रथमप्रश्ने एकादशः पटलः ॥ ११ ॥

---

**प्रथमः प्रश्नश्च समाप्तः**

# द्वितीयप्रश्नप्रारम्भः

*पाणिग्रहणादधि गृहमेधिनोर्व्रतम् ॥ १ ॥ पूर्वस्मिन् प्रश्ने आद्ययोः पटलयोः प्रायेण ब्रह्मचारिणो धर्मा उक्ताः । इतरेष्वष्टसु सर्वाश्रमाणाम् । एकादशे समावृत्तस्य । इदानीं पाणिग्रहणादारभ्य कर्तव्यानि कर्माण्युच्यन्ते । पाणिर्यस्मिन्नहनि गृह्यते तत्पाणिग्रहणम् । अधिशब्द ऊर्ध्वार्थे वर्तते । तस्मादूर्ध्वं गृहमेधिनोर्गृहस्थाश्रमवतोर्यद्व्रतं नियतं कर्तव्यम् । जातावेकवचनम् । तदुच्यते । 'पाणिग्रहणादधी'ति वचनं 'भार्यादिरग्निर्दायादिर्वे'ति शास्त्रान्तरोक्तो विकल्पो मा भूदिति । 'गृहमेधिनो'रिति द्विवचनमन्यतरमरणे मा भूदिति । (अनेकभार्यस्य एकस्यामपि सत्यां भवत्येव । अनेकाश्रितस्याधिकारस्य विद्यमानत्वाच्छास्त्रान्तरत्वाच्च ।) वैश्वदेवं तु विधुरा अपि कुर्वन्ति ॥ १ ॥ *काल्योर्भोजनम् ॥ २ ॥ काल्योरुभयोरपि भोजनं कर्तव्यम् । सायं प्रातश्च । अन्तरेण तु परिसङ्ख्येयम् । भोजनस्य रागप्राप्तत्वात् । मानवे च स्पष्टमुक्तम्—'सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम् । नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः ॥' इति । अन्ये तु नियमं मन्यन्ते । शक्तौ सत्यामपि गृहमेधिनोरुभयोरपि काल्योरवश्यं भोक्तव्यं प्राणाग्निहोत्रस्यालोपायेति । तथा च बौधायनः—'गृहस्थो ब्रह्मचारी वा योऽनश्नंस्तु तपश्चरेत् । प्राणाग्निहोत्रलोपेन ह्यवकीर्णी भवेत्तु सः ॥' इति । (अन्यत्र प्रायश्चित्तात् । प्रायश्चित्ते तु तदेव विधानमिति )॥ २ ॥ *अतृप्तिश्चान्नस्य ॥ ३ ॥ सुहितार्थयोगे करणे षष्ठी भवति । 'पूरणगुणसुहितार्थे'ति ज्ञापनात् । अन्नेन तृप्तिं न गच्छेतां । यावत्तृप्ति न भोक्तव्यम् ॥ ३ ॥ *पर्वसु चोभयोरुपवासः ॥ ४ ॥ पक्षसन्धिः पर्व । इह तु तदुक्तमहर्गृह्यते । तेषु पर्वसूभयोर्दम्पत्योरुपवासः कर्तव्यः । उपवासो भोजनलोपः ॥ ४ ॥ अविशेषादुभयोरपि काल्योः प्राप्तावाह—*औपवस्तमेव कालान्तरे भोजनम् ॥ ५ ॥ यत्कालान्तरे एकस्मिन् काले भोजनं तदप्यौपवस्तं

---

'१' 'वस. स्तम्भे' इत्यस्मादौपवादिकाद्भावे क्ते स्वार्थेऽणि च सति औपवस्तमिति रूप,

मेष उपवास एव । 'औपवस्तं तूपवासः' इति निघण्टुः । तदपि दिवा न रात्रौ । श्रौते तथा दर्शनात् । 'न तस्य सायमश्नीया'दिति । 'तदिह एवमत ऊर्ध्व'मित्यादि गृह्ये यदुक्तं तत्रत्य उपवासो व्याख्यातः ॥५॥ *तृप्तिश्चान्नस्य ॥६॥ पर्वसु सकृद्भुञ्जानौ यावत्तृप्ति भुञ्जीयाताम् ॥६॥ *यच्चैनयोः प्रियं स्यात्तदेतस्मिन्नहनि भुञ्जीयाताम् ॥७॥ 'एतस्मिन्नहनी'ति न वक्तव्यम् । प्रकृतत्वाद्यथा 'तृप्तिश्चान्नस्ये'ति पर्वसु भवति, एवमिदमपि भविष्यति । किं च 'पर्वस्वि'ति बहुवचनात्तस्य प्रकृतस्य 'एतस्मिन्नहनी'त्येकवचनान्तेन प्रत्यवमर्शो नातीव समञ्जस । तस्माद्व्यवहितमपि पाणिग्रहणमिह प्रत्यवमृश्यते । एतदर्थमेव च गृह्ये 'एतदहर्विजानीयाद्यदहर्भार्यामावहत' इत्युक्तम् । एतस्मिन् पाणिग्रहणेऽहनि यदनयोर्दम्पत्योः प्रियं तत् भुञ्जीयाताम् । न तु 'नात्मार्थमभिरूपमन्नं पाचये'दिति निषेधस्यायं विषय इति । प्रतिसंवत्सरं चैतत्कर्तव्यम् । यथा चैत्रे मासि स्वातौ कृतविवाहस्य परस्मिन्नपि संवत्सरे तस्मिन्मासि स्वातौ । एवं हि तद्विवाहहरिति भवति । प्रतिमासं तु नक्षत्रागमेऽपि चैत्रादिभेदान्न तदेवेति प्रतिपत्तिः । तस्मात् प्रतिसंवत्सरमिदं विवाहनक्षत्रे कर्तव्यम् । यथा राज्ञामभिषेकनक्षत्रमेव हि गृहमेधिनोर्विवाहनक्षत्रमिति ॥७॥ *अधश्च शयीयाताम् ॥८॥ एतस्मिन्नेवाहनि स्थण्डिलशायिनौ स्याताम् ॥८॥ *मैथुनवर्जनं च ॥९॥ एतस्मिन्नहनि न कर्तव्यम् ॥९॥ *श्वो भूते स्थालीपाकः ॥१०॥ स्थालीपाकश्च कर्तव्यः परेद्युः ॥१०॥ *तस्योपचारः पार्वणेन व्याख्यातः ॥११॥ तस्य स्थालीपाकस्योपचारः प्रयोगप्रकारः पार्वणेन व्याख्यातः । एतदेव ज्ञापयति न सामयाचारिकेषु पार्वणातिदेशः प्रवर्तत इति । केचित्तु सर्वमेवैतत्पर्वविषयं मन्यन्ते । तेषामुक्तो दोषः । 'पार्वणेन व्याख्यात' इति चानुपपन्नम् । न हि स एव तेन व्याख्यातो भवति । 'श्वो भूते स्थालीपाक' इति च व्यर्थम् । 'उपोषिताभ्यां पर्वसु कार्य' इति पूर्वमेवोक्तत्वात् । 'एतदहर्विजानीया'दिति चास्य प्रयोजनं कल्पसे चिन्त्यम् ॥११॥ *नित्यं लोक उपदिशन्ति ॥१२॥ लोके शिष्टाचारसिद्धमेतत्कर्म नित्यं प्रतिसंवत्सरं कर्तव्यमिति शि

यातनामनेकार्थत्वादभोजनं तृप्तिरिति च वेदितव्यम् ।

ष्टा उपदिशन्ति । अपर आह—वक्ष्यमाण कर्म शिष्टाचारसिद्धं नित्यं सां वत्रिकं शिष्टा उपदिशन्ति ॥ १२॥ *यत्र क्व चाग्निमुपसमाधास्यन् स्यात्तत्र प्राचीरुदीचीश्च तिस्रस्तिस्रो रेखा लिखित्वाद्भिरवोक्ष्याग्निमुपसमिन्ध्यात् ॥ १३॥ होमप्रसङ्गादिदमुच्यते। यत्र क्व च गार्ह्ये सामयाचारिके वा कर्मणि गृहेऽरण्ये वाग्निमुपसमाधास्यन् प्रतिष्ठापयिष्यन् स्यात्तत्र पूर्वं प्राचीः प्रागग्रास्तिस्रो रेखा विलिखेत। तत उदगग्रास्तिस्र । एवं तिस्रो लेखा विलिखित्वाद्भिरवोक्षेत् । अथाऽग्निं श्रोत्रियागारादाहृत्य प्रतिष्ठाप्योपसमिन्ध्यात् समिन्धीत काष्ठैरभिज्वलयेत्। तत्र 'पुरस्तादुदग्वोपक्रमस्तथापवर्ग' इति परिभाषितम्। उपदेशक्रमाच्च प्राच्यः पूर्वं लेखा लेखनीयाः ततश्चोदीच्यः । 'प्राची पूर्वमुदक्सस्थ दक्षिणारम्भमालिखेत् । अथोदीची पुरस्सस्थ पश्चिमारम्भमालिखेत ॥' अन्ये तु प्राचीरुद्गारम्भ दक्षिणान्तमालिखन्ति ॥ १३ ॥ * उत्सिच्यैतदुदकमुत्तरेण पूर्वेण वान्यदुपदध्यात् ॥ १४ ॥ एतदवोक्षणशेषमुदकमग्नेरुत्तरत पूर्वतो वा उत्सिञ्चेत् । उत्सिच्यान्यदुदकं पात्रस्थमुपदध्यात्तत्रैव ॥ १४ ॥ *नित्यमुदधानान्यद्भिररिक्तानि स्युर्गृहमेधिनोर्व्रतम् ॥ १५॥ गृहे उदधानान्युदपात्राणि घटादीनि। तानि सदाद्भिररिक्तानि स्यु । एतदपि गृहमेधिनोर्व्रतम् । पुनः 'गृहमेधिनो'रिति वचनमस्मिन् कर्मणि स्वयं कर्तृत्वमेव यथा स्यात् प्रयोजककर्तृत्वं मा भूदिति । अन्य आह—पुन'र्गृहमेधिनो'रिति वचनात् पूर्वसूत्र ब्रह्मचारिविषयेऽपि 'सावित्र्या समित्सहस्रमादध्या'दित्यादौ भवति। पाके तु स्त्रिया न भवति । 'उपसमाधास्य'न्निति लिङ्गस्य विवक्षितत्वात । आर्याः प्रयताः' इत्यादौ भवतीति ॥ १५ ॥ *अहन्यसंवेशनम् ॥ १६ ॥ संवेशनं मैथुनं तदहनि न कर्तव्यम । १६ ॥ ऋतौ च सन्निपातो दारेणानुव्रतम् ॥ १७ ॥ दर्शनादारभ्य षोडशाहोरात्रा ऋतु । तत्र च सन्निपात संयोगो दारेण सह कर्तव्य । छान्दसमेकवचनम् । अनुव्रतं शास्त्रतो नियमो व्रतं तदनुरोधेन । तत्र मनु —'ऋतु स्वाभाविक स्त्रीणा रात्रय षोडश स्मृता । चतुर्भिरितरैस्सार्धमहोभिस्सद्विगर्हितै ॥ तासामाद्याश्चतस्रस्तु निन्द्या एकादशी च या । त्रयोदशी च शेषास्तु प्रशस्ता दश रात्र-

यः । अमावास्यामष्टमीं च पौर्णमासीं चतुर्दशीम् ॥ ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः ।' इति । याज्ञवल्क्यस्तु,—एवं गच्छन् स्त्रियं क्षामां मघां मूलं च वर्जयेत् ।' इति । आचार्यस्तु, चतुर्थीप्रभृति गमनमाह—'चतुर्थीप्रभृत्याषोडशीमुत्तरामुत्तरां युग्मां प्रजानिःश्रेयसमृतौ तु गमनं'मभ्युपदिशन्ति । तदिह षोडशसु रात्रिष्वादितस्तिस्रस्सर्वथा वर्ज्याः । चतुर्थ्येकादशी त्रयोदशी चाचार्येणानुज्ञाताः मनुना निषिद्धाः । इतरासु दशसु युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु । तत्र चो'त्तरामुत्तरा'मिति वचनात् षोडश्यां रात्रौ मघादियोगाभावे गच्छत उत्कृष्टपुत्रो भवति । चतुर्थ्यामधमः । मध्ये कल्प्यम् । एवं पञ्चदश्यामुत्कृष्टा दुहिता । पञ्चम्यामधमा । मध्ये कल्प्यम् । षोडश्स्वेव गमनं गर्भहेतु । तत्रापि प्रथमम् । एवं स्थिते नियमविधिरयं योग्यत्वे सत्यृताववश्यं सन्निपतेत् । असन्निपतन् पुत्रोत्पत्तिं निरुन्धानः प्रत्यवेयादिति । तथा च दोषस्मृति—'ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति । तस्या रजसि तं मासं पितरस्तस्य शेरते ॥' इति । पुत्रगुणार्थितया पूर्वां पूर्वां वर्जयतो न दोषः अन्ये तु परिसङ्ख्यां मन्यन्ते । ऋतावेव सन्निपतेन्नान्यत्रेति । तेषामृतावनियमादगमनेऽपि दोषाभावाद्दोषस्मरणमनुपपन्नं स्यात् । सर्वथा विधिर्न भवति । रागप्राप्तत्वात्सन्निपातस्य ॥ १७ ॥ *अन्तरालेऽपि दार एव ॥ १८ ॥ अन्तरालं मध्यम् । ऋत्वोरन्तराले मध्येऽपि सन्निपातः स्यात् दार एव सकामे सति । यद्यप्यात्मनो जितेन्द्रियतया न तादृशं पारवश्यम् ; तथापि भार्यायामेवमिच्छन्त्यां तद्रक्षणार्थमवश्यं सन्निपतेदिति । वक्ष्यति चा'प्रमत्ता रक्षथ तन्तुमेत'मित्यादि । अनुव्रतमित्यनुवृत्तेः प्रतिषिद्धेषु दिनेषु न भवति । १८ ॥ *ब्राह्मणवचनाच्च संवेशनम् ॥ १९ ॥ यदिदमनन्तरोक्तं संवेशनं तत्र ब्राह्मणवचनं प्रमाणं 'काममाविजनितोस्संभवामे'ति ॥ १९ ॥ *स्त्रीवाससैव सन्निपातस्स्यात् ॥ २० ॥ एवकारो भिन्नक्रमः । स्त्र्युपभोगार्थं वासः स्त्रीवासः । तेन सन्निपात एव स्यात् । तेन वाससा न सुप्रक्षालितेनापि ब्रह्मयज्ञादि कर्तव्यमिति यावत् ॥ २० ॥ *यावत्सन्निपातं चैव सहशय्या ॥ २१ ॥ यावत्सन्निपातमेव दम्पत्योस्सहशयनम् ॥ २१ ॥

*ततो नाग्नये ॥ २२ ॥ ततः पृथक्शयीयाताम् ॥ २२ ॥ *उदकेनोपस्पर्शनम् ॥ २३ ॥ ततो द्वयोरप्युदकोपस्पर्शेन स्नानं कर्तव्यम् । इदमृतकाले ॥ २३ ॥

॥ इति प्रथमा खण्डिका ॥ प्र०२ प०१ ख०१ ॥

---

अपि वा लेपान्प्रक्षाल्याचम्य प्रोक्षणमङ्गानाम् ॥ १ ॥ अपि वा रेतसो रजसश्च ये लेपास्तानद्भिर्मृदा च प्रक्षाल्याचम्य अङ्गाना शिरःप्रभृतीनां प्रोक्षणं कर्तव्यम् । रुचितो व्यवस्था । यावता प्रयतं मन्यते ॥ १ ॥ *सर्ववर्णानां स्वधर्मानुष्ठाने परमपरिमितं सुखम् ॥ २ ॥ सर्वेषामेव वर्णानां ब्राह्मणादीनां चतुर्णां ये स्वधर्मा वर्णप्रयुक्ता आश्रमप्रयुक्ता उभयप्रयुक्ता वा तेषामेवैगुण्येनानितानुष्ठाने सति परमुत्कृष्टम् अपरिमितमक्षयं सुखं स्वर्गाख्यं भवति ॥ २ ॥ न केवलमेतावत् । किं तर्हि—*ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यते तच्चक्रवदुभयोर्लोकयोः सुख एव वर्तते ॥ ३ ॥ ततः सुखानुभवानन्तरं परिवृत्तिरिह लोके जन्म भवति । तस्या च कर्मणो यः फलशेषोऽनुभुक्तास्तेन । जातिं ब्राह्मणादिकां विशिष्टं वा कुले जन्म । रूपं कान्तिम् । वर्णं हेमादितुल्यम् । बलं प्रतिपक्षनिग्रहक्षमम् । मेधा ग्रन्थग्रहणशक्तिम् । द्रव्याणि स्वर्णादीनि । धर्मानुष्ठानम् । इतिकरणाच्चान्यदेव यैक्तमेतत्सर्वं प्रतिपद्यते । सर्वत्र धर्मशेषो हेतुः । कर्माणि भुज्यमानानि सावशेषाणि भुज्यन्ते । ऐहिकस्य शरीरग्रहणादेरपि कर्मफलत्वाद्धर्मानुष्ठानं प्रतिपद्यत इत्युक्तम् । यदा चैव तदा सर्ववर्णानां स्वधर्मानुष्ठानं इत्यादि प्रतिपद्यत इत्यन्तं पुनर्भवतीत्यनुक्तसिद्धम् । तच्चक्रवदुभयोर्लोकयोरिह चामुष्मिंश्च सुख एव वर्तते न जातु दुःखे वर्तते सुखानुवर्तनेनैवावृत्तिर्भवतीत्यर्थः ॥ ३ ॥ शरीरोत्पत्तिसंस्कारा अप्यावश्यका इति दर्शयितुं दृष्टान्तमाह—*यथौषधिवनस्पतीनां बीजस्य क्षेत्रकर्मविशेषे फलपरिवृद्धिरेवम् ॥ ४ ॥ चलोपोऽत्र द्रष्टव्यः । यथा चौषधीनां व्रीह्यादीनां वनस्पतीनां चाम्रादीनां बीजस्य क्षेत्रविशेषे कर्मविशेषे संस्कारविशेषे च क्षेत्रस्य वा कृष्यादौ कर्मविशेषे फलपरिवृद्धिर्भवति । त एव व्रीहय ऊषर उप्ता न प्ररोहन्ति । कृ

त्यादिपरिकल्पिते तु क्षेत्रे उत्पन्ना सङ्करयो भवन्ति । एवं पुत्रेऽपि गर्भाधानादिसंस्कारसम्पन्ने द्रष्टव्यम् ॥ ४ ॥ ***एतेन दोषफलपरिवृद्धिरुक्ता ॥ ५ ॥** एतेनैव न्यायेन दुष्टकर्मफलपरिवृद्धिरप्युक्ता वेदितव्या । तत्रेहेन पठनीयं 'सर्ववर्णानां स्वधर्मानुष्ठाने परमपरिमितं सुखं ततः परिवृत्तौ कर्मफलशेषेण दुष्टां जात्यादिकामद्रव्यान्तामधर्मानुष्ठानमिति प्रतिपद्यते । तच्चक्रवदुभयोर्दुःख एव वर्तते । यथौषधिवनस्पतीनां बीजस्य क्षेत्रकर्मविशेषाभावे फलहानिरेवमिति ॥ ५ ॥ दोषफलपरिवृद्धावुदाहरणमाह — ***स्तेनोऽभिशस्तो ब्राह्मणो राजन्यो वैश्यो वा परस्मिँल्लोके परिमिते निरये वृत्ते जायते चाण्डालो ब्राह्मणः पौल्कसो राजन्यो वैणो वैश्यः ॥ ६ ॥** स्तेनः सुवर्णचोरः । अभिशस्तो ब्रह्महा । स्तेनोऽभिशस्तो वा ब्राह्मणादिरमुष्मिँल्लोके परिमिते निरये दोषफलमनुभूय तस्मिन् वृत्ते परिक्षीणे ब्राह्मणश्चाण्डालो जायते । राजन्यः पौल्कसः । शूद्रात्क्षत्रियायां जातः पुल्कसः । स एव पौल्कसः । प्रज्ञादित्वादण् । वैश्यो वैणः । वेणुना वर्तको वैणः ॥ ६ ॥ ***एतेनान्ये दोषफलैः कर्मभिः परिध्वस्ता दोषफलासु योनिषु जायन्ते वर्णपरिध्वंसायाम् ॥ ७ ॥** वर्णपरिध्वंसा वर्णेभ्यः प्रच्यवनं तस्यां वर्णपरिध्वंसायाम् । यथा ब्राह्मणादयश्चाण्डालाद्या जायन्ते । एतेन प्रकारेण स्तेनाभिशस्ताभ्याम् अन्येऽपि दोषफलैः कर्मभिर्दोषफलासु सूकरादिषु योनिषु जायन्ते । परिध्वस्ताः स्वजातिपरिभ्रष्टा इत्यर्थः । ते तथावगन्तव्याः इति ॥ ७ ॥ ***यथा चाण्डालोपस्पर्शने सम्भाषायां दर्शने च दोषस्तत्र प्रायश्चित्तम् ॥ ८ ॥** चण्डालोपस्पर्शने दोषो भवति । तथा सम्भाषायां दर्शने च । उपसमस्तमपि चण्डालग्रहणमभिसम्बध्यते । तत्र सर्वत्र प्रायश्चित्तं वक्ष्यते ॥ ८ ॥ ***अवगाहनमपामुपस्पर्शने सम्भाषायां ब्राह्मणसम्भाषा दर्शने ज्योतिषां दर्शनम् ॥ ९ ॥** उपस्पर्शने सत्यवगाहनमपां प्रायश्चित्तम् । ऋजुनी उत्तरे द्वे । स्वकर्मप्रशंसाप्रकरणे, प्रायश्चित्ताभिधानं स्वकर्मच्युतानां निन्दार्थम् । एवंनाम निन्दितश्चाण्डालः । यस्य दर्शनेऽपि प्रा-

याश्चत्त स एव जायते स्वकर्मच्युतो ब्राह्मण इति ॥ ९ ॥

॥ इति द्वितीया खण्डिका ॥ प्र० २ प० १ ख० ३ ॥

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां द्वितीयप्रश्ने प्रथमः पटलः ॥ १ ॥

---

**आर्याः प्रयता वैश्वदेवेऽन्नसंस्कर्तारः स्युः ॥ १ ॥** आर्यास्त्रैवर्णिकाः । 'आर्याधिष्ठिता वा शूद्रा' इत्युत्तरत्र दर्शनात् । प्रयताः स्नानादिना शुद्धाः । वैश्वदेवे गृहमेधिनोर्भोजनार्थे पाके । 'गृहमेधिनो यदश्नीयस्ये'ति दर्शनात् । अन्नसंस्कर्तारः स्युः । अन्नं भक्ष्यभोज्यपेयादिकं संस्कुर्युः । न स्वयं नापि स्त्रियः ॥ १ ॥ ***भाषां कासं क्षवथुमित्यभिमुखोऽन्नं वर्जयेत् ॥ २ ॥** भाषा' शब्दोच्चारणम् । कासः कण्ठे घुरघुराशब्दः क्षवथुः क्षुतम् । एतत्त्रितयमन्नाभिमुखो न कुर्यात् । 'संस्कर्तारः स्यु'रिति बहुवचनं प्रकृते 'वर्जये'दित्येकवचनं प्रत्येकमुपदेशार्थम् ॥ २ ॥ ***केशानङ्गं वासश्चालभ्याप उपस्पृशेत् ॥ ३ ॥** केशादीनात्मीयानन्यदीयान्वा । आलभ्य स्पृष्ट्वा । अप उपस्पृशेत् । नेदं स्नानम् । किं तर्हि । स्पर्शनमात्रम् । केशालम्भे पूर्वमप्युपस्पर्शनं विहितम् । इदं तु तत्रोक्तं वैकल्पिकं शकृदाद्युपस्पर्शनं वा भूमिरिति ॥ ३ ॥ ***आर्याधिष्ठिता वा शूद्रास्संस्कर्तारः स्युः ॥ ४ ॥** त्रैवर्णिकैराधिष्ठिता वा शूद्रास्संस्कर्तारः स्युः । प्रकरणादन्नस्येति गम्यते ॥ ४ ॥ ***तेषां स एवाचमनकल्पः ॥ ५ ॥** तेषां शूद्राणामन्नसंस्कारेऽधिकृतानां स एवाचमनकल्पो वेदितव्यः यस्यान्न पचन्ति । यदि ब्राह्मणस्य हृदयङ्गमाभिरद्भिः, यदि क्षत्रियस्य कण्ठगाभिरद्भिः, यदि वैश्यस्य तालुगाभिरद्भिर्योपस्पर्शनं भवति ॥ ५ ॥ ***अधिकमहरहः केशश्मश्रुलोमनखवापनम् ॥** शूद्राः पचन्तः प्रत्यहं केशादि वापयेयुः । इदमेषामधिकमार्येभ्यः ॥ ६ ॥ ***उदकोपस्पर्शनं च सह वाससा ॥ ७ ॥** सहैव वाससा स्नानं कुर्युः । आर्याणां तु परिहितं वासो निधाय कौपीनाच्छादनमात्रेणापि स्नानं भवति । शूद्राणामपि पाकादन्यत्र । तथा च मनुः—'न वासोभिस्सहाजस्रं नाविशाते जलाशये ।' इति ॥ ७ ॥ ***अपि वाष्टमीष्वेव पर्वसु वा**

**वपेरन्** ॥ ८ ॥ यदि वाष्टमीष्वेव वपेरन् केशादीन् पर्वस्वेव वा । न प्रत्यहम् 'वपेर'न्निति अन्तर्भावितण्यर्थः । वापयेरन्नित्यर्थः । तथा च लोमनखवापनमिति पूर्वत्र णिजप्रयुक्तम् ॥८॥ ***परोक्षमन्नं संस्कृतमग्नावधिश्रित्याद्भिः प्रोक्षेत्तद्देवपवित्रमित्याचक्षते** ॥ ९ ॥ यदि शूद्राः परोक्षमन्नं संस्कुर्युः आर्यैरधिष्ठिताः । तदा तत्परोक्षमन्नं संस्कृतं स्वयमग्नावधिश्रयेत् । अधिश्रित्याद्भिः प्रोक्षेत् । तदेवंभूतमन्नं देवपवित्रमित्याचक्षते । देवानामपि तत्पवित्रं किं पुनर्मनुष्याणामिति ॥ ९ ॥ ***सिद्धेऽन्ने तिष्ठन् भूतमिति स्वामिने प्रब्रूयात्** ॥ १० ॥ सिद्धे पक्वेऽन्ने तिष्ठन् पाचकोऽधिष्ठाता वा भूतमिति प्रब्रूयात् । यस्य तदन्नं तस्मै स्वामिने भूतं निष्पन्नमित्यर्थः ॥ १० ॥ ***तत्सुभूतं विराडन्नं तन्मा क्षायीति प्रतिवचनः** ॥ ११ ॥ तत्सुभूतमित्यादिप्रतिवचनो मन्त्रः । तदन्नं सुभूतं सुनिष्पन्नम् । विराट् विराजनसाधनम् । अन्नमशनम् । तच्च मा क्षायि क्षीणं माभूदित्यर्थः ॥ ११ ॥ ***गृहमेधिनो यदशनीयस्य होमा बलयश्च स्वर्गपुष्टिसंयुक्ताः** ॥ १२ ॥ गृहमेधिनो यदशनीयं पक्वमपक्वं वा उपस्थितं तस्यैकदेशेन होमा बलयश्च वक्ष्यमाणाः कर्तव्याः । स्वर्गः पुष्टिश्च तेषां फलमिति ॥ १२ ॥ ***तेषां मन्त्राणामुपयोगे द्वादशाहमधश्शय्या ब्रह्मचर्यं क्षारलवणवर्जनं च** ॥ १३ ॥ तेषां होमानां बलीनां च ये मन्त्रास्तेषामुपयोगे । उपयोगो नियमपूर्वकं विद्याग्रहणम् । तत्र द्वादशाहमधश्शय्या स्थण्डिलशायित्वम् । ब्रह्मचर्यं मैथुनवर्जनम् । क्षारलवणवर्जनं च भवति । उपयोक्तुरेव व्रतम् । अध्ययनाङ्गत्वात् । अन्ये तु, पत्न्या अपीच्छन्ति उपयोगं प्रयोगं तत्र च पत्न्या अपि सहाधिकार इति वदन्तः ॥ १३ ॥ ***उत्तमस्यैकरात्रमुपवासः** ॥ १४ ॥ उत्तमस्य 'उत्तमेन वैहायसम्'मिति वक्ष्यमाणस्य 'ये भूता प्रचरन्ति'त्यस्य एकरात्रमुपवासः कर्तव्यः ॥ १४ ॥ ***बलीनां तस्यतस्य देशे संस्कारो हस्तेन परिमृज्यावोक्ष्य न्युप्य पश्चात्परिषेचनम्** ॥ १५ ॥ बलीनां मध्ये तस्यतस्य बलेर्देशसंस्कारः कर्तव्यः । कः पुनरसौ । हस्तेन परिमार्जनमवोक्षणं च । तं कृत्वा बलिं निवपति । न्युप्य पश्चात् परिषेचनं कर्तव्यम् । उपदेशक्रमादेव सिद्धे पश्चाद्ग्रहणं मध्ये गन्धमाल्यादिदानार्थमित्याहुः । 'तस्यतस्ये'ति वचनं सत्य-

पि सम्भवे, एकदेव परिमार्जनमवोक्षणं च मा भूदेकस्मिन्देशे समवेतानामपि पृथक्पृथग्यथा स्यादिति ॥ १५ ॥ * औपासने पचने वा षड्भिराद्यैः प्रतिमन्त्रं हस्तेन जुहुयात् ॥ १६ ॥ यत्र पच्यते स पचनोऽग्निः। औपासनवतामौपासने विधुरादेः पचन इति व्यवस्थितो विकल्पः। अन्ये तु, तुल्यं विकल्पं मन्यन्ते। षड्भिराद्यैः 'अग्नये स्वाहा, सोमाय स्वाहा, विश्वेभ्यो देवेभ्यः स्वाहा, ध्रुवाय भूमाय स्वाहा, ध्रुवक्षितये स्वाहा, अच्युतक्षितये स्वाहा' इत्येते। एते हि मन्त्रपाठे पठिताः 'प्राग्विवाहमन्त्रेभ्यः विशिष्टनियममापक्षत्वग्रहणत्वात्तैस्सह न गृह्यन्ते। केचित् सौविष्टकृतमपि सप्तमं जुह्वति अग्नये स्विष्टकृते स्वाहेति औपसहविष्केषु तस्य सर्वत्र प्रवृत्तिरिति वदन्त । अन्ये तु सोमाय स्वाहेति न पठन्ति। सौविष्टकृतं षष्ठं पठन्ति। हस्तग्रहणं दर्व्यादिनिवृत्त्यर्थम् ॥ १६ ॥ * उभयतः परिषेचनं यथा पुरस्तात् ॥ १७ ॥ उभयतः पुरस्तादुपरिष्टाच्च परिषेचनं कर्तव्यम्। कथम्। यथा पुरस्तात् उक्तं गृह्ये 'अदितेऽनुमन्यस्वेत्यादि अन्वमꣳस्थाः प्रासावीरिति मन्त्रसन्नामः' इति च। सामयाचारिकेषु पार्वणेनातिदेशो न प्रवर्तत इति ज्ञापितत्वादप्राप्तविधिरयम्। अन्ये तु परिसङ्ख्यां मन्यन्ते। परिषेचनमेव वैश्वदेवे, नान्यत्तन्त्रमिति ॥ १७ ॥ * एवं बलीनां देशे देशे समवेतानां सकृत्सकृदन्ते परिषेचनम् ॥ १८ ॥ यथा पञ्चाणामाहुतीनां परिषेचनं तन्त्रमेवं बलयोऽपि य एकस्मिन् देशे समवेता 'उत्तरैर्ब्रह्मसदने' इत्यादयस्तेषामप्यन्ते परिषेचनं प्राप्तं 'पश्चात्परिषेचनं' मित्यनेन विहितं तत्सर्वान्ते सकृत्कर्तव्यं न प्रत्येकं पृथगिति। असत्यस्मिन् सूत्रे पूर्वत्र तस्यतस्येति वचनाद्यथा परिमार्जनमवोक्षणं च प्रत्येकं पृथक्पृथग्भवति तथा परिषेचनमपि स्यात्। अत उपदेशादेव य एकदेशस्था बलयस्तेषामेव सकृत्परिषेचनं न यादृच्छिकसमवेतानाम्। तेन यद्यप्युत्तरस्यां तरपूर्वदेशश्शय्यादेश, तथापि कामलिङ्गस्य पृथक्परिषेचनं भवति ॥ १८ ॥ * सति सूपसंसृष्टेन कार्याः ॥ १९ ॥ सति सूपे तत्संसृष्टा बलयः कार्याः। अन्ये त्वन्यैरपि व्यञ्जनैस्संसर्गमिच्छन्ति। तथा च बोधायनः—'काममितरेणायतने' इति। एष एव व्यञ्जनानां संस्कारस्यापि व्यञ्जनैरपूपेन च संसृष्टेन च बलयः कार्यास्सति सम्भव इति ॥ १९ ॥ * अपरणाग्नि स-

सप्तमाष्टमाभ्यामुदगपवर्गम् ॥ २०॥ अपरेणाग्निमग्नेः पश्चात् सप्तमाष्टमाभ्यां 'धर्माय स्वाहाऽधर्माय स्वाहे'त्येताभ्यां बलिहरणं कर्तव्यम्। उदगपवर्गम्। न प्रागपवर्गम् ॥ २० ॥ *उदधानसन्निधौ नवमेन ॥ २१ ॥ उदकं यत्र धीयते तदुदधानम्। मणिकाख्यम्। तस्य सन्निधौ नवमेन 'अद्भ्यः स्वाहे'त्यनेन ॥ २१ ॥ *मध्येऽगारस्य दशमैकादशाभ्यां प्रागपवर्गम् ॥२२॥ दशमैकादशाभ्यां ओषधिवनस्पतिभ्यः स्वाहा, रक्षोदेवजनेभ्यः स्वाहेत्येताभ्याम् ॥ २२ ॥ *उत्तरपूर्वे देशेऽगारस्योत्तरैश्चतुर्भिः ॥ २३॥ अगारस्य य उत्तरपूर्वो देशस्तत्रोत्तरैश्चतुर्भिः 'गृह्याभ्यः स्वाहा, अवसानेभ्यः स्वाहा, अवसानपतिभ्यः स्वाहा, सर्वभूतेभ्यः स्वाहे'त्येतैश्चतुर्भिः प्रागपवर्गमित्येव ॥ २३ ॥

इति तृतीया खण्डिका ॥ प्र०२ प०२ ख०३॥

* शय्यादेशे कामलिङ्गेन ॥ १ ॥ कामाय स्वाहा ॥ १ ॥ *देहल्यामन्तरिक्षलिङ्गेन ॥ २ ॥ देहिनी देहली द्वारस्याधस्ताद्दारुः। तस्या उपवेदिकेत्यन्ये। अन्तर्द्वारस्य च ग्रहणम्। तत्रान्तरिक्षलिङ्गेन 'अन्तरिक्षाय स्वाहे'त्यनेन ॥ २ ॥ * उत्तरेणापिधान्याम् ॥ ३ ॥ येनापिधीयते द्वारं सापिधानी कवाटम्। तदर्गलमित्यन्ये। तत्रोत्तरेण मन्त्रेण 'यच्चेजति जगति यच्चेष्टति नाम्नो भागो यन्नाम्ने स्वाहे'त्यनेन ॥ ३ ॥ * उत्तरैर्ब्रह्मसदने ॥ ४ ॥ अगारस्येत्यनुवृत्तेः। तत्र यो ब्रह्मसदनाख्यो देशः वास्तुविद्याप्रसिद्धः मध्येऽगारम्। तत्रोत्तरैर्दशभिः 'पृथिव्यै स्वाहा, अन्तरिक्षाय स्वाहा, दिवे स्वाहा, सूर्याय स्वाहा, चन्द्रमसे स्वाहा, नक्षत्रेभ्यः स्वाहा, इन्द्राय स्वाहा, बृहस्पतये स्वाहा, प्रजापतये स्वाहा, ब्रह्मणे स्वाहे'त्येतैः प्रागपवर्गमित्येव। अपर आह। ब्रह्मा यत्र सीदति गार्ह्येषु कर्मसु अग्नेर्दक्षिणतो ब्रह्मसदनं तत्रेति ॥४॥ *दक्षिणतः पितृलिङ्गेन प्राचीनावीत्यवाचीनपाणिः कुर्यात् ॥ ५ ॥ अनन्तराणां बलीनां दक्षिणतः पितृलिङ्गेन 'स्वधा पितृभ्य' इत्यनेन बलिं कुर्यात्। प्राचीनावीत्यवाचीनपाणिश्च भूत्वा दक्षिणं पाणिमुत्तानं कृत्वा अङ्गुष्ठतर्जन्योरन्तरालेन ॥५॥ * रौद्र उत्तरो यथा-

देवताभ्यः ॥६॥ पितृबलेरुत्तरतो रौद्रबलिः कर्तव्यः । यथा देवताभ्य स्तथा प्राचीनावीत्यवाचीनपाणिरिति नानुवर्तत इत्यर्थः । 'नमो रुद्राय पशुपतये स्वाहे'ति मन्त्रः । अत्र यद्यपि पशुपतिलिङ्गमप्यस्ति, तथापि तद्रुद्रस्यैव विशेषणमिति रौद्र इति व्यपदेशो नानुपपन्नः । देवतास्मरणमपि रुद्रायेत्येव कुर्वन्ति । रुद्राय पशुपतय इत्यन्ये । केचित्तु उत्तरो मन्त्रो रौद्रः न पशुपतिर्देवतेत्याचक्षते । तस्य देशः प्रागवोदग्वा पित्र्यात् ॥६॥ *तयोर्नाना परिषेचनं धर्मभेदात् ॥७॥ तयोरनन्तरोक्तयोर्बल्योरेकस्मिन् देशे समवेतयोरपि नाना पृथक् परिषेचनं कर्तव्यम् । कुतः । धर्मभेदात् पित्र्यस्याप्रदक्षिणं परिषेचनं कर्तव्यम् । इतरस्य दैवत्वात्प्रदक्षिणमिति॥७॥ *नक्तमेवोत्तमेन वैहायसम् ॥८॥ उत्तमेन 'ये भूताः प्रचरन्ति नक्तं बलिमिच्छन्तो वितुदस्य प्रेष्याः । तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्दधातु स्वाहे'ति । अनेन वैहायसं बलिं दद्यात् । तत्र 'नक्तमेव वैहायसमि'ति वचनादाकाश एव बलिः न छदिःपरिष्कृते देशे । तथाच बोधायनः—'अथाकाश उत्क्षिपति ये भूताः प्रचरन्ती'ति । अपर आह । एवकारो भिन्नक्रमः । नक्तमुत्तमेनैव बलिरिति तत्र बल्यन्तराणां रात्रौ निवृत्तिः । अन्ये तु ऊहेन दिवा बलिं हरन्ति 'दिवाबलिमिच्छन्त' इति । आश्वलायनके तथादर्शनात् । 'दिवाचारिभ्य' इति दिवा । 'नक्तंचारिभ्य' इति बलिमाकाशे उत्क्षिपेन्नक्तमिति । तथा च मनुः—'दिवाचारिभ्यो भूतेभ्यो नक्तंचारिभ्य एव च ।' इति ॥८॥ *य एतानव्यग्रो यथोपदेशं कुरुते नित्यः स्वर्गः पुष्टिश्च ॥९॥ य एताननन्तरोक्तान् होमान् बलींश्च । अव्यग्रः समाहितमनाः भूत्वा यथोपदेशमुपदेशानतिक्रमेण कुरुते इति वचनात्तस्येति गम्यते । तस्य नित्यः स्वर्गः पुष्टिश्च नित्या । 'स्वर्गपुष्टिसंयुक्ता' इति यत् पूर्वमुक्तं तस्यार्थवादताशङ्का मा भूदिति पुनर्वचनम् । पुष्टिस्वर्गौ नित्यावेव भवतः । न प्रबलैरपि कर्मान्तरैर्बाधनीयाविति ॥९॥ *अग्रं च देयम् ॥१०॥ बलिहरणानन्तरं अग्रं च देयं भिक्षवे ॥१०॥ *अतिथीनेवाग्रे भोजयेत् ॥११॥ अतिथीन्वक्ष्यति । तानेवाग्रे भोजयेत् न स्वयं सह वा भुञ्जीत । एवमतिथिव्यतिरिक्तानन्यानपि भोजयितव्यान्

पश्चादेव भोजयेत् ॥ ११ ॥ * **बालान्वृद्धान्रोगसम्बन्धान्स्त्रीश्चान्तर्वत्नीः** ॥ १२ ॥ ये च गृहवर्तिनो बालादयः तानप्यग्र एव भोजयेत् । अन्तर्वत्नीरित्येव सिद्धे स्त्रीग्रहणं स्वस्रादीनामपि ग्रहणार्थम् । अन्तर्वत्नीग्रहणं सर्वत्र पूजार्थम् ॥ १२ ॥ * **काले स्वामिनावन्नार्थिनं न प्रत्याचक्षीयाताम्** ॥ १३ ॥ काले वैश्वदेवान्ते अन्नार्थमुपस्थितं स्वामिनौ गृहपती न प्रत्याचक्षीयाताम् । अवश्यं तस्मै किञ्चिद्देयमिति ॥ १३ ॥ अभावे किं कर्तव्यं तत्राह—* **अभावे भूमिरुदकं तृणानि कल्याणी वागित्येतानि वै सतोऽगारे न क्षीयन्ते कदाचनेति** ॥ १४ ॥ भूमिरुपवेशनयोग्या । उदकं पादप्रक्षालनादियोग्यम् । तृणानि शयनासनयोग्यानि । कल्याणी वाक् स्वागतमायुष्मन्त इहास्यतामित्यादिका । एतानि भूम्यादीनि । सतोऽगारे सतस्सत्पुरुषस्य निर्धनस्यापि गृहे कदाचिदपि न क्षीयन्ते । वैशब्दः प्रसिद्धौ । अत एव तैरुपचारः कर्तव्यः । इतिशब्दप्रयोगादेवं धर्मज्ञा उपदिशन्तीति ॥ १४ ॥ * **एवंवृत्तावनन्तलोकौ भवतः** ॥ १५ ॥ यौ गृहमेधिनौ आन्तादिवृत्तौ भवतः तयोरनन्तलोका भवन्ति । ज्योतिष्टोमादिभ्योऽपि कतिपयदिनसाध्येभ्यो दुष्करमेतदान्तादृतम् ॥ १५ ॥ * **ब्राह्मणायानधीयानायासनमुदकमन्नमिति देयं न प्रत्युत्तिष्ठेत्** ॥ १६ ॥ यद्यनधीयानो ब्राह्मणोऽतिथिधर्मेणागच्छेत् तदा तस्मै आसनादिकं देयम् । प्रत्युत्थानं तु न कर्तव्यम् । अस्मादेव ज्ञायते अधीयाने प्रत्युत्थानमिति ॥ १६ ॥ * **अभिवादनायैवोत्तिष्ठेदभिवाद्यश्चेत्** ॥ १७ ॥ यदि पुनरसौ अनधीयानोऽपि 'दशवर्षं पौरसख्यम्' इत्यादिना अभिवाद्यो भवति तदा 'अभिवादनायैवोत्तिष्ठेत् ॥ १७ ॥ * **राजन्यवैश्यौ च** ॥ १८ ॥ अनधीयानावपि राजन्यवैश्यौ न प्रत्युत्तिष्ठेत् ब्राह्मणः । आसनादिकं तु देयमिति ॥ १८ ॥ * **शूद्रमभ्यागतं कर्मणि नियुञ्ज्यात्** ॥ १९ ॥ यदि शूद्रो द्विजातिं प्रत्यतिथिरागच्छति तदा तमुदकाहरणादौ कर्मणि नियुञ्ज्यात् ॥ १९ ॥ * **अथास्मै दद्यात्** ॥ २० ॥ अथ तस्मिन् कृते भोजनं दद्यात् ॥ २० ॥ * **दासा वा राजकुलादाहृत्यातिथिवच्छूद्रं पूजयेयुः** ॥ २१ ॥ अथवा यस्य गृहमेधिनो दासा

ते राजकुलादाहृत्य तं शूद्रमतिथिवत्पूजयेयुः । अत एव ज्ञायते 'शूद्राणामतिथीनां पूजार्थं व्रीह्यादिकं राज्ञा ग्रामेग्रामे स्थापयितव्यमिति ॥२१॥ * नित्यमुत्तरं वासः कार्यम् ॥ २२ ॥ 'उपासने गुरूणा'मित्यादिना केषुचित्कालेषु यज्ञोपवीतं विहितम् । इह तु प्रकरणात् गृहस्थस्य नित्यमुत्तरं वासो धार्यमित्युच्यते ॥ २२ ॥ अपि वा सूत्रमेवोपवीतार्थे ॥२३॥ अपि वा सूत्रमेव सर्वेषामुपवीतकृत्ये भवति न वास एव । तच्च 'कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृ'दिति मनूक्तं द्रष्टव्यम् ॥ २३ ॥ * यत्र भुज्यते तत्समूह्य निर्हृत्यावोक्ष्य तं देशममत्रेभ्यो लेपान् सङ्कृष्याद्भिः संसृज्योत्तरतः शुचौ देशे रुद्राय निनयेदेवं वास्तु शिवं भवति ॥ २४ ॥ यत्र स्थाने भुज्यते तत् समूह्य समूहन्या तत्रत्यमुच्छिष्टादिकं राशीकृत्य निर्हरेदन्यतः । निर्हृत्य तं देशमवोक्षेत् । अवोक्ष्य ततोऽमत्रेभ्यः येषु पाकः कृतः तान्यमत्राणि तेभ्योऽन्नलेपान् अन्नलेपांश्च सङ्कृष्य काष्ठादिनावकृष्य अद्भिः संसृजेत् । संसृज्य गृहस्योत्तरतः शुचौ देशे रुद्रायेदमस्त्विति निनयेत् । एवं कृते वास्तु शिवं समृद्धं भवतीति ॥२४॥ * ब्राह्मणस्त्वाचार्यः स्मर्यते तु ॥ २५ ॥ तुशब्दोऽवधारणार्थो भिन्नक्रमश्च । ब्राह्मण एव पूर्वेषामाचार्यः स्मर्यते धर्मशास्त्रेषु । इहापि वक्ष्यति 'स्वकर्म ब्राह्मणस्ये'त्यादि । अनुवादोऽयम् ॥ २५ ॥ आपदि कल्पान्तरं वक्तुं तदाह—* आपदि ब्राह्मणेन राजन्ये वैश्ये वाध्ययनम् ॥ २६ ॥ कर्तव्यमित्यध्याहार्यम् । ब्राह्मणस्याध्यापयितुरलाभ आपत् । तत्रापदि ब्राह्मणेन राजन्ये वैश्ये वाध्ययनं कर्तव्यम् । न त्वनधीयानेन स्थातव्यम् । 'ब्राह्मणेने'ति वचनाद्राजन्यवैश्ययोर्नायमनुकल्पः ॥ २६ ॥ * अनुगमनं च पश्चात् ॥ २७ ॥ अनुगमनं च पृष्ठतः कर्तव्यं गुरोरध्ययनम् । अध्ययनकाले लज्जादिना कियत्यपि पार्श्वे गतिर्माभूदिति । सर्वत्र शुश्रूषाप्रसङ्गे नियमः ब्राह्मणस्यानुगमनमेव शुश्रूषेति । तथा च गौतमः — 'अनुगमनं शुश्रूषे'ति ॥२७॥ * तत ऊर्ध्वं ब्राह्मण एवाग्रे गन्ता स्यात् ॥२८॥ ततोऽध्ययनादूर्ध्वं समाप्तेऽध्ययने ब्राह्मण एवाग्रे गच्छेत् ॥२८॥

इति चतुर्थी खण्डिका ॥ प्र० २ प० २ ख० ४ ॥

* **सर्वविद्यानामप्युपनिषदामुपाकृत्यानध्ययनं तदह** ॥१॥ कर्मणि षष्ठी । सर्वविद्या अङ्गविद्या, अप्युपनिषदः । उपाकृत्याध्येतुमारभ्य तदहरनध्ययनं तस्मिन्नहनि अध्ययनं न कर्तव्यम् । उपनिषद्ग्रहणं प्राधान्यख्यापनार्थम् । ब्राह्मणा आयाता वसिष्ठोऽप्यायात इतिवत् ॥१॥ * **अधीत्य चाविप्रक्रमणं सद्यः** ॥२॥ अधीत्य 'वेदमधीत्य स्नास्य' न्नित्यवमरे आचार्यसकाशात् सद्यो विप्रक्रमणं न कर्तव्यं नापगन्तव्यम् । प्रायेण मकारात्परमिकारमधीयते । तत्राप्येष एवार्थः । इकारस्तु छान्दसोऽपपाठो वा ॥ २ ॥ * **यदि त्वरेत गुरोः समीक्षायां स्वाध्यायमधीत्य कामं गच्छेदेवमुभयोः शिवं भवति** ॥ ३ ॥ यदि कार्यवशात् गन्तुं त्वरेत तदा गुरोराचार्यस्य समीक्षायां सन्दर्शने संश्रये स्वाध्यायं प्रश्नावरमधीत्य यथाकाम गच्छेत । एवं कृते उभयोः शिष्याचार्ययोः शिवं भवतीति ॥ ३ ॥ * **समावृत्तं चेदाचार्योऽभ्यागच्छेत्तमभिमुखोऽभ्यागम्य तस्योपसङ्गृह्य न बीभत्समान उदकमुपस्पृशेत् पुरस्कृत्योपस्थाप्य यथोपदेशं पूजयेत्** ॥ ४ ॥ समावृत्तं चेत् शिष्यं कृतदारमाचार्योऽभ्यागच्छेत अतिथिधर्मेण । तदभिमुखोऽभ्यागम्य । तस्योपसंगृह्य । कर्मणि षष्ठी । तमुपसंगृह्य । यद्यपि तस्य चण्डालादिस्पर्शः सम्भाव्यते । तथापि न बीभत्समानः उदकमुपस्पृशेत् न स्नायात् । उपसंग्रहणे वा धूलिधूसरौ पादौ स्पृष्ट्वा न बीभत्समान उदकमुपस्पृशेत् । ततस्तं पुरस्कृत्य गृहप्रवेशे अग्रे कृत्वा । पूजामासनान्युपस्थाप्य यथोपदेशं गृह्योक्तेन मार्गेण मधुपर्केण पूजयेत् । पूजाविधानं गृह्योक्तस्यानुवादः ॥४॥ आसनादिषु विशेषं वक्तुं तदाह— * **आसने शयने भक्ष्ये भोज्ये वाससि वा संनिहिते निहीनतरवृत्तिः स्यात्** ॥ ५ ॥ संनिहिते आचार्ये तस्मिन्नेव गृहे अन्तरकादिकं प्रविष्टे आसनादिषु निहीनतरवृत्तिः स्यात् । तरनिर्देशात् नीच आसने गुणतोऽपि निकृष्ट आसीत । एवं शयनादिष्वपि द्रष्टव्यम् ॥ ५ ॥ * **तिष्ठन् सव्येन पाणिनानुगृह्याचार्यमाचामयेत्** ॥ ६ ॥ तिष्ठन्निति प्रह्व उच्यते । स्थानयोगात् । न हि साक्षात्तिष्ठन्नाचमयितुं प्रभवति । सव्येन पाणिना करकादिकमनुगृह्याध

न्ताद्गृहीत्वा इतरेण द्वारमवमृश्येत्यर्थसिद्धत्वादनुक्तम् । एवं कृत्वाचार्यमाचमयेत् स्वयमेव शिष्यः । एवं हि स सम्मतो भवति । आचार्ये प्रकृते पुनराचार्यग्रहणमातिथ्यादन्यत्रापि आचार्यमाचमयन्नेवमाचमयेदिति ॥ ६ ॥ * अन्यं वा समुदेतम् ॥ ७ ॥ वाशब्दः समुच्चये । अन्यमप्येवमेवाचमयेत् । स चेत् समुदेतः कुलशीलवृत्तविद्यावयोभिरुपेतो भवति ॥ ७ ॥ * स्थानासनचंक्रमणस्मितेष्वनुचिकीर्षन् ॥ ८ ॥ व्यवहितमपि स्यादित्यपेक्षते । चिकीर्षया करणं लक्ष्यते । स्थानादिष्वाचार्यस्य पश्चाद्भावी स्यात् । न पूर्वभावी । न युगपद्भावी ॥ ८ ॥ * सन्निहिते मूत्रपुरीषवातकर्मोच्चैर्भाषाहासष्ठीवनदन्तस्कवननिःशृङ्खणभ्रुक्षेपणतालननिष्ठ्यानीति ॥ ९ ॥ वातकर्म अपानवायोरुत्सर्गः । उच्चैर्भाषा महता स्वनेन सम्भाषणम् । केनापि हासो हसनम् । ष्ठीवनं श्लेष्मादिनिरसनम् । दन्तस्कवनं दन्तमलापकर्षणम् । परस्परघट्टनमित्यन्ये । निःशृङ्खणं नासिकामलनिस्सारणम् । भ्रुक्षेपणं भ्रुविक्षेपः । छान्दसो ह्रस्वः । तालनं हस्तयोरास्फालनम् । निष्ठ्यमङ्गुलिस्फोटनम् । इतिशब्दादन्यदपि स्वैरगमनादिकं वर्जयेदित्यपेक्ष्यते । एतानि मूत्रकर्मादीनि आचार्यस्य सन्निधौ न कुर्यादिति ॥ ९ ॥ * दारे प्रजायां चोपस्पर्शनभाषा विस्रम्भपूर्वाः परिवर्जयेत् ॥ १० ॥ उपस्पर्शनमालिङ्गनाघ्राणादि । भाषा सम्भाषश्चाटुप्रभृतयः । एता अप्याचार्ये सन्निहिते दारे प्रजायाश्चिपयेऽपि विस्रम्भं न कुर्यात् । ज्वरादिपरीक्षायां न दोषः ॥ १० ॥ * वाक्येन वाक्यस्य प्रतिघातमाचार्यस्य वर्जयेच्छ्रेयसां च ॥ ११ ॥ आचार्यवाक्यस्य समीचीनस्येतरस्य वा आत्मीयेन वाक्येन तादृशेन प्रतिघातं न कुर्यात् । श्रेयसां च अन्येषामपि प्रशस्ततराणां वाक्यं वाक्येन न प्रतिहन्यात् ॥ ११ ॥ * सर्वभूतपरीवादाक्रोशांश्च ॥ १२ ॥ सर्वेषामपि भूतानामपि निरश्चाम् । परीवादान् दोषवादान् । आक्रोशान् अश्लीलवादांश्च वर्जयेत् । परीवादस्य पुनःपुनर्वचनमतिशयेन वर्जनार्थम् ॥ १२ ॥ * विद्यया च विद्यानाम् ॥ १३ ॥ परीवादाक्रोशान् वर्जयेत् । ऋग्वेद एव श्रोत्रसुखः । अन्ये श्रवणकटुका इति परीवादाः । तैत्तिरीयमुच्छिष्टशाखा याज्ञवल्क्यादिब्राह्मणादिरिदानीन्तन इत्याद्या-

क्रोशः ॥१३॥ ***यया विद्यया न विरोचेत पुनराचार्यमुपेत्य नियमेन साधयेत् ॥१४॥** यया विद्ययाऽधीतया श्रुतया वा न विरोचेत न यशस्वी स्यात्तामित्यर्थाद्गम्यते । ता विद्यां पुनः साधयेत् । यथा सम्यक् सिद्धा भवति तथा कुर्यात् । कथम् । आचार्यं तमेवान्यं वा उपेत्य उपसाद्य । नियमेनापूर्वाधिगमे विद्यार्थिस्य यो नियम उक्तः तेन शुश्रूषादिना । अस्मिन्विषये अध्यापयितुर्नियमः ॥१४॥ ***उपाकरणाद्योत्सर्जनादध्यापयितुर्नियमो लोमसंहरणं मांसं श्राद्धं मैथुनमिति वर्जयेत् ॥१५॥** लोमसंहरणं लोमवापनम् । इदमनाहिताग्निविषयम् । आहिताग्नेस्तु 'अप्यल्पशो लोमानि वापयेत' इति वाजसनेयकम् ॥१५॥ ***ऋत्व्ये वा जायाम् ॥१६॥** ऋतुकाले वा जायामुपेयात् । स्त्रीणामृतुदिनानि षोडश । तत्र भवः कालः ऋत्व्यः । भवे छन्दसीति यत्प्रत्यये ऋत्व्यवास्त्व्येति यणादेशसूत्रेऽणादेशो निपातितः । ऋत्व्य इति रूपसिद्धिः । अत्र यलोपश्छान्दसः । चातुर्मास्येषु प्रयुक्तमृतं वा जायां नोपयात्ति इति यथा स्यात् ॥१६॥ ***यथागमं शिष्येभ्यो विद्यासम्प्रदाने नियमेषु च युक्तः स्यादेवं वर्तमानः पूर्वापरान् सम्बन्धानात्मानं च क्षेमे युनक्ति ॥१७॥** येन प्रकारेणागमः पाठार्थयोः तथैव शिष्येभ्यो निमत्सरेण विद्या सम्प्रदेया । एवं भूते विद्यासम्प्रदाने युक्तो विहितः स्यात् । ये च गृहस्थस्य नियमा अध्यापने अन्यत्र च तेष्वपि युक्तः स्यात् । एवं युक्तो वर्तमानः पूर्वान् पितृपितामहप्रपितामहान् । अपरांश्च पुत्रपौत्रनप्तॄन् । सम्बन्धान् कर्मणि ब्रह्म सम्बन्धिनः पुरुषान् । आत्मानं च क्षेमे अभये स्थाने नाकस्य पृष्ठे । युनक्ति स्थापयति ॥१७॥ ***मनसा वाचा प्राणेन चक्षुषा श्रोत्रेण त्वक्छिश्नोदरारम्भणानास्रावान् परिवृञ्जानोऽमृतत्वाय कल्पते ॥१८॥** ये पुरुष अस्त्राव्यन्ते बहिराकृष्यन्ते ते आस्रावाः शब्दादयो विषयाः । ते विशेष्यन्ते त्वक्छिश्नोदरारम्भणान् आरभ्यते आलम्ब्यन्त इत्यारम्भणाः । तत्र त्वगालम्बनाः स्रक्चन्दनादयः । शिश्नालम्बनः स्त्र्युपभोगः । उदरालम्बना अभोज्या अभक्ष्यादयः । उपलक्षणं त्वगादिग्रहणम् । एवंभूतानाम् आस्रावान् मनआदिभिः पञ्चभिरिन्द्रियैः परिवृञ्जानः सर्वतो वर्जयन् । अ-

मृतत्वाय मोक्षाय कल्पते । तत्र वागिति रसनेन्द्रियम् । प्राण इति घ्राणम् ॥१८॥

इति पञ्चमी खण्डिका ॥ प्र०२ प०२ ख०५ ॥
इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां द्वितीयप्रश्ने द्वितीयः पटलः ॥२॥

---

* जात्याचारसंशये धर्मार्थमागतमग्निमुपसमाधाय जात्याचारं च पृच्छेत् ॥१॥ अविज्ञातपूर्वो यो धर्मार्थमध्ययनार्थमागच्छेत् उपसीदेत् । उपसन्नोऽस्मि भगवन्मैत्रेण चक्षुषा पश्य शिवेन मनसानुगृहाण प्रसीद मामध्यापयेति । तस्य जात्याचारसंशये सति । अग्निमुपसमाधाय अत्र क चाग्निमित्याद्यन्यदुपदध्यादित्यन्तं कृत्वा । तत्सन्निधौ जातिमाचारं च पृच्छेत् । किंगोत्रोऽसि सौम्य किमाचारश्चरसीति ॥१॥ * साधुतां चेत्प्रतिजानीतेऽग्निरुपद्रष्टा वायुरुपश्रोताऽऽदित्योऽनुख्याता साधुतां चेत्प्रतिजानीते साध्वस्मा अस्तु वितथ एष एनस इत्युक्त्वा शास्तुं प्रतिपद्येत ॥२॥ स चेत्साधुत्वं प्रतिजानीते साधुजन्माऽस्म्यमुष्य पुत्रोऽमुष्य पौत्रोऽमुष्य नप्ता साध्वाचारश्चास्मि पित्रैवोपानेषि शिक्षिताचारश्चास्मि सम्यक्चाव...षि विधिबलेन तु बाल्य एव सर्वे दिष्टां गतिं गता एतस्मात्केवलमनधीतवेद इति ततोऽग्निरुपद्रष्टेत्यादिकं मन्त्रमुक्त्वा शास्तुं शासितुमध्यापयितुं धर्मांश्चोपदेष्टुं प्रतिपद्येत उपक्रमेत ॥२॥ पूर्वपटलान्ते 'अतिथीनेवाग्रे भोजये'दित्युक्तम् । तत्सर्वप्रकारं वक्तुं तस्यावश्यकर्तव्यतामनेनाह—

* अग्निरिव ज्वलन्नतिथिरभ्यागच्छति ॥३॥ अतिथिर्गृहानभ्यागच्छन्नग्निरिव ज्वलन्नभ्यागच्छति तस्मादसौ भोजनादिभिरवश्यं तर्पयितव्यः । निराशस्तु गतो गृहान् दहेदिति ॥३॥ इदानीमतिथिलक्षणं वक्तुं तदुपयोगिश्रोत्रियलक्षणमाह— * धर्मेण वेदानामेकैकां शाखामधीत्य श्रोत्रियो भवति ॥४॥ विद्यार्थस्य यो नियमः स धर्मः । तेन वेदानां यां काञ्चन शाखामधीत्य श्रोत्रियो भवति । पुरुषस्य हि प्रतिवेदमेकैका शाखा भवति या पूर्वैः परिगृहीता अध्ययनानुष्ठानाभ्यां सा प्रतिवेदं स्वशाखा ता

मधीत्य श्रोत्रियो भवति न तु प्रतिवेदमेकैकामधीत्य श्रोत्रियो भवतीति । लोकविरोधात् । लोके हि यां कांचनैकां शाखामधीयानः श्रोत्रिय इति प्रसिद्धः ॥४॥ अतिथिलक्षणमाह—*स्वधर्मयुक्तं कुडुम्बिनमभ्यागच्छति धर्मपुरस्कारो नान्यप्रयोजनः सोऽतिथिर्भवति ॥५॥ आदितो यच्छब्दो द्रष्टव्यः । अन्ते स इति दर्शनात् । मध्ये च श्रोत्रियलक्षणोपदेशात् । तदुपजीवनेन सूत्रं योज्यम् । यः श्रोत्रियः स्वधर्मयुक्तं स्वधर्मनिरतम् । कुडुम्बिनं भार्यया सह वसन्तं गृहस्थम् । आश्रमान्तरनिरासार्थमिदमुक्तम् । न हि ते पचमाना भवन्ति । भिक्षवो हि ते । अभ्यागच्छति उद्दिश्यागच्छति । धर्मपुरस्कारः आचार्याद्यर्थं भिक्षणं धर्मः तं पुरस्करोतीति धर्मपुरस्कारः । कर्मण्यण् । धर्मप्रयोजनः । य एवंभूत एवंभूतमुद्दिश्यागच्छति नान्येच्छया सोऽतिथिरिति ॥५॥ *तस्य पूजायां शान्तिः स्वर्गश्च ॥६॥ तस्यातिथेः पूजायां कृतायां शान्तिरुपद्रवाणामिह भवति प्रेत्य च स्वर्गलाभः ॥६॥ *तमभिमुखोऽभ्यागम्य यथावयसमेत्य तस्यासनमाहारयेत् ॥७॥ तमतिथिमभिमुखोऽभ्यागच्छेत् । अभ्यागम्य यथावयः वयसोऽनुरूपं प्रत्युत्थायाभिवादनादिना समेयात् सङ्गच्छेत् । समेत्य च तस्यासनमाहारयेत् शिष्यादिभिः । अभावे स्वयमाहरेत् ॥७॥ *शक्तिविषये नाबहुपादमासनं भवतीत्येके ॥८॥ शक्तौ सत्यां अबहुपादमासनं न देयम् । किं तु बहुपादमेव पीठादिकमित्येके मन्यन्ते । स्वमतं तु बहुपादमपीति ॥८॥ *तस्य पादौ प्रक्षालयेच्छूद्रमिथुनावित्येके ॥९॥ द्वौ शूद्रौ तस्य पादौ प्रक्षालयेतामित्येके मन्यन्ते । दासवत इदम् । बोधायनस्तु, श्रोत्रो दृष्टपूर्वः केवलमन्नार्थी नान्यप्रयोजनो वेत्यातिथिर्भवति । अथ वा सर्ववर्णानामन्यतमः काले यथोपपन्नः सर्वेषामतिथीनां श्रेष्ठोऽतिथिर्भवतीति ॥९॥ अत्र विशेषः—*अन्यतरोऽभिषेचने स्यात् ॥१०॥ अभिषेचनं करकादिना जलावसेकः । तमेकः कुर्यात् । इतरः प्रक्षालनम् ॥१०॥ *तस्योदकमहारयेन्मृण्मयेनेत्येके ॥११॥ मृण्मयेन पात्रेण तस्योदकमाहर्तव्यमित्येके मन्यन्ते । स्वमतं तु तैजसेन ॥११॥ *नोदकमहारयेदसमावृत्तः ॥१२॥ यदा असमावृत्तो ब्रह्मचारी आचार्यप्रेषितः स्वयमेव वा अतिथिरभ्यागच्छति तदानासावुदकमाहारयेत् तदा नासा-

वुदकाहरणस्य प्रयोजकः। नास्माउदकमाहर्तव्यमिति ॥ १२ ॥ **अध्ययनसांवृत्तिश्चात्राधिका ॥ १३ ॥** अत्र असमावृत्तेऽतिथौ अध्ययनसंवृत्तिश्चाधिका इतरस्मादतिथेः। अध्ययनस्य सह निष्पादनमध्ययनसवृत्तिः। यः प्रदेशस्तस्यागच्छति स तेन सह कियन्तञ्चित्कालं वक्तव्यं इति। प्रसिद्धे तु पाठे पूर्वपदान्तस्य समोऽकारस्य छान्दसो दीर्घः ॥ १३ ॥ **सान्त्वयित्वा तर्पयेद्रसैर्भक्ष्यैरद्भिरवरार्ध्येनेति ॥ १४ ॥** तत्पादप्रक्षालनस्य समध्ययनस्य वानन्तरमतिथिं प्रियवचनेन सान्त्वयेत्। सान्त्वयित्वा गव्यादिभी रसैः फलादिमिश्च भक्ष्यैरन्ततोऽद्भिरपि वा तर्पयेत्। 'अवरार्ध्येने'ति जघन्यतां सूचयति। अप्यन्तत इत्यर्थः। इतिशब्दादेवमादिभिरन्यैरपि ॥ १४ ॥ **आवसथं दद्यादुपरिशय्यामुपस्तरणमुपधानं सावस्तरणमभ्यञ्जनं चेति ॥ १५ ॥** आवसथो विश्रामस्थानम्। उपरिशय्या खट्वा। उपस्तरण तूलिका। उपधानमुपबर्हणम्। अवस्तरणमुपरिपटः। तत्सहितमुपधानमुपस्तरणं च। अभ्यञ्जनं पादयोः तैलं घृतं वा एतत्सर्वं दद्यात्। भोजनात्प्रागूर्ध्वं वा अपेक्षिते काले। इतिशब्दादन्यदप्यपेक्षितम् ॥ १५ ॥ **अन्नसंस्कर्तारमाहूय व्रीहीन् यवान्वा तदर्थान्निर्वपेत् ॥ १६ ॥** यः पचति तमन्नसंस्कर्तारमाहूय तदर्थानतिथ्यर्थान् व्रीहीन्यवान्वा निर्वपेत् पृथक्कृत्य दद्यात्। अमुष्मै पचेति। व्रीहियवग्रहणमुपलक्षणम्। इदं भुक्तवत्सु सर्वेष्वतिथावुपस्थिते द्रष्टव्यम् ॥ १६ ॥ भोजनकाले त्वाह—**उद्धृतान्यन्नान्यवेक्षेतेदं भूया३ इद३मिति ॥ १७ ॥** यावन्तो भोक्तारस्तावद्धा अन्नान्युद्धृत्य पृथक्पात्रेषु कृत्वा स्वयं संविभागं कृत्वा तान्यन्नान्यवेक्षेत किमिदं भूयः प्रभूतमिदं वेति। विचारे प्लुतिः। पूर्वं तु भाषायामिवेतदापेक्षितम्। छान्दसोऽयं प्रयोग इति ॥ १७ ॥ **भूय उद्धरेत्येव ब्रूयात् ॥ १८ ॥** एवमवेक्ष्यातिथ्यर्थं भूय उद्धरेत्येव ब्रूयात् ॥ १८ ॥ **द्विषन्द्विषतो वा नान्नमश्नीयाद्दोषेण वा मीमांसमानस्य मीमांसितस्य वा ॥ १९ ॥** यं स्वयमतिथिं द्विषन्भवति योऽवात्मानं द्वेष्टि यो वात्मानं दोषेण मीमांसते आत्मनि स्तेयादिदोषं सम्भावयति यो वा दोषेण मीमांसितः यत्र लौकिका दोषं सम्भावयन्ति। तस्यास्य सर्वस्यान्नं नाश्नीयात् ॥ १९ ॥ अत्र हेतुः—**पाप्मानं हि स तस्य भक्षयतीति विज्ञायते ॥ २० ॥** य-

एवंविधस्यान्नमश्नाति, स तस्य पाप्मानमेव भक्षयतीति विज्ञायते ॥२०॥

इति षष्ठी खण्डिका ॥ प्र०२ प०३ ख०६ ॥

*स एष प्राजापत्यः कुटुम्बिनो यज्ञो नित्यप्रततः ॥१॥ स एषोऽभिहितो मनुष्ययज्ञः प्राजापत्यः प्रजापतिना दृष्टः, तद्देवत्यो वा । कुटुम्बिनो यज्ञो नित्यप्रततो, नाग्निष्टोमादिवत् कादाचित्कः ॥१॥ तस्याग्नीन् सम्पादयति — *योऽतिथीनामग्निः स आहवनीयो यः कुटुम्बे स गार्हपत्यो यस्मिन्पच्यते सोऽन्वाहार्यपचनः ॥२॥ योऽतिथीनां जाठरोऽग्निः स एवाहवनीयः । तत्र हि हूयते । यः कुटुम्बे गृहे अग्निरौपासनः स गार्हपत्यः, नित्यधार्यत्वात् । यस्मिन् पच्यते भ्राष्ट्राग्नौ सोऽन्वाहार्यपचनः दक्षिणाग्निः । तत्र ह्यन्वाहार्यं पच्यते ॥२॥ *ऊर्जं पुष्टिं प्रजां पशूनिष्टापूर्तमिति गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ॥३॥ यः अतिथेः पूर्वमश्नाति, स गृहाणां कुलस्य सम्बन्धि ऊर्जादिकमश्नाति भक्षयति विनाशयति । ऊर्गन्नम् । इष्टमग्निहोत्रादि । पूर्तं स्मार्तं कर्म कूपखातादि । अन्ये प्रसिद्धाः ॥३॥ *पयउपसेचनमन्नमग्निष्टोमसम्मितं सर्पिषोक्थ्यसम्मितं मधुनातिरात्रसम्मितं मांसेन द्वादशाहसम्मितमुदकेन प्रजावृद्धिरायुषश्च ॥४॥ पय उपसेचनं यस्य तदन्नमग्निष्टोमतुल्यम् । सर्पिषा उपसिक्तमिति प्रकरणाद्गम्यते । मांसेन सह दत्तम् । उदकेन सह दत्तेन प्रजावृद्धिर्भवति । आयुषश्च वृद्धिः । उपसमस्तमपि । वृद्धिरिति सम्बध्यते ॥४॥ *प्रियाप्रियाश्चातिथयः स्वर्गं लोकं गमयन्तीति विज्ञायते ॥५॥ अप्रियाः उदासीनाः । द्विषतो निषिद्धत्वात् ॥५॥ *स यत्प्रातर्मध्यंदिने सायमिति ददाति सवनान्येव तानि भवन्ति ॥६॥ त्रिषु कालेषु दीयमानान्यन्नानि अस्य यज्ञस्य प्रातस्सवनादीनि त्रीणि भवन्ति । तस्मात्सर्वेषु कालेषु दातव्यमिति ॥६॥ *यदनुतिष्ठत्युदवस्यत्येव तत् ॥७॥ यत् गन्तुमुत्तिष्ठन्तमतिथिमनूत्तिष्ठति तदुदवस्यत्येव उदवसानीयस्य यज्ञस्येति । प्रायेणोच्छब्दं न पठन्ति । केवलमनु ... मेव पठन्ति । तत्र प्यर्थः स एव ॥ ७ ॥ *यत्सान्त्वयति सा दक्षिणा प्रशसा ॥८॥ यत्सान्त्वयति प्रशसति सा प्रशसा दक्षिणा ॥८॥

* यत्संसाधयंति ते विष्णुक्रमाः ॥ ९ ॥ संसाधनमनुव्रजनम् ॥९॥ * यदुपावर्तते सोऽवभृथः ॥ १० ॥ उपावर्तनम् अनुव्रज्य प्रत्याव्रजनम् ॥ १० ॥ * इति ब्राह्मणम् ॥ ११ ॥ इति ब्राह्मणमित्यस्य सर्वेण सम्बन्धः ॥ ११ ॥ * राजानं चेदतिथिरभ्यागच्छेच्छ्रेयसीमस्मै पूजामात्मनः कारयेत् ॥ १२ ॥ राजा अभिषिक्तः क्षत्रियः । सोऽतिथ्ययेऽभ्यागताय आत्मनोऽपि सकाशात् श्रेयसी पूजां कारयेत् पुरोहितेन ॥ १२ ॥ *आहिताग्निं चेदतिथिरभ्यागच्छेत्स्वयमेनमभ्युदेत्य ब्रूयाद्व्रात्य क्वावात्सीरिति व्रात्योदकमिति व्रात्य तर्पयास्त्विति ॥ १३ ॥ यद्याहिताग्निर्गृहस्थमतिथिरागच्छेत्, तत एनमतिथिं स्वयमेवाभिमुख उपसर्पेत् । अत्र स्वयमिति वचनादनाहिताग्निरन्येन शिष्यादिनाकारयन्नपि न दुष्यति । अभ्युदेत्य ब्रूयात् । व्रात्य क्वावात्सीरिति कुशलप्रश्न । व्रते साधुर्व्रात्यः । स एव व्रात्य इति पूजाभिधानम् । क्वपूर्वस्यां रात्र्यामुषितवानसीति । व्रात्योदकमित्युदकदानम् । व्रात्य तर्पयस्त्विति रसादिभिस्तर्पयति । अनुस्वारसकारौ छान्दसौ । क्रियाभेदात्प्रतिमन्त्रमितिशब्दः । एतत्सर्वेषु कालेषु कर्तव्यम् ॥ १३ ॥ * पुराग्निहोत्रस्य होमादुपांशु जपेद्व्रात्य यथा ते मनस्तथास्त्विति व्रात्य यथा ते वशस्तथास्त्विति व्रात्य यथा ते प्रियं तथास्त्विति व्रात्य यथा ते निकामस्तथास्त्विति ॥ १४ ॥ स यदि होमकालेऽप्यासीत, तदा पुरा होमादपरेणाग्निं दर्भेषु सादयित्वा व्रात्य यथा ते मन इत्यादिमन्त्रानुपांशु जपेन् ब्रूयात् । तत्र प्रतिमन्त्रमितिशब्दप्रयोगादर्थप्रयोगानर्थभेदाच्चतुर्णां विकल्पः, समुच्चय इत्यन्ये । अत्र चाध्वर्युर्यजमानो वा यो होता, स जपेत् ततो जुहुयात् ॥ १४ ॥ *यस्योद्धृतेष्वहुतेष्वग्निष्वतिथिरभ्यागच्छेत्स्वयमेनमभ्युदेत्य ब्रूयात् व्रात्यातिसृज होष्यामीत्यातिसृष्टेन होतव्यमनतिसृष्टं चेज्जुहुयाद्दोषं ब्राह्मणमाह ॥ १५ ॥ उद्धृतेष्विति बहुवचन सभ्यावसथ्यापेक्षम् । यस्याग्नयस्त्रेधा, तस्याहुतेष्वित्यनेन सामानाधिकरण्यात् । होमोऽपि त्रिष्वपि भवति । तेनाहवनीयहोमानन्तरमतिथावागतेऽपि त्रिषु होमा न कृता इति वक्ष्यमाणो विधिर्भवत्येव । क. पुनरसौ स्वयमेनमभ्युदेत्य ब्रूयात् । व्रात्यातिसृजानुजानीहि होष्यामीति ततो जु

जुहोत्यतिसृजेत्। अतिसृष्टेन होतव्यम्। यदि पुनरनतिसृष्टोऽननुज्ञातो जुहुयात्, तस्य दोषं ब्राह्मणवाक्यमाह। तत्र पठितं प्रत्येतव्यम्। अत्र पक्षे स्वयं होमो नियतः ॥ १९ ॥ *एकरात्रं चेदतिथीन्वासयेत्पार्थिवाँल्लोकानभिजयति द्वितीययान्तरिक्ष्यांस्तृतीयया दिव्यांश्चतुर्थ्या परावतो लोकानपरिमिताभिरपरिमिताँल्लोकानभिजयतीति विज्ञायते ॥ १६ ॥ य एकां रात्रिमतिथीन् गृहे वासयति, स पृथिव्यान् भवान् लोकानभिजयति। द्वितीयया रात्र्या आन्तरिक्ष्यान्। तृतीयया दिव्यान्। चतुर्थ्या परावतः सुखस्य परमात्रा येषु लोकेषु तानभिजयति। अपरिमिताभी रात्रिभिरपरिमितान् लोकानिति विज्ञायते ब्राह्मणे भवति ॥ १६ ॥ *असमुदेतश्चेदतिथिर्ब्रुवाण आगच्छेदासनमुदकमन्नं श्रोत्रियाय ददामीत्येव दद्यादेवमस्य समृद्धं भवति ॥ १७ ॥ विद्यादिभीरहितोऽसमुदेतः। स चेदतिथिरिति ब्रुवाण आगच्छेत्तदा तस्मै आसनादिकं श्रोत्रियायैव ददामीत्येव मनसि कृत्वा दद्यात्। एवं ददतोऽस्य दानं समृद्धं भवति श्रोत्रियायैव दत्तं भवति ॥ १७ ॥

इति सप्तमी खण्डिका ॥ प्र०२ प०३ ख०७ ॥

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम् उज्ज्वलायां द्वितीयप्रश्ने तृतीयः पटलः ॥ ३ ॥

---

*येन कृतावसथः स्यादतिथिर्न तं प्रत्युत्तिष्ठेत्प्रत्यवरोहेद्वा पुरस्ताच्चेदभिवादितः ॥ १ ॥ येन गृहस्थेन अतिथिः कृतावसथः स्यात् कृतवासः दत्तवासः स्यात्। द्वितीययान्तरिक्ष्यानित्यादिवचनात् द्वितीयादिष्वहस्सु तं प्रति न प्रत्युत्तिष्ठेत्। नाप्यासनात् प्रत्यवरोहेत्। स चेत्तस्मिन्नहनि पूर्वमेवाभिवादितः। अनभिवादिते तु अभिवादनाय प्रत्युत्तिष्ठेत्। प्रत्यवरोहेच्च ॥ १ ॥ *शेषभोज्यतिथीनां स्यात् ॥ २ ॥ अतिथीनेवाग्रे भोजयेदित्येवं सिद्धे वचनमिदं प्रमादाद्यदत्तमतिथये, तत्र भुञ्जीतेत्येवमर्थम् ॥ २ ॥ *न रसान गृहे भुञ्जीतानवशेषमतिथिभ्य ॥ ३ ॥ आगामिभ्योऽतिथिभ्यो यथा न किञ्चित् गृहेऽवशिष्यते, तथा गव्यादयो रसा न भोज्या इति। सद्यः सम्पादयितमशक्यत्वाद्रसेषु गृहस्थस्य ॥ ३ ॥ *ना-

त्मार्थमभिरूपमन्नं पाचयेत् ॥ ४ ॥ आत्मानमुद्दिश्याभिरूपमन्नं स्वादूपूपादि न पाचयेत ॥ ४ ॥ गोमधुपर्कार्हो वेदाध्यायः ॥ ५ ॥ साङ्गस्य वेदस्याध्येता वेदाध्यायः । सोऽतिथिर्मधुपर्कमर्हति गां च दक्षिणाम् ॥ ५ ॥ *आचार्य ऋत्विक्स्नातको राजा वा धर्मयुक्तः ॥ ६ ॥ अवेदाध्यायिनोऽप्याचार्यादयो मधुपर्कार्हाः । अत एव ज्ञायते एकदेशाध्यायिनावप्यृत्विगाचार्यौ भवत इति । धर्मयुक्त इति राज्ञो विशेषणम् । वाशब्दः समुच्चये ॥ ६ ॥ * आचार्यायर्त्विजे श्वशुराय राज्ञ इति परिसंवत्सरादुपातिष्ठद्भ्यो गौर्मधुपर्कश्च ॥ ७ ॥ एतत् गृह्ये व्याख्यातम् । गौरत्र दक्षिणाधिका विधीयते ॥ ७ ॥ कोऽसौ मधुपर्क इत्यत आह—
* दधिमधुसंसृष्टं मधुपर्कः पयो वा मधुसंसृष्टम् ॥ ८ ॥ गृह्योक्तस्यानुवादोऽयम् । उत्तरविवक्षया ॥ ८ ॥ *अभाव उदकम् ॥ ९ ॥ दधिपयसोरलाभ उदकमपि देयम् । मधुसंसृष्टमित्येके । नेत्यन्ये । पूर्वत्र पुनर्मधुसंसृष्टग्रहणात् ॥ ९ ॥ वेदाध्याय इत्यत्र विवक्षितं वेदमाह—* षडङ्गो वेदः ॥ १० ॥ षड्भिरङ्गैर्युक्तोऽत्र वेदो गृह्यत इति ॥ १० ॥ कानि तान्यङ्गानीत्यत आह—* छन्दःकल्पो व्याकरणं ज्योतिषं निरुक्तं शीक्षा छन्दोविचितिरिति ॥ ११ ॥ छन्दो वेदः । तत्कल्पयति प्रतिशाखं शाखान्तराविरोधेन न्यायप्रासेन चाङ्गकलापेन उपेतस्य कर्मणः प्रयोगकल्पनयोपस्कुरुत इति छन्दःकल्पः कल्पसूत्राणि । व्याकरणम् अर्थविशेषमाश्रित्य पदमन्वाचक्षाणं पदपदार्थप्रतिपादनेन वेदस्योपकारकं विद्यास्थानम् । सूर्यादीनि ज्योतींष्यधिकृत्य प्रवृत्तं शास्त्रं ज्योतिषम् । आदिवृद्ध्यभावे यत्नः कार्यः । तदध्ययनोपयोगिनमनुष्ठानोपयोगिनं च कालविशेषं प्रतिपादयदुपकारकम् । निरुक्तमपि व्याकरणस्यैव कार्यम् । शीक्षा वर्णानां स्थानप्रयत्नादिकमध्ययनकाले कर्माणि च मात्राणामुच्चारणप्रकारं शिक्षयतीति । पृषोदरादित्वाद्दीर्घः । गायत्र्यादीनि च्छन्दांसि यथा विधीयन्ते विविच्य ज्ञायन्ते, सा छन्दोविचितिः । एतान्यङ्गानि अङ्गवत्त्वादङ्गत्वम् । 'मुखं व्याकरणं तस्य ज्योतिषं नेत्रमुच्यते । निरुक्तं श्रोत्रमुद्दिष्टं छन्दांसि विचितिः पदे ॥ शीक्षा घ्राणं तु वेदस्य हस्तौ कल्पान्प्रचक्षते ।' इ-

ति : उपकारकत्वाच्चोक्त उपस्करः ॥ ११ ॥ अत्र चोदयति— *शब्दार्थारम्भाणां तु कर्मणां समाम्नायसमाप्तौ वेदशब्दस्तत्र संख्या विप्रतिषिद्धा ॥ १२ ॥ शब्दार्थतया यान्यारभ्यन्ते न प्रत्यक्षादिप्रमाणगोचरतया, तानि शब्दार्थारम्भणानि कर्माण्यग्निहोत्रादीनि । तेषां समाम्नाय उपदेशः । तस्य समाप्तौ यावता ग्रन्थजातेन समाप्तोऽनुष्ठानपर्यन्तो भवति, तत्र वेदशब्दो वर्तते । वेदयति धर्मं विन्दत्यनेनेति वा धर्ममिति । न च मन्त्रब्राह्मणमात्रेणानुष्ठानपर्यन्त उपदेशो भवति । किं तु कल्पसूत्रैरपि सह । ततश्च तेषामपि वेदस्वरूप एवानुप्रवेशात् षडेवाङ्गानि । तत्षट्संख्या विप्रतिषिद्धेति ॥ १२ ॥ परिहरति—*अङ्गानां तु प्रधानैरव्यपदेश इति न्यायवित्समयः ॥ १३ ॥ अङ्गान्येव कल्पसूत्राणि न वेदस्वरूपाणि । पौरुषेयतास्मरणात् । कतिपयान्येव तेषु ब्राह्मणवाक्यानि भूयिष्ठानि स्ववाक्यानि । अङ्गानां च तेषां प्रधानवाचिभिर्शब्दैः छन्दो वेदो ब्राह्मणमित्यादिभिर्व्यपदेशो न न्याय्य इति न्यायविदां सिद्धान्तः । ताविमौ पूर्वपक्षसिद्धान्तौ कल्पसूत्राधिकरणे स्पष्टं द्रष्टव्यौ । यत्तूक्तं न मन्त्रब्राह्मणमात्रेण पूर्ण उपदेश इति । नैष स्थाणोरपराधः, यदेनमन्धो न पश्यतीति पुरुषापराधः संभवति; इदं तु भवानाचष्टां, कल्पसूत्रकाराणामियं प्रयोगकल्पना कुतोऽस्तीति । न्यायोपबृंहिताभ्यां मन्त्रब्राह्मणाभ्यामिति वक्तव्यम् । नान्या गतिः । एवं सति भवानपि यततां तादृशाभ्यामिति । ततो मन्त्रब्राह्मणाभ्यामेव पूर्णमवभोत्स्यत इति ॥ १३ ॥ *अतिथिं निराकृत्य यत्रगते भोजने स्मरेत्ततो विरम्योपोष्य ॥ १४ ॥ अतिथिमागतं केनचित्प्रकारेण निराकृत्य भोजने प्रवृत्तो यत्रगते यदवस्थाप्राप्ते भोजने स्मरेत् विस्मृत्या स निराकृत इति । तत्रैव भोजनाद्विरम्य तस्मिन्नहन्युपोष्य ॥ १४ ॥

इति अष्टमी खण्डिका ॥ प्र०२ प०३ ख०८ ॥

---

* श्वो भूते यथामनसं तर्पयित्वा संसाधयेत् ॥ १ ॥ अपरेद्युस्तमन्विष्य यथामनसं यथेच्छं तर्पयित्वा संसाधयेत गच्छन्तमनुव्रजेत् ॥ १ ॥ कुत इत्याह— * यानवन्तमा यानात् ॥ २ ॥

स चेदतिथिर्यानवान् भवति, तदा तस्या रोहणादनुव्रजेत् ॥ २ ॥ *यावन्नानुजानीयादितरः ॥ ३ ॥ इतरो यानरहितो यावन्नानुजानीयात् गच्छेति, तं तावदनुव्रजेत् ॥ ३ ॥ * अप्रतीभायां सीम्नो निवर्तेत ॥४॥ यदि तस्यान्यपरतयाऽनुज्ञाया प्रतीभा बुद्धिर्न जायते, ततस्सीम्नि प्राप्तायां ततो निवर्तेत । प्रतेर्दीर्घश्छान्दसः । 'संसाधये'दित्यादि सर्वातिथिसाधारणम् । न निराकृतमात्रविषयम् ॥ ४ ॥ *सर्वान्वैश्वदेवे भागिनः कुर्वीता श्वचण्डालेभ्यः ॥ ५ ॥ वैश्वदेवान्ते भोजनार्थमुपस्थितान् सर्वानेव भागिनः कुर्वीत आश्वचण्डालेभ्यः । अभिविधावाकारः । तेभ्योऽपि किञ्चिद्देयम् । तथा च मनुः—'शुनां च पतितानां च श्वपचां पापरोगिणाम् । वयसां च कृमीणां च शनकैर्निर्वपेद्भुवि ॥' इति ॥ ५ ॥ *नानर्हद्भ्यो दद्यादित्येके ॥ ६ ॥ अनर्हद्भ्यश्चाण्डालादिभ्यो न दद्यादित्येके मन्यन्ते । तत्र दाने अभ्युदयः । अदाने न प्रत्यवाय इति ॥ ६ ॥ * उपेतः स्त्रीणामनुपेतस्य चोच्छिष्टं वर्जयेत् ॥ ७ ॥ उपेतः कृतोपनयनोऽसमावृत्तः । स स्त्रीणामनुपेतस्य चोच्छिष्टं न भक्षीत । एवं सति समावृत्तस्योच्छिष्टं भुञ्जानस्य न दोषः स्यात् । एवं तर्हि उपेत आन्तात् कृतदारोऽकृतदारश्च स्त्रीणामनुपेतस्य चोच्छिष्टं वर्जयेत् । एवमप्युपेतस्य यस्य कस्यचिदपि यदुच्छिष्टं तद्भोजने न दोषः स्यात् । 'पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोक्तव्य'मित्येतन्निरर्थकं भविष्यति पितुरेव भ्रातुरेवेति । यद्येवं सूत्रमेवेदमनर्थकं तस्मादेव क्रियमाणादन्यत्राप्रसङ्गः । इदं तर्हि प्रयोजनं यदा पितानुपेतः पुत्रस्तु प्रायश्चित्तं कृत्वा कृतोपनयनः तदा तं प्रति पितुरनुपेतस्योच्छिष्टं प्रतिषिध्यते । एवं ज्येष्ठेऽपि द्रष्टव्यम् । एतदपि नास्ति प्रयोजनम् । उक्तं हि 'धर्मविप्रतिपत्तावभोज्य'मिति । 'तेषामभ्यागमनं भोजनं विवाहमिति च वर्जये'दिति च । तथा स्त्रीणामित्येतत् किमर्थम् । मातुरुच्छिष्टप्रतिषेधार्थम् । कथं प्रसङ्गः । 'मातरि पितर्याचार्यवच्छुश्रूषे'ति वचनात् 'यदुच्छिष्टं प्राश्नाति हविरुच्छिष्टमेव त'दित्याचार्योच्छिष्टस्य हविष्ट्वेन प्रशस्तत्वाच्च । एवमपि 'पितुर्ज्येष्ठस्ये'त्यत्र ग्रहणादेव सिद्धम् । तस्मात् केषुचिज्जनपदेषु भार्ययानुपेतेन च सह भोजनमाचरन्ति । तथाह बोधायनः—

'यानि दक्षिणतस्तानि व्याख्यास्यामो' यथैतदनुपेतेन सह भोजनं स्त्रिया-सह भोजन'मिति। तस्य दुराचारत्वमनेन प्रतिपाद्यते ॥७॥ ***'सर्वाण्युदक-पूर्वाणि दानानि ॥८॥** सर्वाणी'ति वचनात् भिक्षाप्युदकपूर्वमेव देया ॥८॥ ***यथाश्रुति विहारे ॥९॥** विहारे यज्ञकर्मणि यानि दानानि दक्षिणादीनाम् । तानि यथाश्रुत्येव । नोदकपूर्वाणि ॥९॥ *** ये नित्यभाक्तिकास्तेषामनुपरोधेन संविभागो विहितः ॥१०॥** ये नित्यभाक्तिकाः भक्ताहाः कर्मकरादयः तेषामुपरोधो यथा न भवति तथा वैश्वदेवान्ते अभ्यागतेभ्यः संविभागः कर्तव्यः ॥ १० ॥ ***काममात्मानं भार्यां पुत्रं वोपरुन्ध्यान्न त्वेव दासकर्मकरम् ॥ ११ ॥** दासो भूत्वा यः कर्म करोति स दासकर्मकरः तम् । आत्माद्युपरोधेनापि नोपरुन्ध्यात् । किं पुनरागतार्थमुपरुन्ध्यादिति । अतस्तं केवलं कर्मकरं नोपरुन्ध्यात् ॥ ११ ॥ *** तथा चात्मनोऽनुपरोधं कुर्याद्यथा कर्मसु समर्थस्स्यात् ॥१२॥** कर्मसु अग्निहोत्रादिषु आर्जनेषु च यथा स्वयं समर्थो भवति तथात्मानं नोपरुन्ध्यात् कुटुम्बी ॥१२॥ **अथाप्युदाहरन्ति—'अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनः । द्वात्रिंशतं गृहस्थस्यापरिमितं ब्रह्मचारिणः । आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः । अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नता'मिति ॥१३॥** अथैतस्मिन्नात्मानं नोपरुन्ध्यादितिविषये श्लोकावुदाहरन्ति । मुनेः सन्न्यासिनः भक्ष्याः अष्टौ ग्रासाः आस्यातिकारेण । अरण्यवासी वानप्रस्थः । तस्य षोडश । द्वात्रिंशत् ग्रासा गृहस्थस्य । प्रथमार्थे द्वितीया । ब्रह्मचारिणस्तु विद्यार्थस्य नैष्ठिकस्य च ग्रासनियमो नास्ति । द्वितीयेन श्लोकेनाहिताग्निविषये 'कालयोर्भोजन'मित्ययमपि नियमो नास्तीति प्रतिपाद्यते । अनडुद्ग्रहण दृष्टान्तार्थम् । ब्रह्मचारिग्रहणं दृढार्थम् । सिध्यन्ति स्वकार्यक्षमा भवन्ति ॥१२॥

**इति नवमी खण्डिका ॥ प्र०२ प०४ ख०९ ॥**

**इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्**
**उज्ज्वलायां द्वितीयप्रश्ने चतुर्थः पटलः ॥४॥**

*भिक्षणे निमित्तमाचार्यो विवाहो यज्ञो मातापित्रोर्बुभूर्षाऽर्हतश्च नियमविलोपः ॥१॥ भिक्षणं याचनम् । तत्राचार्यादयो निमित्तम् । बुभूर्षा भर्तुमिच्छा । अर्हतो विद्यादिमतः अग्निहोत्रादेर्नियमे योग्यस्यार्थस्याभावेन लोपः ॥१॥ *तत्र गुणान् समीक्ष्य यथाशक्ति देयम् ॥२॥ तत्रैवंभूते भिक्षणे याचतः श्रुतवृत्तादिकान् गुणान् समीक्ष्य शक्त्यनुरूपमवश्यं देयम् । अदाने प्रत्यवायात् । गौतमस्तु निमित्तान्तरमप्याह—गुर्वर्थनिवेशौषधार्थवृत्तिक्षीणयक्ष्यमाणाध्ययनाध्वसंयोगवैश्वजितेषु द्रव्यसंविभागो बहिर्वेदि भिक्षमाणेषु कृतान्नमितरे'ष्विति । वैश्वजितो विश्वजिद्यागस्य कर्ता सर्वस्वदक्षिणः ॥२॥ *इन्द्रियप्रीत्यर्थस्य तु भिक्षणमनिमित्तम् ॥३॥ इन्द्रियद्वारा आत्मनः प्रीतिरिन्द्रियप्रीतिः । तामर्थयमानो यो भिक्षेत स्रक्चन्दनादि तन्मूल्यं वा । तद्भिक्षणं नियमेन दानस्य निमित्तं न भवति ॥३॥ *तस्मान्न तदाद्रियेत ॥४॥ अदानेऽपि न प्रत्यवायः । विवाहोऽपि द्वितीयो न निमित्तं सत्यां प्रथमायां धर्मप्रजासम्पन्नायाम् । तदर्थमिदं वचनम् । अन्यत्र प्राप्त्यभावात् ॥४॥ *स्वकर्म ब्राह्मणस्याध्ययनमध्यापनं यज्ञो याजनं दानं प्रतिग्रहणं दायाद्यं शिलोञ्छः ॥५॥ सर्ववर्णानां स्वधर्मानुष्ठानं इत्युक्तम् । तेऽमी स्वधर्मा उच्यन्ते । पुत्राय दीयत इति दायः । तमादत्त इति दायादः । तस्य भावो दायाद्यम् । दायस्वीकारः । क्षेत्रादिषु पतितानि मञ्जरीभूतानि ततश्च्युतानि धान्यानि शिलशब्दस्यार्थः । तेषामुञ्छनमंगुलीभिरेकैकस्य आदानं शिलोञ्छः । एतान्यध्ययनादीन्यष्टौ ब्राह्मणस्य स्वकर्म । तेष्वध्ययनयज्ञदानानि द्विजातिसामान्येन कर्तव्यतया नियम्यन्ते । इतराण्यर्थितया द्रव्यार्जने प्रवृत्तस्योपायान्तरनिवृत्त्यर्थान्युपदिश्यन्ते । अध्यापनादिभिरेव द्रव्यमार्जयेन्न चौर्यादिभिरिति ॥५॥ *अन्यच्चापरिगृहीतम् ॥६॥ यच्चान्यत् केनाप्यपरिगृहीतमारण्यमूलफलादि । तेनापि जीवेदिति प्रकरणात् गम्यते । एतेन विधिर्व्याख्यातः ॥६॥ *एतान्येव क्षत्रियस्याध्यापनयाजनप्रतिग्रहणानीति परिहाप्य दण्डयुद्धाधिकानि ॥७॥ एतान्येव क्षत्रियस्यापि स्वकर्म । अध्यापनादीनि त्रीणि वर्जयित्वा । दण्डश्च युद्धं चाधिकम् ॥७॥ *क्ष-

त्रियवद्वैश्यस्य दण्डयुद्धवर्जं कृषिगोरक्ष्यवाणिज्याधिकम् ॥ ८ ॥ गोरक्ष्यं गवां रक्षणम् । भावे ण्यत्प्रत्ययः । वणिजो भावो वणिज्या, क्रयविक्रयव्यवहारः । कुसीदं च । 'दूतवणिग्भ्यां चेति वक्तव्य'मिति यत्प्रत्ययः ॥ ८ ॥ *नाननूचानमृत्विजं वृणीते न पणमाणम् ॥ ९ ॥ साङ्गस्य वेदस्याध्येतां प्रवक्ता चानूचानः । अतादृशमृत्विजं न वृणीते नाप्येतावद्देयमिति परिभाषमाणम् ॥ ९ ॥ *अयाज्योऽनधीयानः ॥ १० ॥ अनधीतवेदं न याजयेत् । तदानीमपेक्षितं मन्त्रं यथाशक्ति वाचयन् । क्षत्रियस्य युद्धं स्वकर्मेत्युक्तम् ॥ १० ॥ तत्कथं कर्तव्यमित्याह— * युद्धे तद्योगा यथोपायमुपदिशन्ति तथा प्रतिपत्तव्यम् ॥ ११ ॥ युद्धविषये तथा प्रतिपत्तव्यं यथा तद्योगा उपायमुपदिशन्ति तस्मिन्युद्धकर्मणि युद्धशास्त्रे वा येषामभियोगः ते तद्योगाः ॥ ११ ॥ * न्यस्तायुधप्रकीर्णकेशप्राञ्जलिपराङावृत्तानामार्या वधं परिचक्षते ॥ १२ ॥ शास्त्रैरधिगतानामिन्द्रियदौर्बल्याद्विप्रतिपन्नानां शास्ता निर्वेषमुपदिशेद्यथाकर्म यथोक्तम् ॥ १३ ॥ तस्य चेच्छास्त्रमतिप्रवर्तेरन् ॥ १४ ॥ न्यस्तायुधः त्यक्तायुधः । प्रकीर्णकेशः केशानपि नियन्तुमक्षमः । प्राञ्जलिः कृताञ्जलिः । पराङावृत्तः पराङ्मुखः । सर्व एते भीताः । एतेषां युद्धे वधमार्यास्सन्तो गर्हन्ते । परिगणनादन्येषां वधे न दोषः । तथा च गौतमः—'न दोषो हिंसायामाहवे' इति । न्यस्तायुधः प्रकीर्णकेश इति विसर्जनीयं केचित्पठन्ति । सोऽपपाठः । पराङावृत्त इति ङकारश्छान्दसः । शास्त्रैर्यथोक्तं यथाशास्त्रं गर्भाधानादिभिः संस्कारैः संस्कृताः शास्त्रैरधिगताः तेषामिन्द्रियदौर्बल्यात् अजितेन्द्रियतया विप्रतिपन्नानां स्वकर्मतश्च्युतानां निषिद्धेषु च प्रवृत्तानाम् । शास्ता शासिता आचार्यादिः । निर्वेषं प्रायश्चित्तमुपदिशेत् । यथाकर्म कर्मानुरूपम् । यथोक्तं धर्मशास्त्रेषु । तस्य चेच्छासितुः शास्त्रं शासनं अतिप्रवर्तेरन् निवर्तेरन् न तत्र तिष्ठेयुः ॥ १२ ॥ १३ ॥ १४ ॥ * राजानं गमयेत् ॥ १५ ॥ एवमसौ करोतीति ॥ १५ ॥ * राजा पुरोहितं धर्मार्थकुशलम् ॥ १६ ॥ स राजा धर्मशास्त्रेष्वर्थशास्त्रेषु कुशलं पुरोहितं गमयेत् । विनियम्य

तामसाविति ॥ १६ ॥ * स ब्राह्मणान्नियुञ्ज्यात् ॥ १७ ॥ स पुरोहितः ब्राह्मणाश्चेदतिक्रमणकारिणः प्रापिताः तान्नियुञ्ज्यात् अनुरूपेषु प्रायश्चित्तेषु नियुञ्ज्यात् ॥ १७॥ यदि ते तत्रापि न तिष्ठेयुः तदा किं कर्तव्यमित्यत आह— * बलविशेषेण वधदास्यवर्जं नियमैरुपशोषयेत् ॥ १८॥ ततस्तान्नियमैरुपवासादिभिरुपशोषयेत्। बलविशेषेण बलानुरूपम्। वधदास्यवर्जं वधस्ताडनादि वधं दास्यं च वर्जयित्वा। सर्वमन्यत् बन्धनादिकं बलानुरूपं कारयेत्। यावत्ते मन्येरन् चरेम प्रायश्चित्तमिति॥ १८॥

इति दशमी खण्डिका ॥ प्र०२ प०५ ख०१० ॥

---

एवं ब्राह्मणविषये उक्तम्। इतरेषामाह— * इतरेषां वर्णानामाप्राणविप्रयोगात्समवेक्ष्य तेषां कर्माणि राजा दण्डं प्रणयेत् ॥१॥ इतरेषां ब्राह्मणव्यतिरिक्तानां वर्णानां राजा पुरोहितोक्तदण्डं स्वयमेव प्रणयेत्। तेषां कर्माणि समवेक्ष्य तदनुरूपमा प्राणविप्रयोगात्। अभिविधावाकारः ॥ १ ॥ * न च सन्देहे दण्डं कुर्यात् ॥ २ ॥ अपराधसन्देहे राजा दण्डं न कुर्यात् ॥२॥ *किन्तु सुविचितं विचित्या दैवप्रश्नेभ्यो राजा दण्डाय प्रतिपद्येत ॥३॥ आ दैवप्रश्नेभ्यः साक्षिप्रश्नादिभिः शपथान्तैः सुविचितं यथा भवति तथा विचित्य निरूप्य। राजा दण्डाय प्रतिपद्येत उपक्रमेत ॥ ३ ॥ एवं कुर्वतः फलमाह— * एवंवृत्तो राजोभौ लोकावभिजयति ॥ ४ ॥ एवं भूतं वृत्तं यस्य स एवंवृत्तः। अत्र मनुः— 'अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन्। अयशो महदाप्नोति प्रेत्य स्वर्गाच्च हीयते ॥' इति ॥ ४ ॥ गच्छता प्रतिगच्छता च पथि समवाये तेन कस्मै पन्था देय इत्यत आह—*राज्ञः पन्था ब्राह्मणेनासमेत्य ॥ ५ ॥ राजा अभिषिक्तः। स यदि ब्राह्मणेन समेतो न भवति, तदा तस्य पन्था दातव्यः। क्षत्रियेऽप्यनभिषिक्ते। एतदर्थमेव चेदं वचनम्। अन्यत्र 'वर्णज्यायसां च' इति वक्ष्यमाणेनैव सिद्धम् ॥ ५ ॥ * समेत्य तु ब्राह्मणस्यैव पन्थाः ॥ ६ ॥ आपदि शिष्यभूतब्राह्मणविषयमिदम्। शिष्यभूतेनापि ब्राह्मणेन समेत्य तस्यैव राज्ञा पन्था देय इति ॥ ६ ॥ *यानस्य भा-

राभिनिहितस्यातुरस्य स्त्रिया इति सर्वैर्दातव्यः ॥ ७॥ यानं शकटादि। भाराभिनिहितो भाराक्रान्तः। आतुरो व्याधितः। स्त्रियाः यस्याः कस्याश्चिदपि। एतेभ्यस्सर्वैरेव वर्णैः पन्था दातव्यः। इतिशब्दात् स्थविरबालकृशादिभ्यश्च ॥ ७॥ * वर्णज्यायसां चेतरैर्वर्णैः ॥ ८॥ वर्णेनोत्कृष्टा वर्णज्यायांसः। तेषां चेतरैरपकृष्टैर्वर्णैर्बाह्यैश्च दातव्यः ॥ ८॥ * अशिष्टपतितमत्तोन्मत्तानामात्मस्वस्त्ययनार्थेन सर्वैरेव दातव्यः ॥९॥ अशिष्टो मूर्खः। अन्ये प्रसिद्धाः। एतेषां सर्वैरेव सजातीयैरुत्कृष्टैरपकृष्टैर्वर्णैर्बाह्यैश्चात्मस्वस्त्ययनार्थेन सर्वेणैव दातव्यः। आत्मस्वस्त्ययनमात्मत्राणमात्रम्। तेन प्रयोजनेन तदर्थम्। न त्वदृष्टार्थमिति। अत्र कौटिल्येन देयस्य पथः प्रमाणमुक्तम्—'पञ्चारत्नी रथपथश्चत्वारो हस्तिपथः द्वौ द्वौ क्षुद्रपशुमनुष्याणा' मिति ॥ ९॥ * धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते जातिपरिवृत्तौ ॥ १०॥ धर्मचर्यया स्वधर्मानुष्ठानेन। जघन्यो वर्णः शूद्रादिः। पूर्वं पूर्वं वर्णमापद्यते वैश्यादिं प्राप्नोति। जातिपरिवृत्तौ जन्मनः परिवर्तने। शूद्रो वैश्यो जायते। तथापि स्वधर्मनिष्ठः क्षत्रियो जायते। तत्रापि स्वधर्मपरो ब्राह्मण इति। एवं क्षत्रियवैश्ययोरपि द्रष्टव्यम् ॥ १०॥ * अधर्मचर्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ ॥ ११॥ पूर्वेणोक्तम्। महापातकव्यतिरिक्ताधर्मानुष्ठानविषयमेतत्। महापातकेषु 'स्तेनोऽभिशस्त' इत्यादिना नीचजातिप्राप्तेरुक्तत्वात् ॥ ११॥ * धर्मप्रजासम्पन्ने दारे नान्यां कुर्वीत ॥ १२॥ श्रौतेषु गार्ह्येषु स्मार्तेषु च कर्मसु श्रद्धा भक्तिश्च धर्मसम्पत्तिः। प्रजासम्पत्तिः पुत्रवत्त्वम्। एवंभूते दारे सति नान्याम्। दार इति प्रकृतम्। अन्यामिति स्त्रीलिङ्गनिर्देशः। अत्रार्थाद्भार्यामिति गम्यमानेनान्यां भार्यां कुर्वीत नोद्वहेत् ॥ १२॥ * अन्यतराभावे कार्या प्रागग्न्याधेयात् ॥ १३॥ धर्मप्रजयोरन्यतरस्याभावे कार्या उद्वाह्या। तत्रापि प्रागग्न्याधेयात् नोर्ध्वमाधानात्। एतदर्थमेवेद वचनम्। उभयसम्पत्तौ न कार्येत्युक्ते अन्यतराभावे कार्येत्यस्यांशस्य प्राप्तत्वात्। यदा चान्यतराभावे कार्या तदा का शङ्का उभयाभावे कार्येति ॥ १३॥ प्रागग्न्याधेयादित्यत्र हेतुः— * आधाने हि सती कर्मभिस्सम्बध्यते येषामेतदङ्ग-

म् ॥१४॥ हि यस्मात् आधाने सती विद्यमाना सहान्विता कर्मभिस्सम्ब-ध्यते अधिक्रियते । एषामग्निहोत्रादीनामेतदाधानमङ्गमुपकारकम् । तैः । अत्र 'दारे सती'ति वचनात् मृते तस्मिन्प्रागूर्ध्वं चाधानात् सत्यामपि पुत्रस-म्पत्तौ धर्मसम्पत्त्यर्थं दारग्रहणं भवत्येव । तथा च मनुः—'भार्यायै पूर्वमा-रिण्यै दत्वाग्नानन्त्यकर्मणि । पुनर्दारक्रियां कुर्यात्पुनराधानमेव च ॥' इति । याज्ञवल्क्योऽपि—'आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन्' । इति । न हि वाचनिकेऽर्थे युक्तयः क्रमन्ते । तेनैतन्न चोदनीयम् । यजमानः पूर्वमन्वा-रम्भणीयया संस्कृतो न तस्यायं संस्कारः पुनरापादयितुं शक्यः । या च भार्या आधानात्परमूढा सती सा च पूर्वमसंस्कृता, न तस्या दर्शपूर्णमासा-दिष्वधिकारः । स कथं तया तैर्यष्टुमर्हतीति अन्वारम्भणीयाजन्यश्च सं-स्कारो यदि संयोगवदुभयनिष्ठः तदा, भार्यानाशे नश्यतीति तस्य पुन-स्संस्कारोऽपि नोपपन्नः । यानि च नान्वारम्भणीयामपेक्षन्ते स्मार्तानि गार्ह्याणि यतोऽधिकारस्तस्याविरुद्धः । ननु च प्रागप्याधानात् कर्मभि-स्सम्बध्यन्ते गार्ह्यैस्स्मार्तैश्च, तत्किमुच्यते आधाने हि सती कर्मभिस्सम्ब-ध्यत इति । सत्यम् । अस्मादेव च हेतुनिर्देशादवसीयते प्रागाधानात् सत्यामपि धर्मसम्पत्तौ प्रजासम्पत्तौ च रागान्यस्य कस्यचिद्दारग्रहणे ना-तीव दोष इति । अथ यस्याहिताग्नेर्भार्या सत्येव कर्मण्यश्रद्दधाना अ-शक्ता वा भवति पुत्राश्च मृता अनुत्पन्ना वा तस्य कथम् । यद्येषा यु-क्तिः 'धर्मप्रजासम्पन्न' इति 'कर्मभिस्सम्बध्यत' इति च तदा कर्तव्यो विवाहः । न च 'प्रागग्न्याधेया'दित्यस्य विरोधः । अन्यतराभावे कार्येत्यस्यैव स शेषः । न पुनरुभयारम्भाभावे कार्येत्यस्य । (दृष्टार्थशेषत्वे सम्भवति गम्यमानार्थशे-षत्वकल्पनानुपपत्तेः । सम्भवति च तात्पर्यपर्यवसानम् । भारद्वाजसूत्रस्या-प्ययमेव विषयः । ) भारद्वाजसूत्रे तु यद्यप्यविशेषेणाहिताग्नेर्दा-रानुज्ञा प्रतीयते—"अथ यद्याहिताग्निः पुनर्दारक्रियां कुर्वीत यद्य-ग्नीनोत्सृजेत् लौकिकान्समध्येरन् तस्य पुनरग्न्याधेयं कुर्वीतेत्याश्मरथ्यः, पु-नराधानमित्यालेखनः, पुनरग्न्याधेयमित्यौडुलोमि'रिति । तथापि तस्याप्ययमे-

१. एतत्क्वचिन्नास्ति ॥

व विषयः॥१४॥ * **सगोत्राय दुहितरं न प्रयच्छेत्** ॥१५॥ कन्यागोत्रमेव गोत्रं यस्य तस्मै कन्या न देया। यथा—हारीताय हारीतीं वात्स्याय वात्सीमित्यादि ॥१५॥ ***मातुश्च योनिसम्बन्धेभ्यः** ॥१६॥ मातुर्योनिसम्बन्धाः कन्याया मातुलादयः। चकारात् पितुरप्येवम्। तेभ्यः असगोत्रेभ्योऽपि न देया कन्यका। अत्र मनुः—'असपिण्डा च या मातुरसगोत्रा च या पितुः। सा प्रशस्ता द्विजातीनां दारकर्मण्यमैथुनी॥ व्यासः—'स्नात्वा समुद्वहेत्कन्यां सवर्णां लक्षणान्विताम्। यवीयसीं भ्रातृमतीमसगोत्रां प्रयत्नवः॥' मातुस्सगोत्रामप्येके नेच्छन्त्युद्वाहकर्मणि। जन्मनाम्नोरविज्ञाने नोद्वहेदविशङ्कितः॥ मातुस्सपिण्डा यत्नेन वर्जनीया द्विजातिभिः। इति।' गौतमः—'असमानप्रवरैर्विवाह ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमात्' इति। कात्यायनः—'प्रवर एषामविवाह इत्येतेषु प्रत्यध्यायमाहत्य वचनं येषामेव प्रवरः तेषामेवाविवाह इति। कारिका च भवति—रातीतानामविवाह एषामिति येषां सूत्रकृदब्रवीत्। तेषामेव विवाहः स्यात् नान्येषामिति धारणे'ति। शङ्खः—'दारानाहरेत्सदृशानसमानार्षेयानसम्बन्धानासप्तमपञ्चमात्पितृमातृबन्धुभ्यः। इति।' वसिष्ठः—'गृहस्थो विनीतक्रोधहर्षो गुरुणानुज्ञातः स्नात्वाऽसमानार्षेयामस्पृष्टमैथुनामवरवयसीं भ्रातृमतीं सदृशीं भार्यां विन्देत। पञ्चमीं मातृबन्धुभ्यः सप्तमीं पितृबन्धुभ्यः।' हारीतः—'श्वित्री कुष्ठ्युदरी यक्ष्मामयाव्यल्पायुरनार्षेयं ब्राह्मसमानार्षेयमित्येतान्यपि तान्यपि कुलानि वर्जनीयानि भवन्ति। कुलानुरूपाः प्रजा भवन्तीत्यादितष्षडर्षेयज्ञियत्वादनार्षेयमभेदत्वाद्ब्रह्म एककुलत्वात् समानार्षेयमिति तस्मात् सप्त पितृतः परीक्ष्य पञ्च मातृतोऽनूनकां श्रेष्ठां भ्रातृमतीं भार्यां विन्देत।' पैठीनसिः—'असमानार्षेयां कन्यां वरयेत्। पञ्च मातृतः परिहरेत्सप्त पितृतः त्रीन्मातृतः पञ्च पितृतो वा' याज्ञवल्क्यः—'अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्। अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम्। अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्। पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा॥' विष्णुः—'असगोत्रामसमानप्रवरां भार्यां विन्देत मातृतः पञ्चमात्पितृतः सप्तमात्।' नारदः—'आसप्तमा-

-त्पञ्चमाच्च बन्धुभ्यः पितृमातृतः । अविवाह्यास्सगोत्रास्स्युस्समानप्रवरास्तथा ।' शातातपः—'परिणीय सगोत्रां तु समानप्रवरां तथा । कृत्वा तस्यास्समुत्सर्गमतिकृच्छ्रो विशोधनम् ॥ मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव द्विजश्चान्द्रायणं चरेत् ।' मनुः—'पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च । मातुश्च भ्रातुस्तनयां गत्वा चान्द्रायणं चरेत् । एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत्तु बुद्धिमान् । ज्ञातित्वेनानुपेयास्ताः पतति ह्युपयन्नधः ॥' बोधायनः—'सगोत्रां चेदमत्योपयच्छेत मातृवदेनां बिभृयात् । सगोत्रां मत्वा चान्द्रायणमुपदिशेत् । व्रते परिनिष्ठिते ब्राह्मणीं न त्यजेत् मातृवद्भगिनीवद्गर्भो न दुष्यतीति विज्ञायते । अथ सन्निपाते अविग्रहः तदाध्यायं वर्जयेत् । बोधायनस्य तत्प्रमाणं कर्तव्यम् । मानव्यो हि प्रजा इति विज्ञायत' इति । गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च । ऊनपञ्चाशदेवैषां प्रवरा ऋषिदर्शनात् । एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते । तावत्समानगोत्रत्वमन्यत्र भृग्वङ्गिरोगणात् ॥' इति । सुमन्तुः—'पितृपत्न्यस्सर्वा मातरस्तद्भ्रातरो मातुलाः तत्सुता मातुलसुतास्तस्मात्ता नोपयन्तव्या' इति ॥ १६ ॥ कन्यादानप्रसङ्गाद्विवाहभेदानाह—*ब्राह्मे विवाहे बन्धुशीलश्रुतारोग्याणि बुद्ध्वा प्रजां सहत्वकर्मभ्यः प्रतिपादयेच्छक्तिविषयेणालंकृत्य ॥ १७ ॥ ब्रह्मणा दृष्टो ब्राह्मः । तस्मिन् विवाहे वरस्य बन्ध्वादीन् बुद्ध्वा परीक्ष्य प्रजां दुहितरं सहत्वकर्मभ्यः सहकर्तव्यानि यानि कर्माणि तेभ्यः तानि कर्तुम् । प्रतिपादयेत् दद्यात् । शक्तिविषयेण विभक्तिप्रतिरूपोऽयं निपातः यथाशक्तीत्यस्यार्थे द्रष्टव्यः । यथाशक्त्यलंकृत्य दद्यादित्येष ब्राह्मो विवाहः । 'प्रजासहत्वकर्मभ्य' इति पाठे प्रजार्थं सहत्वकर्मार्थं चेति ॥ १७ ॥ *आर्षे दुहितृमते मिथुनौ गावौ देयौ ॥ १८ ॥ ऋषिभिर्दृष्टे विवाहे मिथुनौ गावौ स्त्रीगवी पुङ्गवश्च दुहितृमते देयौ । एष आर्षः ॥ १८ ॥ *दैवे यज्ञतन्त्र ऋत्विजे प्रतिपादयेत् ॥ १९ ॥ देवैर्दृष्टे विवाहे यज्ञतन्त्रे वितते ऋत्विजे कर्म कुर्वते कन्यां दद्यात् । एष दैवो विवाहः ॥ १९ ॥ *मिथः कामात्सांवर्तेत स गान्धर्वः ॥ २० ॥ यत्र कन्यावरौ रहसि कामात् परस्परं रागात् सांवर्तेते मिथुनीभवतः स गान्धर्वो वि-

वाहः। समानं दीयं पूर्ववत्। अत्र संयोगोत्तरकालं विवाहसंस्कारः कर्तव्यः ॥ २० ॥

**इति एकादशी खण्डिका॥ प्र०२ प०५ ख०११॥**

---

***शक्तिविषयेण द्रव्याणि दत्त्वावहेरन् स आसुरः** ॥ १ ॥ यत्र विवाहे कन्यावते यथाशक्ति द्रव्याणि दत्त्वावहेरन् कन्या स आसुरः। 'वित्तेनानतिस्त्रीमतामासुर' इति गौतमः। तेन कन्यायै गृहक्षेत्राभरणादिदानेन विवाहो नासुरः ॥ १ ॥ ***दुहितृमतः प्रोथयित्वावहेरन् स राक्षसः** ॥ २ ॥ दुहितृमतः कन्यावतः पित्रादीन् प्रोथयित्वा प्रमथ्य यत्रावहेरन् स राक्षसो विवाहः। 'हत्वा भित्त्वा च शीर्षाणि रुदतीं रुदद्भ्यो यत्रावहेरन् स राक्षस' इत्याश्वलायनः। अत्रापि विवाहसंस्कारः कर्तव्यः। द्वौ चापरौ विवाहौ शास्त्रान्तरप्रोक्तौ। तत्राश्वलायनः— 'सह धर्मं चरतमिति प्राजापत्यः। सुप्तां प्रमत्तां वापहरेत्स पैशाच' इति। ताविह पृथङ्नोक्तौ। ब्राह्मराक्षसयोरन्तर्भावादिति ॥ २ ॥ ***तेषां त्रय आद्याः प्रशस्ताः पूर्वः पूर्वः श्रेयान्** ॥ ३ ॥ तेषां विवाहानां मध्ये आद्यास्त्रयो ब्राह्मार्षदैवाः प्रशस्ताः। तत्रापि पूर्वः पूर्वोऽतिशयेन प्रशस्त इति ॥ ३ ॥ ***यथायुक्तो विवाहस्तथा युक्ता प्रजा भवति** ॥ ४ ॥ प्रशस्ते विवाहे जाता प्रजापि प्रशस्ता भवति। निन्दिते निन्दिता। तत्र मनुः—'ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः। ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसम्मताः॥ रूपसत्त्वगुणोपेता धनवन्तो यशस्विनः। पर्याप्तभोगा धर्मिष्ठा जीवन्ति च शतं समाः॥ इतरेषु तु जायन्ते नृशंसानृतवादिनः। जायन्ते दुर्विवाहेषु ब्रह्मधर्मसमुज्झिताः॥' इति। प्राजापत्येन सह ब्राह्माद्याश्चत्वारो ब्राह्मणस्य। गान्धर्वराक्षसौ क्षत्रियस्य। आसुरस्तु वैश्यशूद्रयोः। पैशाचो न कस्यचिदपि ॥ ४ ॥ *** पाणिसमूढं ब्राह्मणस्य नाप्रोक्षितमभितिष्ठेत्** ॥ ५ ॥ ब्राह्मणस्य पाणिना समूढमुपलिप्तं संमृष्टं वा भूप्रदेशमप्रोक्षितं नाभितिष्ठेत् नाधितिष्ठेत्। प्रोक्ष्यैवाधितिष्ठेदिति ॥ ५ ॥ *** अग्निं ब्राह्मणं चान्तरेण नातिक्रामेत्** ॥ ६ ॥ अग्नेर्ब्राह्म-

णस्य च मध्येन न गच्छेत् ॥ ६ ॥ * ब्राह्मणांश्च ॥ ७ ॥ अन्तरेण नातिक्रामेदित्येव । ब्राह्मणानां च मध्येन न गच्छेत् ॥ ७ ॥ * अनज्ञाप्य वातिक्रामेत् ॥ ८ ॥ स्पष्टम् ॥ ८ ॥ * अग्निमपश्च न युगपद्धारयीत ॥ ९ ॥ अग्निमुदकञ्च न युगपद्धारयेत् ॥ ९ ॥ * नानाग्नीनां च सन्निवापं वर्जयेत् ॥ १० ॥ पृथगवस्थितानामग्नीनामेकत्र समानयनं न कुर्यात् । अग्नावग्निं न प्रक्षिपेदित्यन्ये ॥ १० ॥ * प्रतिमुखमग्निमाह्रियमाणं नाप्रतिष्ठितं भूमौ प्रदक्षिणीकुर्यात् ॥ ११ ॥ यदास्य गच्छतः प्रतिमुखमग्निराह्रियते तदा न तं प्रदक्षिणीकुर्यात् । स चेद्भूमौ प्रतिष्ठितो न भवति । प्रतिष्ठिते त्वग्नौ दृष्टे प्रदक्षिणीकुर्यादिति ॥ ११ ॥ * पृष्ठतश्चात्मनः पाणी न संश्लेषयेत् ॥ १२ ॥ स्वे पृष्ठभागे स्वपाणिद्वयं न संश्लेषयेन्न बध्नीयात् ॥ १२ ॥ स्वपन्नभिनिर्मुक्तो नाश्वान्वाग्यतो रात्रिमासीत श्वो भूत उदकमुपस्पृश्य वाचं विसृजेत् ॥ १३ ॥ 'सुप्ते यस्मिन्नस्तमेति' सुप्ते यस्मिन्नुदेति च । अंशुमानभिनिर्मुक्ताभ्युदितौ तौ यथाक्रमम् । स्वपन्नभिनिर्मुक्तो नाश्नन्नभुञ्जानस्तूष्णीं भूतो रात्रिं सर्वामासीत न शयीत । अथापरेद्युः प्रातः स्नात्वा वाचं विसृजेत् । अयमस्य निर्वेषः ॥ १३ ॥ * स्वपन्नभ्युदितो नाश्नान्वाग्यतोऽहस्तिष्ठेत् ॥ १४ ॥ पूर्वेण गतम् । उदकमुपस्पृश्य वाचं विसृजेदिति चात्रापि क्ष्यते । तत्रास्तमिते स्नानप्रतिपत्तेः सायमेव स्नात्वा वाचं विसृज्य सन्ध्यामुपासीत ॥ १४ ॥ * आतमितोः प्राणमायच्छेदित्येके ॥ १५ ॥ यावदङ्गानां ग्लानिर्भवति तावत्प्राणमायच्छेत् प्राणवायुमाकृष्य धारयेत् । प्राणायामं कुर्यादित्येके मन्यन्ते । शक्त्यपेक्षो विकल्पः । तत्र मनुः—'सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह । त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥' इति । एतमावर्तयेद्यावद्ग्लानिः ॥ १५ ॥ * स्वप्नं वा पापकं दृष्ट्वा ॥ १६ ॥ पापकस्वप्नो दुःस्वप्नः मर्कटास्कन्दनादिः । तं च दृष्ट्वा ॥ १६ ॥ * अर्थं वा सिसाधयिषन् ॥ १७ ॥ अर्थं प्रयोजनम् । तच्च दृष्टमदृष्टं वा साधयितुमिच्छन् ॥ १७ ॥ * नियमातिक्रमे चान्यस्मिन् ॥ १८ ॥ नियमानाम् 'उदङ्मुखो मूत्रं कुर्यात्' इत्येवमादीनामतिक्रमे च आतमितोः प्राणमायच्छेदिति सर्वशेषः ॥ १८ ॥ * दोषफलसंशये न तत्कर्तव्यम् ॥ १९ ॥ यस्मि

न्कर्माणि कृते पक्षे दोषः फलं न सम्भाव्यते न तत् कुर्यात् । यथा संशयेऽसहाये देशे एकाकिनो गमनमिति ॥ १९ ॥ *एवमध्यायानध्याये ॥ २० ॥ संशय इत्युपसङ्गस्तमप्यपेक्ष्यते । अध्यायोऽनध्याय इति संशयेऽप्येवं न तत् कर्तव्यमिति । 'सन्ध्यावनुस्तनित' इत्युदाहरणम् । पूर्वस्यैवायं प्रपञ्चः ॥ २० ॥ *न संशये प्रत्यक्षवद्ब्रूयात् ॥ २१ ॥ संशयितमर्थमात्मनो ज्ञानपरिहाराय प्रत्यक्षं निश्चितवन्न ब्रूयात् ॥ २१ ॥ अभिनिर्मुक्ताभ्युदितकुनखीश्यावदाग्रदिधिषुदिधिषूपतिपर्याहितपरीष्टपरिवित्तपरिविन्नपरिविविदानेषु योत्तरोत्तरस्मिन्नशुचिकरनिर्वेषो गरीयान्गरीयान् ॥ २२ ॥ आद्यौ द्वौ गतौ । कुनखी कृष्णनख । श्यावा दन्ता यस्य स श्यावदन् विवर्णदन्त । 'विभाषा श्यावारोकाभ्यामि'ति दत्रादेशः । तस्य नलोपश्छान्दसः । ज्येष्ठायामनूढायां पूर्वं कनीयस्या वोढा अग्रदिधिषुः । पश्चादितरस्या वोढा दिधिषूपतिः । ज्येष्ठे अकृताधाने कृताधानः कनिष्ठः पर्याधाता । ज्येष्ठः पर्याहित । ज्येष्ठे अकृतसोमयागे कृतसोमयाग कनिष्ठः परियष्टा । ज्येष्ठ परीष्ट । अकृतविवाहे ज्येष्ठे कृतविवाहः कनिष्ठः परिविविदान । परिवेत्तेति प्रसिद्ध । ज्येष्ठ परिवित्त । ज्येष्ठभार्यामुपयच्छमान परिविन्न । यस्मिन्नगृहीतभागे वा कनिष्ठो भाग गृह्णाति स ज्येष्ठ परिविन्न । चकार पर्याधातृप्रभृतीनां समुच्चयार्थं । एतेष्वभिनिर्मुक्तादिषु यो य उत्तरस्तस्मिंस्तस्मिन्द्वादशमासादिरशुचिकरनिर्वेषो य पूर्वमुक्त तत्र तत्र गरीयान् गरीयान् भवति । पूर्वत्र पूर्वत्र लघीयान् । अभिनिर्मुक्ताभ्युदितयोरनन्तरोक्तं प्रायश्चित्तद्वयमपि विकल्पेन भवति ॥ २२ ॥ *तच्च लिङ्गं चरित्वोद्धार्यमित्येके ॥ २३ ॥ यस्मिन् कौनख्यादिके लिङ्गे यत् प्रायश्चित्तमुक्तं तच्चरित्वा तत् कौनख्यादिक लिङ्गमुद्धरेदित्येके मन्यन्ते । अन्यत्राहिताग्निभ्य इति स्मृत्यन्तरम् ॥ २३ ॥

इति द्वादशी खण्डिका ॥ प्र० २ प० ५ ख० ॥ १२ ॥

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां द्वितीयप्रश्ने पञ्चमः पटलः ॥ ५ ॥

**सवर्णापूर्वशास्त्रविहितायां यथर्तु गच्छतः पुत्रास्तेषां कर्मभिस्सम्बन्धः॥ १ ॥** सवर्णा चासावपूर्वा च शास्त्रविहिता चेति कर्मधारयः सवर्णा सजातीया । ब्राह्मणस्य ब्राह्मणीत्यादि । अपूर्वा अनन्यपूर्वा अन्यस्मै अदत्ता । न विद्यते पूर्वः पतिरस्या इति । शास्त्रविहिता शास्त्रोक्तेन विवाहकर्मणा संस्कारेण संस्कृता 'सगोत्राय दुहितरं न प्रयच्छे'दित्यादि शास्त्रानुगुणा वा । एवम्भूतायां भार्यायां यथर्तु गृह्योक्तेन ऋतुगमनकल्पेन गच्छतो ये पुत्रा जायन्ते तेषां 'स्वकर्म ब्राह्मणस्ये'त्यादिना पूर्वमुक्तैः कर्मभिस्सम्बन्धो भवति । गच्छथ इति थकारोऽपपाठः ॥ १ ॥ ***दायेन चाव्यतिक्रमश्चोभयोः** ॥ २ ॥ उभयोर्मातापित्रोर्दायेन च तेषां सम्बन्धो भवति अव्यतिक्रमश्च । च इति चेदर्थे । अव्यतिक्रमश्चेत् यदि ते मातरं पितरं च न व्यतिक्रमेयुः । व्यतिक्रमे तु दायहानिरिति । अपर आह – 'उभयोरपि दायेन तेषां व्यतिक्रमो न कर्तव्यः । अवश्यं देयो दाय' इति । ॥ २ ॥ ***पूर्ववत्यामसंस्कृतायां वर्णान्तरे च मैथुने दोषः** ॥ ३ ॥ अन्येन पाणिग्रहणेन तद्वती पूर्ववती । असंस्कृता विवाहसंस्काररहिता । वर्णान्तरे ब्राह्मणादेः क्षत्रियादिषु । तेषु पूर्ववत्यादिषु मैथुने सति दोषो भवति । कस्य तयोरेव मिथुनीभवतोः ॥ ३ ॥ ***तत्रापि दोषवान् पुत्र एव** ॥ ४ ॥ तत्रेति सप्तम्यास्त्रल् । 'इतरेभ्योऽपि दृश्यत' इति । तास्वासु भार्यासु पुत्र एवातिशयेन दोषवान् । तत्र पूर्ववत्यामुत्पन्नौ कुण्डगोलकौ । 'पत्यौ जीवति कुण्डस्स्यान्मृते भर्तरि गोलक' इति । असंस्कृतायामुत्पन्नस्य नामान्तरं नास्ति । किं तु दुष्टत्वमेव । वर्णान्तरे तु जात्यन्तरम् । तत्र गौतमः— 'अनुलोमाः पुनरनन्तरैकान्तरद्व्यन्तरा • सुजातास्सवर्णाम्बष्ठोग्रनिषाददौष्यन्तपारशवाः । प्रतिलोमास्तु सूतमागधायोगवक्षत्तृवैदेहकचण्डाला' इति । एवकारो दुहितृनिवृत्त्यर्थः । तथा च वसिष्ठः —' पतितेनोत्पादितः पतितो भवत्यन्यत्र स्त्रियास्सा हि परगामिनी तामरिक्थामुपेयादि'ति । ' स्त्रीरत्नं दुष्कुलादपी'ति मनुः ॥ ४ ॥ पुत्रेभ्यो दायभागं वदन् अन्यस्य भार्यायामन्येनोत्पादितः किमुत्पादयितुराहोस्वित् क्षेत्रिण इति विचारं निर्णयमाह— ***उत्पादयितुः पुत्र इति हि ब्राह्मणम्** ॥ ५ ॥ न केवलं

ब्राह्मणमेव । वैदिकगाथा अप्यत्रोदाहरन्तीत्याह — * "अथाप्युदाहरन्ति । इदानीमेवाहं जनक स्त्रीणामीर्ष्यामि नो पुरा । यदा यमस्य सादने जनयितुः पुत्रमब्रुवन् । रेतोधाः पुत्रं नयति परेत्य यमसादने तस्माद्भार्यां रक्षन्ति बिभ्यन्तः पररेतसः । अप्रमत्ता रक्षथ तन्तुमेतं मा वः क्षेत्रे परबीजानि वाप्सुः । जनयितुः पुत्रो भवति साम्पराये मोघं वेत्ता कुरुते तन्तुमेतमिति ॥ ६ ॥ जनयितुः पुत्रः क्षेत्रिणो वेति विवादे पराजितस्य क्षेत्रिणो वचनम् । एतावन्तं कालं जनको मन्यमान इदानीमेव स्त्रीणामीर्ष्यामि परपुरुषसंसर्गं न सहे । तदानीं कुत इति चेत् यदा यमस्य सादने पितृलोके जनयितुः पुत्रो भवति पुत्रकृत्यं परलोकगतस्य जनयितुरेव न क्षेत्रिण इत्यब्रुवन् धर्मज्ञाः । युक्त एवार्थः किञ्चिद्विशेषेणोच्यते । रेतोधाः बीजप्रदः पुत्रं नयति पुत्रदत्तं पिण्डादिकमात्मानं नयति प्रापयति । परेत्य मृत्वा । यमसादने यमलोके । तस्मात्कारणात् भार्यां रक्षन्ति पररेतसो बिभ्यन्तः । छान्दसो नुम् बिभ्यतः । अतो यूयमप्यप्रमत्ता अवहिता भूत्वा एनं तन्तुं प्रजासन्तानं रक्षथ । लोडर्थे लट् । रक्षतेत्यर्थः । वः युष्माकम् । क्षेत्रे परबीजानि पररेतांसि मावाप्सुः । व्यत्ययेनात्र कर्मणि कर्तृप्रत्ययः । मावाप्सत उप्तानि मा भूवन् मोप्येरन् । कथमिति साम्पराये परलोके जनयितुरेव पुत्रो भवति वेत्ता परिणेता क्षेत्री तु एतं तन्तुं कुटुम्बं मोघं निष्प्रयोजनं कुरुते नात्मसात्करोति । इतिशब्दो गाथापरिसमाप्तौ । एतच्च क्षेत्रिणोऽनुज्ञामन्तरेण पुत्रोत्पादनविषयम् । यदा तु क्षेत्री वन्ध्यो रुग्णो वा प्रार्थयते, मम क्षेत्रे पुत्रमुत्पादयेति । यदा वा सन्तानक्षये विधवां नियुङ्क्ते यथा विचित्रवीर्यस्य क्षेत्रे सत्यवत्या व्यासेन । तदुत्पन्नः पुत्र उभयोरपि पुत्रो भवति बीजिनः क्षेत्रिणश्च, द्व्यामुष्यायणश्च स भवति । तथाचाचार्य एवाह — यदि द्विपिता स्यादेकैकस्मिन् पिण्डे द्वौ द्वावुपलक्षयेदिति । याज्ञवल्क्योऽप्याह — 'अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः । उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः ॥' इति । द्व्यामुष्यायणको दद्याद्द्वाभ्यां पिण्डोदके पृथक् । रिक्थादर्धं समादद्याद्बीजिक्षेत्रवतोस्तथा ॥' इति ॥ ६ ॥ यदि

पूर्ववत्प्रदमथुन दोषः कथं नाह उचथ्यभारद्वाजौ इत्यत्वंस्य भार्यां जग्मतुः । वसिष्ठश्चाण्डालीमक्षमालाम् । प्रजापतिश्च स्वां दुहितरम् । तत्राह— *** दृष्टो धर्मव्यतिक्रमस्साहसं च पूर्वेषाम् ॥ ७ ॥** सत्यं दृष्टोऽयमाचारः पूर्वेषाम् । स तु धर्मव्यतिक्रम न धर्म । गृह्यमाणकारणत्वात् ॥ ७ ॥ न चैतावदेव साहस च पूर्वेषां दृष्टम् ; यथा जामदग्न्येन रामेण पितृवचनादविचारेण मातुश्शिरश्छिन्न किमिदानीं तेषामपि दोषो नेत्याह —***तेषां तेजोविशेषेण प्रत्यवायो न विद्यते ॥ ८ ॥** ईदृश हि तेषां तेजः । यदेवंविधैरपि पाप्मभिर्न प्रत्यवयन्ति । तद्यथपीकातूलमग्नौ प्रोत प्रदूयेते एव हैषा पाप्मान. प्रदूयन्ते ॥८॥ न चैतावता अर्वाचीनानामपि तथा प्रसङ्ग इत्याह—* **तदन्वीक्ष्य प्रयुञ्जानस्सीदत्यवरः ॥ ९ ॥** तदिति नपुसकमनपुसकेनेत्येकशेष एकवद्भावश्च । त व्यतिक्रम तच्च साहसमन्वीक्ष्य दृष्ट्वा स्वयमपि तथा प्रयुञ्जानोऽवर इदानीन्तन. सीदति प्रत्यवैति । न ह्यग्निः सर्वं दहतीत्यस्माकमपि तथा शक्तिरिति ॥९॥ पुत्रप्रसङ्गेनाह—***दानं क्रयधर्मश्चापत्यस्य न विद्यते ॥ १० ॥** दानग्रहणेन विक्रयोऽपि गृह्यते । त्यागसामान्यात् । क्रयधर्म इति च प्रतिग्रहस्यापि ग्रहणम् । स्वीकारसामान्याच्च । अपत्यस्य दानप्रतिग्रहक्रयविक्रया न कर्तव्याः । द्वादशविधेषु पुत्रेषु दत्तक्रीतयोरपि पुत्रयोर्मन्वादिभिः पठितत्वाच्छास्त्रं सामान्येन प्रतिपन्न । किं तर्हि । ज्येष्ठपुत्रविषय एकपुत्रविषय. स्त्रीविषयो वा । तथा च वसिष्ठ – 'न ज्येष्ठं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा न त्वेकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्वेषां न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानाद्भर्तुः पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राज्ञे निवेद्य निवेशनस्य मध्ये अग्निमुपसमाधाय सम्परिस्तीर्य व्याहृतीभिर्हुत्वा दूरे बान्धव सन्निकृष्टमेव प्रतिगृह्णीया'दिति विश्वजिति च सर्वस्वदाने गवादिवदपत्य न देयमिति । विक्रयस्तु सर्वत्र निषिद्धः । तत्र उपपातकेषु याज्ञवल्क्य आह—'नास्तिक्य व्रतलोपश्च सुतानां चैव विक्रय. ।' इति । बह्वृचब्राह्मणेऽपि शुनश्शेपाख्याने दृश्यते—'स ज्येष्ठं पुत्रं निगृह्णान उवाचे'त्यादि । पुत्रप्रकरणे अपत्य,

शब्दोपादानमपि ज्येष्ठपुत्रविषयत्वस्य लिङ्गम् । न पतन्त्यनेनेत्यपत्यमिति । 'ऋणमस्मिन् सन्नयत्यमृतत्वं च गच्छति । पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥' इति ॥ १० ॥ **विवाहे दुहितृमते दानं काम्यं धर्मार्थं श्रूयते तस्माद्दुहितृमतेऽतिरथं शतं देयं तन्मिथुयाकुर्यादिति तस्यां क्रयशब्दस्संस्तुतिमात्रं धर्माद्धि सम्बन्धः ॥ ११ ॥**

आर्षे विवाहे दुहितृमते दानं क्वचिद्वेदे श्रूयते । तस्माद्दुहितृमते रथेनाधिकं गवां शतं देयम् । तच्च दुहितृमान् मिथुया कुर्यात् मिथ्या कुर्यात् मा देवानां मिथुया कर्मभागधेयमिति दृश्यते । मिथुया कुर्यादिति कोऽर्थः वरायैव पुनर्दद्यादिति । तद्दानं काम्यं कामनिमित्तम् । 'यथा युक्तो विवाहस्तथायुक्ता प्रजा भवती'ति ऋषितुल्याः पुत्रा यथास्युरिति । ततश्च धर्मार्थं न क्रयार्थम् । यस्तु तस्यां विवाहक्रियायां क्रयशब्दः क्वचित् स्मृतौ दृश्यते, स संस्तुतिमात्रम् । द्रव्यप्रदानसाम्यात् । न मुख्यक्रयत्वप्रतिपादनार्थम् । कुतः, हि यस्मात् धर्मादेव हेतोः सम्बन्धो दम्पत्योरित्यार्षे दुहितृमते मिथुनौ गावौ देयाविति । अत्राप्येष एव न्यायः । अत्र मनुः— 'यासामाददते शुल्कं ज्ञातयो न स विक्रयः । अर्हणं तत्कुमारीणामानृशंस्यं च केवलम् ॥' इति । एतच्च सर्वं दानं 'क्रयधर्मश्चापत्यस्य न विद्यत' इत्यस्य व्यभिचारनिवृत्त्यर्थं कर्तव्यमित्युक्तम् ॥ ११ ॥

**इति त्रयोदशी खण्डिका ॥ प्र०२ प०६ ख० १३ ॥**

---

अथ दायविभागः— * **एकधनेन ज्येष्ठं तोषयित्वा जीवन् पुत्रेभ्यो दायं व्यभजेत् समं क्लीबमुन्मत्तं पतितं च परिहाप्य ॥ १ ॥** एकेन प्रधानेन गवादिना ज्येष्ठं पुत्रं तोषयित्वा तृप्तं कृत्वा जीवन्नेव पुत्रेभ्यो दायं व्यभजेत् । सममात्मना परस्परं च तेषां सामान्याभिधानात् क्रमागतं स्वयमार्जितं च । क्लीबादीन् वर्जयित्वा । क्लीबादिग्रहणं जात्यन्धानामुपलक्षणम् । यथाह मनुः— 'अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा । उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः ॥' इति । अन्धादीनां पुत्रसद्भावे तदंशहराः । उन्मत्तपतितौ निवृत्ते निमित्ते क्ली-

नादयस्तु भर्तव्याः । अत्र विभागकालः स्मृत्यन्तरवशाद्ग्राह्यः । तत्र नारदः—'मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च । निवृत्ते चापि मरणात्पितर्युपरतस्पृहे ॥' इति । यद्वा पुत्राणां पृथक्पृथक् धर्मानुष्ठाने शक्तिश्रद्धे भवतः सोऽपि कालः । 'तस्माद्धर्म्यो पृथक्क्रियेति' दर्शनात् । 'जीवन्नि'ति वचनात् जीवन्नेवावश्यं पुत्रान् विभजेत् एष धर्म इति प्रतिपादनाय । अन्यथा तदनर्थकम् । अजीवतोऽप्रसङ्गात् अजीवन्निति स्मृत्यन्तरेषु स्वयमार्जिते पितुरिच्छया विषमविभागो दर्शितः । न स धर्म्य इत्याचार्यस्य पक्षः । भार्याया अप्यंशो न दर्शितः । आत्मन एवांशस्तस्या अपीति मन्यन्ते । वक्ष्यति च 'जायापत्योर्न विभागो विद्यत' इति । केचित्तु पितुर्द्वावंशावित्याहुः । 'द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिते'ति दर्शनात् । अयमप्याचार्यस्य पक्षो न भवति । यथा पुत्राणामेकैक एवांशस्समभागेन तथा पितुरपीति । यद्वा पुत्राणामेवांशसाम्यं आत्मनस्त्वाधिक्येऽपि न दोषः तत्र हारीतः—'पिता ह्याग्रयणः पुत्रा इतरे ग्रहाः यथाग्रयण स्कन्देदुपदस्येदितरेभ्यो गृह्णीयादि'ति । विभागादूर्ध्वं पित्रोर्जीवनाभावे पुत्रभागेभ्यो ग्राह्यमित्युक्तं भवति । इति जीवद्विभागः ॥ १ ॥ अथ मृते कुटुम्बिनि तद्धनस्य गतिमाह—पुत्राभावे यः प्रत्यासन्नः सपिण्डः ॥ २ ॥ 'पुत्राभाव' इति वचनात् सत्सु पुत्रेषु त एव गृह्णीयुरविशेषात्समम् । अत्र नारदीये विशेषः—'यच्छिष्टं पितृदायेभ्यो दत्त्वर्णं पैतृकं च यत् । भ्रातृभिस्तद्विभक्तव्यमृणी स्याद्यथा पिता ॥' इति । कात्यायनस्तु—'भ्रात्रा पितृव्यमातृभ्यां कुटुम्बार्थमृणं कृतम् । विभागकाले देयं तद्रिक्थिभिस्सर्वमेव तु' इति ॥ अत्र याज्ञवल्क्यः—'पितुरूर्ध्वं विभजतां माताप्यंशं समं हरे'दिति । तदत्र नोक्तम् । पुत्रैरेव सह वृत्तिरस्या इति । तथा च मनुः—'पिता रक्षति कौमारे भर्ता रक्षति यौवने । पुत्रस्तु स्थविरीभावे न स्त्री स्वातन्त्र्यमर्हति ॥' इति । एवं मातुरप्यभावे तद्धनं भर्तृकुलादिलब्धं स्वयमार्जितं च तत्पुत्रा अप्रत्ता दुहितरस्सम गृह्णीयुः । 'स्त्रीधनं तदपत्यानां दुहिता च तदंशिनी ॥ अप्रत्ता चेत्समूढा तु लभते सा न मातृक'मिति बृहस्पतिः । 'पितृकुलल्लब्धं चाप्रत्ता एव दुहितरः । मातृस्तु यौतकं यत्स्यात् कुमा-

रीभाग एव सः ।' इति । मनुः "अथ मत्ता दुहितरः पुत्राश्च यानमी तदा। जनन्यां संस्थितायां तु समं सर्वे सहोदराः ॥ भजेरन्मातृकं रिक्थं भगिन्यश्च सनाभयः ।' इति मानवमेव । अत्र व्यासः—'असंस्कृतास्तु ये तत्र पैतृकादेव ते धनात् । संस्कार्या भ्रातृभिर्ज्येष्ठैः कन्यकाश्च यथाविधि ॥' इति । अत्र क्रमविवाहे बृहस्पतिः—'ब्रह्मक्षत्रियविट्शूद्रा विप्रोत्पन्नास्त्वनुक्रमात् । चतुस्त्रिद्व्येकभागेन भजेयुस्ते यथाक्रमम् ॥ क्षत्रजास्त्रिद्व्येकभागा विड्जौ तु द्व्येकभागिनौ ।' इति । मानवे च स्पष्टमुक्तम्—'सर्वं वा रिक्थजातं तद्दशधा प्रविभज्य तु । धर्म्यं विभागं कुर्वीत विधिनाऽनेन धर्मवित् ॥ चतुरोंऽशान् हरेद्विप्रः त्रीनंशान् क्षत्रियासुतः । वैश्यापुत्रो हरेद्व्द्यंशमंशं शूद्रासुतो हरेत् ॥' इति । यस्य तु ब्राह्मणी वन्ध्या मृता वा तत्र क्षत्रियादिसुतास्त्रिद्व्येकभागाः । यस्य त्वेकस्यामेव पुत्रस्सर्वं हरेत् शूद्रापुत्रवर्जम् । यथाह देवलः—'आनुलोम्येकपुत्रस्तु पितुस्सर्वस्वभाग्भवेत् । निषाद एकपुत्रस्तु विप्रस्वस्य तृतीयभाक् ॥ द्वौ सपिण्डस्सकुल्यो वा स्वधादाता तु संहरेत् ' इति । निषादः पारशवः । क्षेत्रविषये बृहस्पतिः—'न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै । यद्यप्यस्य पिता दद्यान्मृते विप्रासुतो हरेत् ॥ शूद्र्यां द्विजातिभिर्जातो न भूमेर्भागमर्हति । सजातावाप्नुयात्सर्वमिति धर्मो व्यवस्थितः ॥' इति । याज्ञवल्क्यः—'जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत् । मृते पितरि कुर्युस्तं भ्रातरस्त्वर्धभागिकम् ॥' इति । भार्याविषये विष्णुः—'मातरः पुत्रभागानुसारतो भागहारिण्य' इति । अत्र, औरसः पुत्रिकाबीजक्षेत्रजौ पुत्रिकासुतः । पुनर्भवश्च कानीनस्सहोढो गूढसम्भवः । दत्तः क्रीतस्स्वयंदत्तः कृत्रिमश्चापविद्धकः । यत्र क्वचोत्पादितश्च पुत्रारुषा दश पञ्च च । अनेनैव क्रमेणैषां पूर्वाभावे परःपरः । पिण्डदोंऽशहरश्चेति प्रायेण स्मृतिषु स्थितिः ॥ तत्रौरसो धर्मपत्नीजः । 'सवर्णापूर्वशास्त्रविहितायामि'ति पूर्वमुक्तः । गौतमः—'पितोत्सृजेत्पुत्रिकामनपत्योऽग्निं प्रजापतिं चेष्ट्वास्मदर्थमपत्यमिति संवाद्ये'ति । बृहस्पतिः—'एक एवौरसः पित्र्ये धने स्वामी प्रकीर्तितः । तत्तुल्या पुत्रिका प्रोक्ता भर्तव्यास्त्वपरे स्मृताः ॥' इति । मनुः—'पुत्रिकायां कृतायां तु

यदि पुत्रोऽनुजायते। समस्तत्र विभागः स्यात् ज्येष्ठता नास्ति हि स्त्रियाः इति। याज्ञवल्क्यः—'अपरेण परक्षेत्रे नियोगोत्पादितः सुतः। उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः॥' इति। अयमेक एवोत्पादयितुर्बीजतः क्षेत्रजस्तु क्षेत्रिणः। बृहस्पतिः—'पुत्रोऽथ पुत्रिकापुत्रस्स्वर्गप्राप्तिकरावुभौ। रिक्थे पिण्डाम्बुदाने च समौ सम्परिकीर्तितौ॥' इति। काश्यपः—'सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः। वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला। उदकं स्पर्शिता या च या च पाणिगृहीतका। अग्निं परिगता या च पुनर्भूप्रसवा च ये'ति॥ 'क्लीबं विहाय पतितं या पुनर्लभते पतिम्। तस्यां पौनर्भवो जातः व्यक्तमुत्पादकस्य सः॥' इति। मनुः— पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः। तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवः॥' इति। नारदः—'कानीनश्च सहोढश्च गूढायां यश्च जायते। तेषां वोढा पिता ज्ञेयस्ते च भागहराः पितुः॥' इति। वसिष्ठः—'अप्रत्तां दुहितां यस्य पुत्रं विन्देत तुल्यतः। पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम्॥' इति। अनूढायामेव मृतायां मातामहस्य पुत्रः अन्यथा वोढुः। मनुः—'या गर्भिणी संस्क्रियते ज्ञाताज्ञातापि वा सती। वोढुस्स गर्भो भवति सहोढ इति चोच्यते। उत्पद्यते गृहे यस्य न च ज्ञेयो न कस्यचित्। स गृहे गूढउत्पन्नस्तस्य स्याद्यस्य तल्पजः॥' दत्तः पूर्वमेवोक्तः। पैठीनसिः—'अथ दत्तक्रीतकृत्रिमपुत्रिकापुत्राः परपरिग्रहेण आर्षेयेण जाताः ते अपहतकुलीना द्व्यामुष्यायणा भवन्ती'ति। मनुः—'भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान् भवेत्। सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत्॥ क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात्। स क्रीतकस्सुतस्तस्य सदृशोऽसदृशोऽपि वा। मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात्। आत्मानं स्पर्शयेद्यस्मै स्वयं दत्तस्तु स स्मृतः॥' इति। सदृशं तु प्रकुर्याद्यं गुणदोषविवर्जितम्। पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः॥ मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा। यं पुत्रं प्रतिगृह्णीयादपविद्धः स उच्यते॥' इति। सर्वे एते सजातीयाः। 'सजातीयेष्वयं प्रोक्तस्तनयेषु यथाविधि।' इति याज्ञवल्क्यवचनात्। विष्णुः—'यत्र क-

च्वनात्पादितस्तु द्वादश' इति । याज्ञवल्क्यः—'पिण्डदोऽशहरश्चैषां पूर्वाभावे परः परः ।' इति । मनुः—'श्रेयसःश्रेयसोऽभावे पापीयान् रिक्थमर्हति ।' इति । नारदः—'क्रमादेते प्रवर्तन्ते मृते पितरि तद्धने। ज्यायसोज्यायसोऽभावे जघन्यस्तदवाप्नुयात् ॥' इति । देवलः—'सर्वे ह्यनौरसस्यैते पुत्रा दायहराः स्मृताः । औरसे पुनरुत्पन्ने तेषु ज्यैष्ठ्यं न तिष्ठति । तेषां सवर्णा ये पुत्रास्ते तृतीयांशभागिनः । शेषास्तमुपजीवेयुर्ग्रासाच्छादनसम्भृताः ॥' इति । मनुः—'षष्ठं तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात् । औरसो विभजन् दायं पित्र्यं पञ्चममेव वा ॥' इति । बृहस्पतिः—'क्षेत्रजाद्यास्सुतास्त्वन्ये पञ्चषट्सप्तभागिनः ।' इति । हारीतः—'विभजिष्यमाण एकविंशं कानीनाय दद्याद्विंशं पौनर्भवायैकोनविंशं द्व्यामुष्यायणायाष्टादशं क्षेत्रजाय सप्तदशं पुत्रिकापुत्रायेतरानौरसाये'ति । वसिष्ठः—'पुत्रं प्रतिग्रहीष्य'न्निति प्रक्रम्य 'तस्मिंश्चेत्प्रतिगृहीते औरस उत्पद्येत चतुर्भागभागि'ति । एवमेतेषु शास्त्रेषु विद्यमानेषु यदाचार्येण पूर्वमुक्तं 'तेषां कर्मभिस्सम्बन्धो दायेनाव्यतिक्रमश्चोभयो'रिति तद्धर्मपत्नीजे पुत्रे सति क्षेत्रजादीनां समांशहरत्वप्रतिषेधपरं वेदितव्यम् । अथाविभाज्यम् । अत्र मनुः—'अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्जयेत् । स्वयमर्हति लब्धं तन्नाकामो दातुमर्हती'ति । कात्यायनः—'नाविद्यानां तु वैद्येन देयं विद्याधनात् क्वचित् । समं विद्याधनानां तु देयं वैद्येन तद्धनम् ॥ परभक्तप्रदानेन प्राप्तविद्यो यदान्यतः । तया प्राप्तं तु विधिना विद्याप्राप्तं तदुच्यते ॥' इति । व्यासः—'पितामहपितृभ्यां च दत्तं मात्रा च यद्भवेत् । तस्य तन्नापहर्तव्यं शौर्यहार्यं तथैव च ॥' इति । याज्ञवल्क्यः—'क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत यः । दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ॥ पत्यौ जीवति यस्त्रीभिरलङ्कारो धृतो भवेत् । न तं भजेरन् दायादा भजमानाः पतन्ति ते ॥' व्यासः—'साधारणं समाश्रित्य यत्किञ्चिद्वाहनायुधम् । शौर्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः ॥ तस्य भागद्वयं देयं शेषास्तु समभागिनः ॥' इति पुत्रदायविभागः ॥ तदभावे तु मृतस्य यः प्र

त्यासन्नः सपिण्डः सः किं दायं हरेतेति वक्ष्यमाणेन सम्बन्धः । 'लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । सप्तमः पिण्डदातैषां सापिण्ड्यं साप्तपूरुषम् ॥' इति सपिण्डलक्षणम् । तेषु योयः प्रत्यासन्नस्सस गृह्णीयादिति। भार्या तु रिक्थग्राहिणस्सपिण्डाद्या रक्षेयुर्न तु दायग्रहणमित्याचार्यस्य पक्षः। श्रूयते हि तस्मात् स्त्रियो निरिन्द्रिया अदायादाइति । मनुरपि—'अनिन्द्रिया अदायादाः स्त्रियो नित्यमिति स्थिति'रिति। अत्र सपिण्डाद्यभावे बृहस्पतिः—'अन्यत्र ब्राह्मणात्किं तु राजा धर्मपरायणः । तत्स्त्रीणां जीवनं दद्यादेष दायविधिस्स्मृतः ॥ अन्नार्थं तण्डुलप्रस्थमपराह्णे तु सेन्धनम्। वसनं त्रिपणक्रीतं देयमेकं त्रिमासतः ॥ एतावदेव साध्वीनां चोदितं विधवाधनम् । वसनस्याशनस्यैव तथैव रजकस्य च । धनं व्यपोह्य तच्छिष्टं दायादानां प्रकल्पयेत् । धूमावसानिकं ग्राह्यं सभायां स्नावतः परा । वसनाशनवासांसि विगणय्य धवे मृते ॥' इति । व्यासः—'द्विसाहस्त्रः परो दायः स्त्रियै देयो धनस्य तु । यच्च भर्त्रा धनं दत्तं सा यथाकाममाप्नुयात्॥' इति । पणानां द्वे सहस्रे परिमाणस्य द्विसाहस्त्रः । एष परो दायः स्त्रियो नाधिक इति । एतच्च प्रभूते धने ज्ञातयश्च न रक्षेयुरिति शङ्कायाम्। एवं 'पत्नी दुहितरश्चे'त्यादीनि यानि पत्न्याः दायप्राप्तिपराणि तान्येवमेव द्रष्टव्यानि । गौतमस्तु, पुत्राभावे पत्न्यास्सपिण्डादिभिस्समांशमाह—'पिण्डगोत्रर्षिसम्बन्धा रिक्थं भजेरन् स्त्री चानपत्यस्ये'ति । अस्यार्थ अनपत्यस्य रिक्थं पिण्डसम्बन्धास्सगोत्रास्तदभावे ऋषिसम्बन्धास्समानप्रवराः स्त्री च पत्नी च । अत्र स्त्रिया सहितास्सपिण्डा भजेरन् तदा स्त्री सह तैरेकमंशं गृह्णीयात् । ततश्च 'पितुरूर्ध्वं विभजतां माताप्यंशं समाहरे'दिति सपिण्डादिभिस्सह ग्रहणमुक्तमिति। वयमप्येतमेव पक्षं रोचयामहे । अत्र पितरि भ्रातरिचासोदर्ये जीवति सोदर्यो भ्राता गृह्णीयादित्येके मन्यन्ते। तथा च शङ्खः—'अपुत्रस्य स्वर्यातस्य द्रव्यं भ्रातृगामि तदभावे मातापितरौ लभेयातां पत्नी वा ज्येष्ठे'ति देवल.—'ततो दायमपुत्रस्य विभजेरन् सहोदराः । कुल्या दुहितरो वापि ध्रियमाणः पितापि च । सवर्णा भ्रातरो माता भार्या चेति यथाक्रमम् ॥'इति । याज्ञवल्क्यः—'संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः । दद्याच्चाप·

हरेच्चांशं जातस्य च मृतस्य च । अन्योदर्यस्तु संसृष्टी नान्योदर्यधनं हरेत् ।
असंसृष्ट्यपि चाददीत संसृष्टो नान्यमातृजः ॥' इति । अत्र सोदरश्रेष्ठय-
मिति प्रत्यासत्त्यतिशयात् पितैवेत्याचार्यस्य पक्षः । तदभावे सोदर्यस्तदभावे
भावे तत्पुत्रस्तदभावे भिन्नोदरास्तदभावे पितृव्य इत्यादि द्रष्टव्यम् । मात्रा-
दयोऽपि स्त्रियो जीवनमात्रं लभेरन्निति ॥ २ ॥ *तदभाव आचार्य आ-
**चार्याभावे अन्तेवासी हृत्वा तदर्थेषु धर्मकृत्येषु वोपयोजयेत् ॥ ३ ॥**
सपिण्डाभावे आचार्यो दायं हरेत् तस्याप्यभावे अन्तेवासी हरेत् । हृत्वा
तदर्थेषु धर्मकृत्येषु तटाकखननादिषूपयोजयेत् । वाशब्दात् स्वयं वा उपयु-
ञ्जीत ॥ ३ ॥ ***दुहिता वा ॥ ४ ॥** दुहिता वा दायं हरेत् । पुत्राभाव इत्येके
अनन्तरोक्ते विषय इत्यन्ये ॥४॥ ***सर्वाभावे राजा दायं हरेत् ॥ ५ ॥**
सर्वग्रहणात् बन्धूनां सगोत्राणां चाप्यभावे ॥५॥ ***ज्येष्ठो दायाद इत्येके**
**॥ ६ ॥** एक एव मन्यन्ते ज्येष्ठ एव पुत्रो दायहरः । इतरे तु तमुपजीवे-
युः । सोऽपि तान् पितेव परिपालयेदिति । तथा च गौतमः— 'सर्वं
वा पूर्वजस्येतरान् बिभृयात्पितृव'दिति ॥ ६ ॥ ***देशविशेषे सुवर्णं कृ-**
**ष्णा गावः कृष्णं भौमं ज्येष्ठस्य ॥ ७ ॥** क्वचिद्देशे सुवर्णादि ज्येष्ठस्य
भाग इत्याहुः । भूमौ जातं भौमं धान्यं कृष्णं माषादि । कृष्णायसमि-
त्यन्ये ॥ ७ ॥ ***रथः पितुः परिभाण्डं च गृहे ॥ ८ ॥** रथः पितुरंशः
गृहे च यत् परिभाण्डमुपकरणं-पीठादि तदपि ॥ ८ ॥ ***अलङ्कारो भा**
**र्यायाः ज्ञातिधनं चेत्येके ॥९॥** भार्यायास्तु धृतोऽलङ्कारोंऽशः ज्ञातिभ्य
पित्रादिभ्यश्च यल्लब्धं धनं तच्चेत्येवमेके मन्यन्ते ॥ ९ ॥ ***तच्छास्त्रैर्वि-**
**प्रतिषिद्धम् ॥१०॥** ज्येष्ठो दायाद इति यदुक्तं तच्छास्त्रविरुद्धम् ॥ १० ।
येन विरुद्धं तद्दर्शयति— ***मनुः पुत्रेभ्यो दायं व्यभजदि-**
**त्यविशेषेण श्रूयते ॥ ११ ॥**पुत्रेभ्य इति बहुवचननिर्देशादविशेषेण श्रव-
णमत्र चोद्यम् ॥ ११ ॥ **अथापि तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाय-**
**यन्तीत्येकवच्छ्रूयते ॥ १२ ॥** अथापि ननु चेत्यर्थः । ज्येष्ठं पुत्रं धनेन
निरवसाययन्ति पृथक्कुर्वन्तीत्येकवदपि श्रूयते । यथा एक एव ज्येष्ठो
दायादः तदनुरूपमपि श्रूयत इति ॥ १२ ॥ परिहरति— ***अथापि**

**नित्यानुवादमविधिमाहुर्न्यायविदो** । यथा तस्मादजावयः पशूनां सहचरन्तीति । तस्मात् स्नातकस्य मुखं रेफायतीव । तस्मात् बस्तश्च श्रोत्रियश्च स्त्रीकामतमाविति ॥ १३ ॥ अथापीति परिहारोपक्रमे. प-शूनां मध्ये अजाश्चावयश्च जातिभेदेऽपि सहचरन्ति । रेफा शोभा । इह तु तद्वत्यमेदोपचार. । ततः रूपः । स्नातकस्य मुखं कुण्डलादिना शो-भते । इवशब्दो वाक्यालङ्कारे । श्रोत्रियस्य स्त्रीकामतमत्वमाचार्यकुले चिरकालं ब्रह्मचारिवासात् । यथैतानि वाक्यानि दृष्टमात्रमनुवदन्ति न कि ञ्चिद्विदधति तस्मात् ज्येष्ठं पुत्रमित्यादिकमपि अविधिरिति न्यायविद आ हुः । न केवलमयमेवानुवादः , किं तर्हि 'मनु. पुत्रेभ्य' इत्ययमप्यनुवादः ॥१३॥ ***सर्वे हि धर्मयुक्ता भागिनः** ॥ १४ ॥ हि शब्दो हेतौ । य-स्मादेवानुवादौ न कस्यचिद्विधायकौ तस्माद्ये धर्मयुक्ताः पुत्रास्सर्वे ते भागिनः । १४॥ **यस्त्वधर्मेण द्रव्याणि प्रतिपादयति ज्येष्ठोऽपि तम भागं कुर्वीत** ॥१५॥ यस्तु ज्येष्ठोऽप्यधर्मेण द्रव्याणि प्रतिपादयति विनियुङ्क्ते तमभागं कुर्वीत.जीवद्विभागे पिता भागं न दद्यात् । ऊर्ध्वं विभागे पितुर्भ्रातरः । अपिशब्दात् किमुतान्यमिति ज्येष्ठस्य प्राधान्यं ख्याप्यते । जीवन् पुत्रे-भ्य इत्यनेन दम्पत्योस्सहभावो दर्शितः । तत्र कारणमाह— ॥ १५ ॥

**जायापत्योर्न विभागो विद्यते** ॥ १६ ॥ स्पष्टम् ॥ १६ ॥ कस्मात्— **पाणिग्रहणाद्धि सहत्वं कर्मसु** ॥ १७ ॥ कर्मार्थं द्रव्यम् । जा-यायाश्च न पृथक्कर्मस्वधिकारः । किं. तर्हि सहभावेन यस्त्वया धर्मश्च कर्तव्यस्सोऽनया सहेति वचनात् । तत्र किं पृथक् द्रव्येणेति ॥ १७ ॥ ***तथा पुण्यफलेषु द्रव्यपरिग्रहेषु च** ॥ १८ ॥ पुण्यफलेषु स्वर्गादिष्व-पि तथा सहत्वमेव । 'दिवि ज्योतिरजरमारभेता'मित्यादिभ्यो मन्त्रलिङ्गेभ्यः । द्रव्यपरिग्रहेषु च द्रव्यार्जनेष्वपि तथा सहत्वमेव तद्वत् । पतिराजयति जाया गृहे विवर्द्धतीति योगक्षेमावुभयायत्ताविति द्रव्यपरिग्रहेऽपि सहत्वम् । ॥१८॥ एतदेवोपपादयति * **न हि भर्तुर्विप्रवासे नैमित्तिके दाने स्तेयमुप-दिशन्ति** ॥१९॥ हि यस्मात् भर्तुर्विप्रवासे सति नैमित्तिके छिन्दत्पाणि दद्यादित्यादिके दाने कृते भार्याया न स्तेयमुपदिशन्ति धर्मज्ञाः । यदि भर्तुरेव

द्रव्यं स्यात्, स्यादेव स्तेयं नैमित्तिके दाने इति वचनात् । विषयान्तरे स्तेयं भवत्येव । एतदेव द्रव्यसाधारण्येऽपि दम्पत्योर्वैषम्यं यत् पतिर्यथेष्टं विनियुङ्क्ते जाया त्वेतावदेवेति । न च पत्युस्स्वयमार्जितस्य विनियोगे जायाया अनुमत्यपेक्षा । स्वतन्त्रत्वात् । स्वतन्त्रो ह्यसौ गृहे यथा राजा राष्ट्रे । अत एव भार्यायास्स्तेयशङ्का न भर्तुः ॥ १९॥

**इति त्रयोदशी खण्डिका ॥ प्र०२ प०६ ख० १३ ॥**

---

***एतेन देशकुलधर्मा व्याख्याताः ॥ १ ॥** ज्येष्ठो दायाद इत्यादिकं शास्त्रविप्रतिषेधादप्रमाणमित्युक्तम् । एतेन देशधर्माः कुलधर्माश्च व्याख्याताः । शास्त्रविप्रतिषिद्धा मातुलसुतापरिणयनादयो प्रमाणं विपरीताः अप्रमाणमिति । गौतमोऽप्याह—'देशकुलधर्माश्चाम्नायैरविरुद्धाः प्रमाण'मिति ॥ १ ॥ ***मातुश्च योनिसम्बन्धेभ्यः पितुश्चासप्तमाद्यावता वा सम्बन्धो ज्ञायते तेषां प्रेतेषूदकोपस्पर्शनं गर्भान्परिहाप्यापरिसंवत्सरान् ॥ २ ॥** मातुर्योनिसम्बन्धा मातुलादयः पितुश्चासप्तमात् पुरुषात् सम्बन्धास्सपिण्डादयः पैतृष्वस्रेयादयश्च तेभ्य आरभ्यासप्तमादित्यन्वयः । यावता वान्तरेण सम्बन्धो ज्ञायते स्मर्यते जन्मना नाम्ना वामुष्यायमस्मत्कूटस्थस्य वंश्य एवनामेति । तथा च मनुः— 'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते । समानोदकभावस्तु जन्मनाम्नोरवेदने ॥' इति । य एवंभूताः पुरुषास्तेषां प्रेतेषु मृतेषु उदकोपस्पर्शनं कर्तव्यम् । गर्भान् बालान् अपरिसंवत्सरानपरिपूर्णसंवत्सरान् परिहाप्य वर्जयित्वा । बालेषु स्नानं कर्तव्यम् इति ॥२॥ ***मातापितरावेव तेषु भर्तारश्च ॥ ३ ॥** बालेषु मृतेषु मातापितरावेवोदकस्पर्शनं कुर्यातां भर्तारश्च ये च तान् बालान् मृतान् हरन्ति निर्हरन्ति तेऽप्युदकोपस्पर्शनं कुर्युरिति । एवमाचार्यस्य पक्षः ॥ ३ ॥ ***भार्यायां परमगुरुसंस्थायां चाकालमभोजनम् ॥ ४ ॥** भार्या पत्नी । परमगुरव आचार्यमातापितरः । संस्था मरणम् । भार्यायां संस्थितायां परमगुरूणां च संस्थायां सत्यां न केवलमुदकोपस्पर्शनं, किं तर्हि अपरेद्युः आ तस्मात्कालात् अभोजनं च ॥ ४ ॥ किं च—**आतुरव्य-**

ज्ञानानि कुर्वीरन् ॥५॥ आतुरत्वं व्यज्यते यैस्तानि च कुर्वीरन् भार्यादिमरणे ॥५॥ कानि पुनस्तानि— *केशान्प्रकीर्य पांसूनोप्यैकवाससो दाक्षिणामुखास्सकृदुपमज्ज्योत्तीर्योपविशन्त्येवं त्रिः ॥ ६ ॥ प्रकीर्य केशान् पांसूनावपन्ति । ओप्य एकवाससः अनुत्तरीयाः । दक्षिणामुखाः दक्षिणां दिशं निरीक्षमाणाः सकृदुपमज्ज्य उदकादुत्तीर्य तीर उपविशन्ति दक्षिणामुखा एव । एवं त्रिः एवमुक्तप्रकारेण त्रिरुपमज्ज्योपविशेयुः ॥ ६ ॥ *तत्प्रत्ययमुदकमुत्सिच्याप्रतीक्षा ग्राममेत्य यत्स्त्रिय आहुस्तत्कुर्वन्ति ॥ ७ ॥ ततः तत्प्रत्ययं तेषां मृतानां भार्यादीनां यथा प्रत्ययो भवति मह्यमुदकं दत्तमिति तथोदकमुत्सिञ्चति । त्रिरित्यनुवृत्तेस्त्रिः । अत्रापस्तम्बसूत्राच्च तिलमिश्रं त्रिर्वाससा हस्ताभ्यां भारद्वाजाय यज्ञशर्मणे एतत्तिलोदकं ददामीति त्रिः प्रयोगः । उत्सिच्याप्रतीक्षाः पृष्ठतोऽनिरीक्षमाणा ग्राममेत्य गृहं प्रविश्य । अनेन बहिरिदं कर्मेति गम्यते । यत्स्त्रियः कर्तव्यमित्याहुः तत्कुर्वन्ति । अग्न्युपस्पर्शनगवालम्भनादीनि । एतत्प्रथमेऽहनि । द्वितीयादिष्वञ्जलिनैकोत्तरवृद्धिरैकादशाहरिति पितृमेध उक्तं द्रष्टव्यम् ॥ ७ ॥ * इतरेषु चैतदेवैक उपदिशन्ति ॥८॥ आकालमभोजनमित्यादि यदुक्तं तदितरेषु भार्यादिभ्योऽन्येष्वपि सपिण्डेषु मृतेषु कर्तव्यमित्येके आचार्या उपदिशन्ति ॥ ८ ॥ * शुचीन्मन्त्रवतस्सर्वकृत्येषु भोजयेत् ॥ ९ ॥ एकान्तेऽपि विधिप्रतिषेधानुसारिणः शुचयः । तान् । मन्त्रवतः अधीतवेदान् । सर्वकृत्येषु श्रौतेषु गार्ह्येषु स्मार्तेषु च कर्मसु दैवेषु पित्र्येषु मानुषेषु च भोजयेत् । 'अन्ते व्रतो ब्राह्मणभोजन'मिति स्मृत्यन्तरे दर्शनात् ॥ ९ ॥ *देशतः कालतः शौचतः सम्यक्प्रतिग्रहीतृत इति दानानि प्रतिपादयति ॥ १० ॥ सप्तम्यर्थे तसिल् । देशः प्रयागादिः । कालः सूर्यग्रहणादिः । शौचं कृच्छ्रादिपरिसमाप्तिः । समीचीनः प्रतिग्रहीता 'तुल्यगुणेषु वयोवृद्धश्श्रेया'नित्यादि । एतेषु दानानि देयानि । प्रतिपादयति दद्यादिति ॥ १० ॥ *यस्याग्नौ नक्रियते यस्य चाग्रं न दीयते न तद्भोक्तव्यम् ॥ ११ ॥ यस्यान्नस्यैकदेशः अग्नौ न क्रियते न हूयते यस्य ब्राह्मणेभ्योऽन्नं न दीयते यस्माद्वोद्धृत्यान्नं न दीयते न तद्भोक्तव्यम् ॥ ११ ॥ *नक्षाग्लवणहो-

मो विद्यते ॥ १२ ॥ यत् मक्ष्यमाणं दृश्यतो ऽलोत्पद्यते तत् क्षारं गुडलिकु-
चादि । क्षारं लवणसंसृष्टं न होतव्यम् ॥ १२ ॥ * तथावरान्नसंसृष्ट-
स्य च ॥ १३ ॥ अवरान्नं कुलुत्थादि । तत्संसृष्टस्याप्यन्नस्य होमो न
विद्यते ॥ १३ ॥ अथ यस्यैवंविधमेव भोज्यमुपस्थितं तस्य कथं होम-
स्तत्राह — * अहविष्यस्य होम उदीचीनमुष्णं भस्मापोह्य तस्मिञ्जुहु-
यात्तद्धुतमहुतं चाग्नौ भवति ॥ १४ ॥ औपासनात् पचनाद्वा अग्नेरु-
दीचीनमुष्णं भस्मापोह्य तस्मिन् भस्मनि जुहुयात् वैश्वदेवमन्त्रैः । एषोऽ
हविष्यस्य होमः । तदेवं क्रियमाणं हुतं च भवति हवनार्थनिर्वृत्तेः । अहुतं चाग्नौ
भवति । भस्ममात्रत्वादिति । अत्र बोधायनः — "अथ यद्येतदेवान्नं स्यादुत्तरतो
भस्ममिश्रानङ्गारान्निरूह्य तेषु जुहुया"दिति । अपर आह — 'यान्यहविष्या-
णि व्यञ्जनान्यहरहर्भोज्यानि तेषामेष संस्कारस्सकृच्च होमोऽमन्त्रक' इति
॥ १४ ॥ उत्तरे द्वे सूत्रे स्पष्टे — * न स्त्री जुहुयात् ॥ १५ ॥ नानुपेतः ॥ १६ ॥
आन्नप्राशनाद्गर्भा नाप्रयता भवन्ति ॥ १७ ॥ अन्नप्राशनात्प्राक् ग-
र्भा बाला नाप्रयता भवन्ति रजस्वलादिस्पर्शनेऽपि । गौतमस्तु अपां मार्ज-
नादिकमिच्छति । यथाह 'अन्यत्रापां मार्जनप्रधावनावोक्षणेभ्यः' ॥ १७ ॥
* आ परिसंवत्सरादित्येके ॥ १८ ॥ यावत् संवत्सरो न परिपूर्यते ता-
वन्नाप्रयता गर्भा इत्येके मन्यन्ते ॥ १८ ॥ * यावता वा दिशो न प्र-
जानीयुः ॥ १९ ॥ यावद्दिग्विभागज्ञानं नास्ति तावन्नाप्रयता भवन्ति ।
* आोपनयनादित्यपरम् ॥ २० ॥ उपनयनादर्वाक् नाप्रयता गर्भा इत्य-
परदर्शनम् ॥ २० ॥ अत्रोपपत्तिः — * अत्र ह्यधिकारः शास्त्रैर्भवति ॥ २१ ॥
हि यस्मादत्रोपनयने सति विधिनिषेधशास्त्रैरधिकारो भवति ॥ २१ ॥
* सा निष्ठा ॥ २२ ॥ उपनयनमपि परामृशतस्तच्छब्दस्य निष्ठाशब्द-
सामानाधिकरण्यात् स्त्रीलिङ्गता । सा निष्ठा तदुपनयनमवसानमधिकार-
स्येति ॥ २२ ॥ * स्मृतिश्च ॥ २३ ॥ अस्मिन्नर्थे स्मृतिरपि भवति । 'प्रागुप-
नयनात्कामचारवादभक्ष' इति गौतमः ॥ २३ ॥

इति पञ्चदशी खण्डिका ॥ प्र० २ प० ६ ख० ॥ १५ ॥

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां द्वितीयप्रश्ने षष्ठः पटलः ॥ ६ ॥

*सह देवमनुष्या अस्मिंल्लोके पुरा बभूवुः । अथ देवाः कर्मभिर्दिवं जग्मुरहीयन्त मनुष्याः । तेषां ये तथा कर्माण्यारभन्ते सह देवैर्ब्रह्मणा चामुष्मिन् लोके भवन्ति । अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच । प्रजानिःश्रेयसार्थं च ॥ १ ॥ श्राद्धविधित्सया तस्य प्ररोचनार्थोऽयमर्थवादः । पुरा किल देवाश्च मनुष्याश्चास्मिन्नेव लोके सहैव बभूवुः । अथ तं सहभावमसहमाना देवाः कर्मभिः श्रौतैस्स्मार्तैर्गार्ह्यैश्च यथावदनुष्ठितै दिवं जग्मुः । मनुष्यास्तु तथा कर्तुमसमर्था अहीयन्त हीना अभवन् इहैव लोके स्थिताः । एवं कर्मणां सामर्थ्यम् । अत इदानीमपि तेषां मनुष्याणां मध्ये ये तथा कर्माण्यारभन्ते कुर्वन्ति यथारभन्त देवास्ते देवैः ब्रह्मणा च सहामुष्मिन् लोके भवन्ति त्रिविष्टपे मोदन्ते । अथैवं हीनान्मनुष्यान् दृष्ट्वा मनुर्वैवस्वतः श्राद्धशब्दं श्राद्धमिति शब्द्यमानमेतत्कर्म प्रोवाच किमर्थं प्रजानिश्रेयसाय तादर्थ्ये चतुर्थी । प्रजानिश्रेयसार्थं । निश्रेयसा ति पाठे छान्दसो यकारस्य चकारः । अपर आह—छान्दसो लिङ्गव्यत्ययः । प्रजानिश्रेयसं चास्य कर्मणः फलमिति ॥ १ ॥ तत्र पितरो देवता ब्राह्मणास्त्वाहवनीयार्थे ॥ २ ॥ तत्र श्राद्धकर्मणि पितरः पितृपितामहप्रपितामहाः देवताः । ब्राह्मणास्तु भुञ्जाना आहवनीयार्थे आहवनीयकृत्ये वेदितव्याः । त्रीणि श्राद्धे करणानि होमो ब्राह्मणभोजनं पिण्डदानं चेति । अत्र भोजनस्य प्रधानकरणत्वख्यापनार्थोऽयमर्थवादः ॥ २ ॥ *मासिमासि कार्यम् ॥ ३ ॥ तदिदं कर्म मासेमासे कर्तव्यम् । वीप्सावचनाद्यावज्जीवकोऽभ्यासः ॥ ३ ॥ अपरपक्षस्यापराह्णः श्रेयान् ॥ ४ ॥ अपरपक्षस्य यान्यहानि तेष्वपराह्णः प्रशस्ततरः ॥ ४ ॥ *तथापरपक्षस्य जघन्यान्यहानि ॥ ५ ॥ अपरपक्षस्यं यान्यहानि पञ्चदश तेषामुत्तरमुत्तरं प्रशस्ततरम् ॥ ५ ॥ *सर्वेष्वेवापरपक्षस्याहस्सु क्रियमाणे पितॄन् प्रीणाति । कर्तुस्तु कालाभिनियमात्फलविशेषः ॥ ६ ॥ सर्वेष्वेवाहस्सु पितृतृप्तिरविशिष्टा । यस्तु कर्ता प्रतिपदादिके काले नियमेन श्राद्धं करोति सर्वेषु मासेषु प्रतिपद्येव द्वितीयायामेवेत्यादि तस्य कर्तुस्तस्मात्कालाभिनियमात् फलविशेषो भवति ॥ ६ ॥ कोऽसावि-

त्याह—*प्रथमेऽहनि क्रियमाणे स्त्रीप्रायमपत्यं जायते ॥६॥ यः प्रतिपदि नियमेन श्राद्धं करोति तस्यापत्ये प्रजा सन्ताने स्त्रीप्रायं जायते । प्रायेण स्त्रियो जायन्ते ॥७॥ *द्वितीये स्तेनाः ॥८॥ जायन्ते पुत्राः ॥८॥ *तृतीये ब्रह्मवर्चसिनः ॥९॥ वृत्ताध्ययनसम्पत्तिर्ब्रह्मवर्चसम् ॥९॥ चतुर्थे क्षुद्रपशुमान् ॥१०॥ क्षुद्राः पशवोऽजाव्यादयः तद्वान् कर्ता भवति । उत्तरत्राप्येकवचने कर्तुर्वादो द्रष्टव्यः ॥१०॥ पञ्चमे पुमांसो बह्वपत्यो न चानपत्यः प्रमीयते ॥११॥ पुमांस एव भवन्ति बहवश्च भवन्ति न चानपत्यः प्रमीयते जीवत्स्वेवं पुत्रेषु सन्निहितेषु च स्वयं म्रियते न तेषु मृतेषु न देशान्तरं गतेषु नापि स्वयं देशान्तरं गत इति ॥११॥ *षष्ठेऽध्वशीलोऽक्षशीलश्च ॥१२॥ अध्वशीलः पान्थः । इतरः कितवः ॥१२॥ *सप्तमे कर्षे राद्धिः ॥१३॥ कर्षः कृषिः । राद्धिः सिद्धिः ॥१३॥ अष्टमे पुष्टिः ॥१४॥ स्पष्टम् ॥१४॥ *नवम एकखुराः ॥१५॥ अश्वादयः ॥१५॥ *दशमे व्यवहारे राद्धिः ॥१६॥ व्यवहारो वाणिज्यम् । व्यवहारःशास्त्रपरिज्ञानं वा ॥१६॥ *एकादशे कृष्णायसं त्रपुसीसम् ॥१७॥ कृष्णमयः कृष्णायसम् । त्रपुसीसे लोहविशेषौ ॥१७॥ *द्वादशे पशुमान् ॥१८॥ द्वादश्यां बहवः पशवो भवन्ति ॥१८॥ *त्रयोदशे बहुपुत्रो बहुमित्रो दर्शनीयापत्यो युवमारिणस्तु भवन्ति ॥१९॥ त्रयोदश्यां बहवः पुत्रा मित्राणि च भवन्ति । अपत्यानि च दर्शनीयानि भवन्ति किं तु पुत्रा युवमारिणः युवान एव म्रियन्ते ॥१९॥ *चतुर्दश आयुधे राद्धिः ॥२०॥ सङ्ग्रामे जयः ॥२०॥ *पञ्चदशे पुष्टिः ॥२१॥ स्पष्टम् ॥२१॥ *तत्र द्रव्याणि तिलमाषा व्रीहियवा आपो मूलफलानि च ॥२२॥ तत्र श्राद्धे तिलादीनि द्रव्याणि यथायथमवश्यमुपयोज्यानि ॥२२॥ *स्नेहवति त्वेवान्ने तीव्रतरा पितॄणां प्रीतिर्द्राघीयांसं च कालम् ॥२३॥ यद्वा तद्वा अन्नं भवतु स्नेहवति तु तस्मादाज्यादिभिरुपसिक्ते पितॄणां तीव्रतरा प्रकृष्टतरा प्रीतिर्भवति । सा च द्राघीयांसं च कालमनुवर्तते ॥२३॥ *तथा धर्माहृतेन द्रव्येण तीर्थे

प्रतिपन्नेन ॥ २४ ॥ धर्मार्थिनं य... पात्रे च प्रतिपादितं तेनापि ... कालमिति ॥ २४ ॥ *संवत्सरं गव्येन प्रीतिः ॥ २५ ॥ उत्तरत्र मांसग्रहणादिहापि गौस्य ग्रहणम् । तावत्तदा पितॄणां प्रीतिर्द्राघीयांसं च ... ॥ २५ ॥ *भूयांसमतो माहिषेण ॥ २६ ॥ माहिषेण मांसेनातः संवत्सरात् भूयांसं बहुतरं कालं पितॄणां प्रीतिर्भवति ॥ २६ ॥ *एतेन ग्राम्यारण्यानां पशूनां मांसं मेध्यं व्याख्यातम् ॥ २७ ॥ एतेन माहिषेण मांसेना... एषामपि ग्राम्याणामजादीनामारण्यानां च शशादीनां मांसं मेध्यं व्याख्यातम् ॥ पितॄणां प्रीतिकरमिति मेध्यग्रहणं प्रतिषिद्धानां मा भूदिति ॥ २७ ॥

इति षोडशी खण्डिका ॥ प्र०२ प०७ ख० १६ ॥

---

*खड्गोपस्तरणे खड्गमांसेनानन्त्यं कालम् ॥ १ ॥ खड्गचर्मोपस्तरणेष्वासनेषूपविष्टेभ्यो ब्राह्मणेभ्यो दत्तेन खड्गमांसेनानन्त्यं कालं प्रीतिर्भवति । आनन्त्यमिति पाठे स्वार्थे ष्यञ् ॥ १ ॥ *तथा शतबलेर्मत्स्यस्य मांसेन ॥ २ ॥ शतबलिर्बहुशल्को रोहिताख्यः ॥ २ ॥ *वाध्राणसस्य च ॥ ३ ॥ व्याख्यातो वाध्राणसः । तस्य मांसेनानन्त्य कालं प्रीतिर्भवति ॥ ३ ॥ *प्रयतः प्रसन्नमनाः सृष्टो भोजयेद्ब्राह्मणान् ब्रह्मविदो योनिगोत्रमन्त्रान्तेवास्यसम्बन्धान् ॥ ४ ॥ प्रयतः स्नानाचमनादिना शुद्धः । प्रसन्नमनाः अव्याकुलमनाः । सृष्टः उत्साहवान् । सृष्टश्चेद्ब्राह्मणवधे हत्यां प्रीतिदर्शनात् । 'वृत्तिसर्गतायनेषु क्रमः' इत्यत्र च सर्ग उत्साहः एवंभूतो ब्राह्मणान् भोजयेत् । कीदृशान् ब्रह्मविदः आत्मविदः । योन्यादिभिरसम्बन्धान् योनिसम्बन्धाः मातुलादयः । गोत्रसम्बन्धाः सगोत्राः । मन्त्रसम्बन्धा ऋत्विजो याज्याश्चान्तेवासिसम्बन्धाः शिष्या आचार्याश्च ॥ ४ ॥ *गुणहान्यां तु परेषां समुदेतः सोदर्योऽपि भोजयितव्यः ॥ ५ ॥ यदि परे योनिगोत्रादिभिरसम्बन्धा वृत्तादिगुणहीना एव लभ्यन्ते, तदा समुदेतो विद्यावृत्तादिभिर्युक्तः सोदर्योऽपि भोजयितव्यः । किमुत मातुलादय इत्यपिशब्दस्यार्थः ॥ ५ ॥ *एतेनान्तेवासिनो व्याख्याताः ॥ ६ ॥ एते

न सोदर्येण अन्तेवासिनः बहुवचननिर्देशात् पूर्वत्र निर्दिष्टा योन्यादिभिः सम्बन्धास्सर्व एव आख्याताः। अन्येषां अभावे समुदेतो भोजयितव्य इति। अत्र मनुः—'एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः। अनुकल्पस्तु विज्ञेयः सदा सद्भिरनुष्ठितः। मातामहं मातुलं च स्वस्रीयं श्वशुरं गुरुम्। दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत् ॥' इति ॥ ६ ॥ *अथा-प्युदाहरन्ति ॥ ७ ॥ सम्बन्धिनो न भोज्या इत्यस्मिन्नर्थे धर्मज्ञा वचनमुदाहरन्ति ॥ ७ ॥ *सम्भोजनी नाम पिशाचाभिक्षा नैषा पितॄन् गच्छति नोऽथ देवान्। इहैव सा चरति क्षीणपुण्या शालान्तरे गौरिव नष्टवत्सा ॥ ८ ॥ परस्परं भुञ्जतेऽस्यामिति सम्भोजनी। अभिकरणव्युत्पत्तिः। अस्याः पिशाचभिक्षायाः नैषा पितॄन् गच्छति नापि देवान्। किं तु क्षीणपुण्या परलोकप्रयोजनरहिता सती इहैव चरति, लोके यथा गौः नष्टवत्सा गृहाभ्यन्तर एव चरति न बहिर्गच्छति तद्वदेतद्व्याचष्टे ॥ ८ ॥ *इहैव सम्भुञ्जतीति दक्षिणा कुशात्कुलं विनश्यतीति ॥ ९ ॥ सम्भुञ्जती परस्परभोजनस्य निमित्तभूता दक्षिणा श्राद्धदानक्रिया गृहात् गृहं गत्वा इहैव लोके नश्यतीत्यर्थः ॥ ९ ॥ अथ बहुषु तुल्यगुणेषूपस्थितेषु कः परिग्राह्यः—*तुल्यगुणेषु वयोवृद्धः श्रेयान्द्रव्यकृशश्चेप्सन् ॥ १० ॥ यो वयसा वृद्धस्स तावद्ग्राह्यः। तत्रापि यो द्रव्येण कृशः ईप्सन् लिप्समानश्च भवति स ग्राह्यः। अद्रव्यकृशोऽपि अवृद्धोऽपि द्वयोर्द्वयोस्तु समवाये यथारुचीति ॥ १० ॥ *पूर्वेद्युर्निवेदनम् ॥ ११ ॥ श्राद्धदिनात्पूर्वेद्युरेव ब्राह्मणेभ्यो निवेदयितव्यः। श्वः श्राद्धं भविता तत्र भवताहवनीयार्थे प्रसादः कर्तव्य इति ॥ ११ ॥ *अपरेद्युर्द्वितीयम् ॥ १२ ॥ अपरेद्युः श्राद्धदिने द्वितीयनिवेदनं कर्तव्यमद्य श्राद्धमिति ॥ १२ ॥ *तृतीयमामन्त्रणम् ॥ १३ ॥ आमन्त्रणमाह्वानं भोजनकाले सिद्धमागम्यतामिति तत्तृतीयं भवति ॥ १३ ॥ *त्रिःप्रायमेके श्राद्धमुपादिशन्ति ॥ १४ ॥ न केवलं निवेदनमेव त्रिर्भवति। किं तर्हि यच्च यावच्च श्राद्धे तत्सर्वं त्रिरावर्त्यमित्येके मन्यन्ते। अत्र पक्षे होमभोजनपिण्डदानमप्यावृत्तिस्तस्मिन्नेवापराह्णे ॥ १४ ॥ *यथाप्रथममेवं द्वितीयं तृतीयं च ॥ १५ ॥ येन प्रकारेण प्रथमश्राद्धं तथैव द्वितीयं तृती-

यं च कर्तव्यम् ॥ १५ ॥ *सर्वेषु वृत्तेषु सर्वतस्समवदाय शेषस्य ग्रासावराध्यं प्राश्नीयाद्यथोक्तम् ॥ १६ ॥ सर्वेषु श्राद्धेषु त्रिष्वपि वृत्तेषु समाप्तेषु सर्वतस्त्रयाणां श्राद्धानां च ओदनशेषस्ततस्समवदाय ग्रासावराध्यं प्राश्नीयात् यथोक्तम् उत्तरेण यजुषा शेषस्य ग्रासावराध्यं प्राश्नीयादित्युक्तं गृह्ये । तत्र प्रयोगः पूर्वेद्युर्यथा निवेदनं तद्वत् परेद्यु प्रातर्भोजनकाले आमन्त्रणं सिद्धमागम्यतामिति ततो होमपिण्डनिधानान्तमेकैकमपावृज्य ततः सर्वतस्समवदाय ग्रासावराध्यस्य प्राणे निविष्टेति मन्त्रेण प्राशनमिति १६ ॥ *उदीच्यवृत्तिस्त्वासनगतानां हस्तेषूदपात्रानयनम् ॥ १७ ॥ प्रागुदञ्चौ विभजन् हंसः क्षीरोदक यथा । विदुषा शब्दसिद्ध्यर्थं सा नः पातु शरावती ॥' इति वैयाकरणाः । तस्याः शरावत्या उदक्तीरवर्तिन उदीच्याः तेषां वृत्तिराचार आसनेषूपविष्टानां ब्राह्मणानां हस्तेषूदपात्रादर्घ्यपात्रादादाय अर्घ्यदानमिति पितरिदं तेऽर्घ्यं पितामहेदं तेऽर्घ्यं प्रपितामहेदं तेऽर्घ्यमिति मन्त्रा आश्वलायनके यद्यप्युदीच्यवृत्तिरित्युक्तं, तथापि प्रकरणसामर्थ्यात् सर्वेषामपि भवति ॥ १७ ॥ उद्धियतामग्नौ च क्रियतामित्यामन्त्रयते ॥ १८ ॥ होमकाले, 'उद्धियतामग्नौ च क्रियतामि'त्यनेन मन्त्रेण ब्राह्मणानामन्त्रयते । 'अभीष्टे च'ेति लोट्प्रत्ययः ॥ १८ ॥ काममुद्धियतां काममग्नौ च क्रियतामित्यतिसृष्ट उद्धरेज्जुहुयाच्च ॥ १९ ॥ अथ ब्राह्मणाः काममुद्धियतां काममग्नौ च क्रियतामिति प्रतिब्रूयुः अनुजानीयुः । तैश्चातिसृष्ट उद्धरेज्जुहुयाच्च । उद्धरणं नाम ब्राह्मणार्थं पक्वादन्नादन्यस्मिन् पात्रे पृथक्करणम् ॥ १९ ॥ श्वाभिरपपात्रैश्च श्राद्धस्य दर्शनं परिचक्षते ॥ २० ॥ अपपात्राः पतितादयः । प्रतिलोमादयश्च । तैः श्राद्धस्य दर्शनं परिचक्षते गर्हन्ते शिष्टाः । अतो यथा ते न पश्येयुस्तथा परिश्रितेच कर्तव्यमिति ॥ २० ॥ श्वित्रिशिपिविष्टः परतल्पगाम्यायुधीयपुत्रश्शूद्रोत्पन्नो ब्राह्मण्यामित्येते श्राद्धे भुञ्जानाः पङ्क्तिदूषणा भवन्ति ॥ २१ ॥ श्वित्रिः श्वेतकुष्ठी । शिपिविष्टः खलतिः । विवृतशेफ इत्यन्ये । परतल्पगामी यः परतल्पं गत्वा अकृतप्रायश्चित्तः तस्य ग्रहणम् । आयुधीयपुत्रः क्षत्रियवृत्तिमाश्रितो य आयुधेन जीवति ब्राह्मण, तस्य पुत्रः आयुधीयपुत्रः । शूद्रेण ब्रा-

ह्मणामुर्त्पन्नश्चण्डालः । न तस्य प्रसङ्गः । ब्राह्मणान् ब्रह्मविदं सूत्रकृत्त्वा-त् । तस्मादेव व्याख्येयम् क्रमविवाहे शूद्रायां पूर्वमुत्पाद्य पश्चात् ब्राह्मण्या-मुत्पादयति तस्य स पुत्रः शूद्रोत्पन्नो ब्राह्मण्यामिति स हि पिता शूद्रः सम्पन्नः । श्रूयते हि 'तज्जाया जाया भवति यदस्यां जायते पुनरि'ति । स्म-र्यते च—'यदुच्यते द्विजातीनां शूद्रदारपरिग्रहः । न तन्मम मतं यस्मा-त्तत्रायं जायते स्वयम् ॥' इति । एते श्वित्र्यादयः श्राद्धे भुञ्जानाः पङ्क्तिं दू-षयन्ति । अतस्ते न भोज्या इति ॥ २१ ॥ **त्रिमधुस्त्रिसुपर्णस्त्रिणाचि-केतश्चतुर्मेधः पञ्चाग्निर्ज्येष्ठसामिको वेदाध्याय्यनूचानपुत्रः श्रोत्रिय इत्येते श्राद्धे भुञ्जानाः पङ्क्तिपावना भवन्ति ॥ २२ ॥** 'मधुवाता ऋतायत' इत्येषा ऋचस्त्रिमधु' । तत्र हि प्रत्यृचं त्रयो मधुशब्दाः । इह तु तदध्या-यी पुरुषस्त्रिमधुः । त्रिसुपर्णः 'चतुश्शिखण्डा युवतिः सुपेशा' इत्यादिकस्त्र्यृ-चः बह्वृचः । अन्ये तु तैत्तिरीयके 'ब्रह्ममेतु मामित्यादयः त्रयोऽनुवाका इ-त्याहुः । तत्र हि 'य इमं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यादि'ति श्रूयते आसहस्रात् पङ्क्तिं पुनन्तीति च पूर्ववत्पुरुषे वृत्तिः । त्रिणाचिकेतः नाचिके-तोऽग्निर्वल्लीषु शाखासु विधीयते । तैत्तिरीयके कठवल्लीषु शतपथे च तं यो-वेद मन्त्रब्राह्मणेन सह स त्रिनाचिकेतः नाचिकेतानुवाकान् त्रीनित्यन्ये विर-जोऽनुवाकाध्यायीत्यन्ये । प्राणापानेत्यादिषु अश्वमेधः सर्वमेधः पुरुषमेधः पितृमेध इति चत्वारो मेधाः । तदध्यायी चतुर्मेधः । चतुर्णां यज्ञानामाह-र्तेत्यन्ये । पञ्चाग्निः सभ्यावसथ्याभ्यां सह पञ्चानां काठकाग्नीनां मध्ये ता-न् ज्येष्ठसामतलवकारिण प्रसिद्धम् । उदुत्यं चित्रमित्येतयोर्गीतं, तद्गायती-ति ज्येष्ठसामगः । ज्येष्ठसामिक इति पाठे व्रीह्यादित्वात् ठन् । वेदाध्या-यी स्वाध्यायपरः । अनूचानपुत्रः त्रैविद्यपुत्रः श्रोत्रिय इत्यपि पठन्ति । तदर्थार्थं द्रष्टव्यम् । एते श्राद्धे भुञ्जानाः पङ्क्तिं शोधयन्ति । वेदाध्यायीत्य स्यानन्तरमितिशब्दं पठन्ति । सोऽपपाठः । एतेन पञ्चाग्नीत्यविभक्तिकपा-ठो व्याख्यातः ॥ २२ ॥ **न च नक्तं श्राद्धं कुर्वीत ॥ २३ ॥** श्राद्धकर्म-ण्यारब्धे कारणाद्विलम्बे मध्ये यदादित्योऽस्तमियात् तदा श्राद्धशेषं न कु-र्वीत अपरेद्युरेव कुर्वीतेति ॥ २३ ॥ **आरब्धे चाभोजनमासमापना**

दन्यत्र राहुदर्शनात् ॥२४॥ पूर्वेद्युर्निवेदनप्रभृत्यापिण्डनिधानान्मध्ये कर्तृभोजनप्रतिषेधः। अनन्तरमन्यत्र राहुदर्शनादिति पठन्ति। न च नक्तमित्यस्यापवादः। राहुदर्शने नक्तमपि कुर्वीतेति। उदीच्यास्त्वेतत्प्रायेण पठन्ति। तथा च पूर्वेण व्याख्यातम्। प्रत्युत न च नक्तमित्येतत् सोमग्रहणविषयमिति व्याख्यातम्। पठ्यमानस्तु न च नक्तमित्यस्यानन्तरं पठितुं युक्तः ॥२४॥

इति सप्तदशी खण्डिका ॥ प्र०२ प०७ ख०१७ ॥

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां द्वितीयप्रश्ने सप्तमः पटलः ॥७॥

---

*बिलयनं मथितं पिण्याकं मधु मांसं च वर्जयेत् ॥१॥ बिलयनं नवनीतमलम्। दध्नो हस्तादिना मन्थनमात्रं न जलेन मिश्रं तन्मथितम्। तथा च नैघण्टुकाः—'तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलमि'ति। यन्त्रपीडितानां तिलानां कल्काः पिण्याकम्। मधुमांसे प्रसिद्धे। मांसमप्रतिषिद्धमपि एतद्बिलयनादिकं वर्जयेत् ॥१॥ *कृष्णधान्यं शूद्रान्नं ये चान्ये नाश्यसम्मताः ॥२॥ कृष्णधान्यं माषादि। न कृष्णा व्रीहयः। शूद्रान्नं पक्वमपक्वं च। ये चान्ये नाश्यत्वेनाभोज्यत्वेन सम्मताः तांश्च वर्जयेत् ॥२॥ *अहविष्यमनृतं क्रोधं येन च क्रोधयेत् स्मृतिमिच्छन् यशो मेधां स्वर्गं पुष्टिं द्वादशैतानि वर्जयेत् ॥३॥ अहविष्यं कोद्रवादि। अनृतं मिथ्यावचनम्। क्रोधः कोपः। येन च कृतेनोक्तेन वा परं क्रोधयेत् तच्च वर्जयेत्। स्मृतिरधिगतस्य स्मरणम्। यशः ख्यातिः। मेधा प्रज्ञा। द्वादशैतानि बिलयनादीनि वर्जयेत् स्मृत्यादिकमिच्छन् पुनः वर्जयेदिति। गुणार्थोऽनुवादः। स्मृत्यादिकं फलं विधातुं द्वादशैतानीति वचनम्। बिलयनादेरपि परिग्रहार्थम्। अहविष्यादिकमेवानन्तरोक्तं माग्राहीदिति ॥३॥ *अधोनाभ्युपरि जान्वाच्छाद्य त्रिषवणमुदकमुपस्पृशन्ननग्निपक्ववृत्तिरच्छायोपगतस्थानासनिकः संवत्सरमेतद्व्रतं चरेदेतदष्टाचत्वारिंशत्सम्मितमित्याचक्षते ॥४॥ अधोनाभ्युपरि जान्वाच्छाद्येति व्याख्या

तम् । त्रिषवणं त्रिषु सवनेषु प्रातर्मध्यन्दिने सायमिति, उदकमुपस्पृशन् स्नानं कुर्वन् । अनग्निपक्ववृत्तिः वृत्तिः शरीरयात्रा सा अग्निपक्केन न कार्या । अग्निग्रहणात् कालपक्वस्याम्रादेरदोषः । अच्छायोपगतः छायामनुपगच्छन् । स्थानासनिकः स्थानासनवान् ; दिवास्थानं रात्रावासनं न कदाचिच्छयनम् एतद्विलयनम् मथितमित्यारभ्यानन्तरमुक्तं संवत्सरं व्रतं चरेत् । एतद्व्रतमष्टाचत्वारिंशद्वर्षसाध्येन ब्रह्मचारिव्रतेन सम्मितं सदृशं यावत्तस्य फलं तावदस्यापीत्याचक्षते धर्मज्ञाः, न केवलं स्मृत्यादिकमेव प्रयोजनमिति । अपर आह—विलयनं मथितमित्यादिकं व्रतान्तरं स्मृत्यादिकामस्य । अश्नोनामीत्यादिकं तु सम्मितं व्रतमिति । एतच्च ब्रह्मचारिणो गृहस्थस्य च भवति । तथा च बोधायनः—'अष्टाचत्वारिंशत्सम्मितमित्याचक्षते तस्य संक्षेपः संवत्सरः । तं संवत्सरमनुव्याख्यास्यामः । स यदि ब्रह्मचारी स्यात्तिष्ठन्नेव प्रतिपद्यते । अथ यद्यपि ब्रह्मचारी स्यात केशान् श्मश्रुलोमनखानि वापयित्वा तीर्थं गत्वा स्नातेत्यादि ॥४॥ *नित्यश्राद्धम् ॥५॥ अथाहरहः कर्तव्यं श्राद्धमुच्यते । तस्य नित्यश्राद्धमिति नाम ॥५॥ *बहिर्ग्रामाच्छुचयः शुचौ देशे संस्कुर्वन्ति ॥६॥ तन्नित्यश्राद्धं बहिर्ग्रामात्कर्तव्यं तस्यान्नसंस्कारः शुचौ देशे अन्नं संस्कुर्वन्ति । शुचय इति वचनमाधिक्यार्थम् । आर्याः प्रयता इति पूर्वमेव प्रायत्यस्य विहितत्वात् ॥६॥ * तत्र नवानि द्रव्याणि ॥७॥ तत्र नित्यश्राद्धे द्रव्याणि नवान्येव ग्राह्याणि ॥७॥ कानि पुनस्तानि—* यैरन्नं संस्क्रियते येषु च भुज्यते ॥८॥ यैर्भाण्डैरन्नं संस्क्रियते येषु च कांस्यादिषु भुज्यते तानि नवानीति ॥८॥ *तानि च भुक्तवद्भ्यो दद्यात् ॥९॥ तानि भाण्डानि कांस्यादीनि च भुक्तवद्भ्यो ब्राह्मणेभ्यो दद्यात् । एवं प्रत्यहम् ॥९॥ * समुदेतांश्च भोजयेत् ॥ १० ॥ समुदेतवचनं गुणाधिक्यार्थम् ॥१०॥ *न चातद्गुणायोच्छिष्टं प्रयच्छेत् ॥ ११ ॥ भाण्डेषु यत् भुक्तशिष्टं तदिहोच्छिष्टम् । तदप्यतद्गुणाय पुक्तवतः ये गुणास्तद्रहिताय न दद्यात् तद्गुणायैव दद्यादिति ॥ ११ ॥ * एवं संवत्सरम् ॥ १२ ॥ एवमेतन्नित्यश्राद्धं संवत्सरं कर्तव्यमहरहः ॥ १२ ॥ * तेषामुत्तमं लोहेनाजेन कार्यम् ॥ १३ ॥ तेषां संवत्सरस्याह्नां उत्तममहस्समाप्तिदिनम् । लोहेन लोहितवर्णेन

अन्नेन श्राद्धं कर्तव्यम् । दृश्यते चाप्यन्यत्रास्मिन्नर्थे लोहशब्दः—'लोहस्तूपरो भवत्यप्यतूपरः कृष्णसारङ्गो लोहितसारङ्गो वे'ति । चमकेषु च भवति 'श्यामं च मे लोहं च म' इति ॥ १३ ॥ *मानं च कारयेत्प्रतिच्छन्नम् ॥ १४ ॥ मानं धिष्ण्यं वेदिका । दृश्यते हि मनोतेरास्मिन्नर्थे प्रयोगः— अग्रेणाग्नीध्रं चतुर उपस्थानं विमितं विमिनन्ति पुरस्तादुन्नतं पश्चान्निनतमि'ति। स एवायमुपसर्गरहितः । तं मानं कारयेत् कर्मकरैः प्रतिच्छन्नं च तद्भवति तिरस्करिण्यादिना । •इदमपि ग्रामाद्बहिरेव ॥ १४ ॥* तस्योत्तरार्धे ब्राह्मणान् भोजयेत् ॥ १५ ॥ तस्य मानस्योत्तरस्मिन्नर्धे ब्राह्मणा भोजयितव्याः ॥ १५ ॥ *उभयान्पश्यति ब्राह्मणांश्च भुञ्जानान्माने च पितॄनित्युपदिशन्ति ॥ १६ ॥ तस्यैवं कृतस्य कर्मणो महिम्ना उभयान् पश्यति कांश्च कांश्च ब्राह्मणान्भुञ्जानान् तस्मिन्नेव च माने पितॄन् यथा ब्राह्मणान् भुञ्जानान् प्रत्यक्षेण पश्यति तथा माने समागतान् पितॄनपि प्रत्यक्षेण पश्यतीत्युपदिशन्ति धर्मज्ञाः ॥ १६ ॥ *कृताकृतमत ऊर्ध्वम् ॥ १७ ॥ अत ऊर्ध्वं मासिश्राद्धं क्रियतामावाकारि अकरणे नापि प्रत्यवाय इति ॥ १७ ॥ * श्राद्धेन तृप्तिं निवेदयन्ते पितरः ॥ १८ ॥ हि यस्मादन्त्येऽहनि यद्दर्शनमुपगच्छन्ति, तच्छ्राद्धेन तृप्तिं हि वेदयन्ते ज्ञापयन्ति कर्तारम् । तस्मात् तत् कृताकृतमिति ॥ अथ पुष्टिकामस्य प्रयोगस्तिष्येणेत्यादिरुच्छिष्टं दद्युरित्यन्त एकः ॥ १८ ॥ तिष्येण पुष्टिकामः ॥ १९ ॥

इति अष्टादशी खण्डिका ॥ अ० २ प० ८ ख० १८ ॥

---

*गौरसर्षपाणां चूर्णानि कारयित्वा तैः पाणिपादं प्रक्षाल्य मुखं कर्णौ प्राश्य च यद्वातो नातिवाति तदासनोऽजिनं बस्तस्य प्रथमः कल्पो वाग्यतो दक्षिणामुखो भुञ्जीत ॥ १ ॥ पुष्टिकामः पुरुषो वक्ष्यमाणं प्रयोगं कुर्यात् । तिष्येण 'नक्षत्रे च लुपी'त्याधिकरणे तृतीया । तिष्ये नक्षत्रे गौराणां सर्षपाणां सम्बन्धीनि चूर्णानि किङ्करैः कारयेत् । कारयित्वा तैश्चूर्णैः पाणी पादौ प्रक्षाल्य मुखं कर्णौ च प्रक्षाल्य चूर्णशेषं प्राश्नीयात् । प्राश्येदिति पाठे प्राश्येत विकिरेत् । एतावत् प्रतितिष्यम् ।

विशेषकृत्यं परं प्रत्यहं कर्तव्यम् । भाश्य च यद्वातो नातिवाति तदासनः यदासनं वातो नातिवाति तदासनस्तादृशासन भुञ्जीतेति वक्ष्यमाणेन सम्बन्धः । तस्य वस्त्राजिनमासनं स्यादिति मुख्यः कल्पः । वाग्यतो दक्षिणां दिशमभिमुखो भुञ्जीत ॥ १ ॥ *अनायुष्यं त्वेवंमुखस्य भोजनं मातुरित्युपदिशन्ति ॥ २ ॥ यदेवमुखस्य दक्षिणामुखस्य भोजनं तत् भोक्तुर्या माता तस्या अनायुष्यमनायुष्करमिति धर्मज्ञा उपदिशन्ति । तस्मान्मातृतो नैतद्व्रत कार्यमिति ॥ २ ॥ *औदुम्बरश्चमसः सुवर्णनाभः प्रशातः ॥ ३ ॥ चमु भक्षणे यत्र चम्यते स चमसो भोजनपात्रम् । औदुम्बरस्ताम्रमयः सुवर्णेन मध्येऽलंकृतश्च प्रशातः प्रशस्तो भोजने ॥ ३ ॥ *नान्येनापि भोक्तव्यः ॥ ४ ॥ नचान्येनापि कर्तुः पित्रापि तत्र पात्रे भोक्तव्यम् । अपिः धात्वर्थानुवादी । भोक्तव्य इति पुल्लिङ्गपाठेऽप्ययमेवार्थः ॥ ४ ॥ *यावद्ग्रासं सन्नयन्नस्कन्दयन्नापाजिहीतापजिहीत वा कृत्स्नं ग्रासं ग्रसीत सहाङ्गुष्ठम् ॥ ५ ॥ यावदेव सकृत् ग्रहीतु शक्यं तावदेव सन्नयन् पिण्डीकुर्वन् । अस्कन्दयन् भूमावन्नलेपान्नपातयन् कृत्स्नं ग्रासं ग्रसीतेत्यन्वयः । सहाङ्गुष्ठम् आस्येऽपि ग्रासप्रवेशे यथाङ्गुष्ठोऽप्यनुप्रविशति तथा सर्वानेव ग्रासानुक्तेन प्रकारेण ग्रसीत ग्रसने मध्ये क्रियान्तरविधिः नापजिहीत । भोजनपात्रं सव्येन पाणिना न विमुञ्चेत । अपाजिहीत वा विमुञ्चेद्वा । किमर्थमिदं यावता न प्रकारान्तरं सम्भवति, सत्यं, क्रमात्तु नियम्यत इति न्यायेन य एवंप्रकारः प्रथमं भोजने स एवान्तादनुष्ठातव्य इत्येवमर्थमिदम् ॥ ५ ॥ *न च मुखशब्दं कुर्यात् ॥ ६ ॥ भोजनदशायामिदमुत्तरम् ॥ ६ ॥ पाणिं च नावधूनुयात् ॥ ७ ॥ पाणिरत्र दक्षिणः ॥ ७ ॥ *आचम्य चोर्ध्वौ पाणी धारयेदाप्रोदकीभावात् ॥ ८ ॥ भुक्त्वाऽऽचम्य पाणी उर्ध्वौ धारयेत यावत् प्रगलितोदकौ शुष्कोदकौ भवतः ॥ ८ ॥ ततोऽग्निमुपस्पृशेत् ॥ ९ ॥ भुक्त्वा नियमेनाग्निरुपस्प्रष्टव्यः ॥ ९ ॥ *दिवा च न भुञ्जीतान्यन्मूलफलेभ्यः ॥ १० ॥ मूलानि कन्दाः । फलान्याम्रादीनि । तेभ्योऽन्यद्दिवा न भुञ्जीत । तद्भक्षणे न दोषः ॥ १० ॥

*स्थालीपाकानुदेश्यानिच वर्जयेत् ॥११॥ तेन सर्पिष्मता ब्राह्मणं भोजयेदित्यादौ ब्राह्मणो भूत्वा न भुञ्जीत अनुद्देश्यानिच पितृभ्यो देवताभ्यश्च संकल्पितानि च न भुञ्जीत ॥११॥ सोत्तराच्छादनश्चैव यज्ञोपवीती भुञ्जीत ॥१२॥ उत्तराच्छादनमुपरिवासः । तेन यज्ञोपवीतेन यज्ञोपवीतं कृत्वा भुञ्जीत । नास्य भोजने अपि वा सूत्रमेवोपवीतार्थ इत्ययं कल्पो भवतीत्येके । समुच्चय इत्यन्ये ॥१२॥*नैयमिकं तु श्राद्धं स्नेहवदेव दद्यात् ॥१३॥ यन्नियमेन कर्तव्यं मासि श्राद्धं, तत् स्नेहद्रव्ययुक्तमेव दद्यात् । न शुष्कम् । तत्र विशेषः ॥१३॥*सर्पिर्मांसमिति प्रथमः कल्पः ॥१४॥ स्पष्टम् ॥१४॥ *अभावे तैलं शाकमिति ॥१५॥ सर्पिषोऽभावे तैलं मांसस्याभावे शाकम् । इतिशब्दाद्यच्चान्यदेव युक्तम् ॥१५॥*मघासु चाधिकं श्राद्धकल्पेन सर्पिर्ब्राह्मणान् भोजयेत् ॥१६॥ मघासु पूर्वपक्षेऽपि श्राद्धविधानेन सर्पिर्मिश्रमन्नं ब्राह्मणान् भोजयेत् ॥१६॥

इति एकोनविंशतितमी खण्डिका ॥ प्र०२ प०८ ख०॥१९॥

*मासि श्राद्धं तिलानां द्रोणंद्रोणं येनोपायेन शक्नुयात् तेनोपयोजयेत् ॥१॥ येनोपायेनोपयोजयितुं शक्नुयात् अभ्यङ्गे उद्वर्तने भक्ष्ये भोज्ये चेति तेनोपायेन मासिश्राद्धे तिलानां द्रोणमुपयोजयेत् । तत्रैकैकस्य ब्राह्मणस्य तिलानां द्रोणद्रोणमुपयोजयितुमशक्यत्वात् समुदितानुपयोजयेत् । द्रोणंद्रोणमिति वीप्सावचनं तु प्रतिमासिश्राद्धमुपयोजनार्थमिति केचित् । अन्ये तु एवंभूता बाला प्रयत्नेनान्विष्य भोजयितव्या इति ॥ १ ॥ *समुदितांश्च भोजयेन्न चात्र गुणायोच्छिष्टं दद्युः ॥ २ ॥ व्याख्यातमिदम् । दद्युरिति बहुवचनं तथाविभक्तबहुत्वापेक्षम् । वचनव्यत्ययो वा ॥२॥ अथ पुष्टिकामस्यैवापरो योग आ पटलसमाप्तेः — *उदगयन आपूर्यमाणपक्षस्यैकरात्रमवरार्ध्यमुपोष्य तिष्येण पुष्टिकामः स्थालीपाकं श्रपयित्वा महाराजमिष्ट्वा तेन सर्पिष्मता ब्राह्मणं भोजयित्वा पुष्ट्यर्थेन सिद्धिं वाचयीत ॥ ३ ॥ पुष्टिकामः पुरुष एकरात्रावरमुपवासं कृत्वा उदगयने आपूर्यमाणपक्षस्य पूर्वपक्षस्य सम्बन्धिना तिष्येण तस्मिन्नक्षत्रे

स्थालीपाकं श्रपयित्वा । महाराजं वैश्रवण यजेत आज्यभागान्ते म... जाय स्वाहेति प्रधानहोमः स्विष्टकृदादिजयादयः परिषेचनान्ते नेन सर्पिष्मता स्थालीपाकेन ब्राह्मणं भोजयेत् । उत्तरविवक्षयेदं वचनम् । भोजयित्वा सिद्धिं वाचयीत पुष्टिरस्त्विति ॥ ३ ॥ * **एवमहरहरापरस्मात्तिष्यात्** ॥ ४ ॥ एवमिदं स्थालीपाकश्रपणादासिद्धिवाचनान्तमहरहः कर्तव्यमापरस्मात्तिष्यात् यावदपरस्तिष्य आगच्छति ॥ ४ ॥ * **द्वौ द्वितीये** ॥ ५ ॥ द्वितीये तिष्ये प्राप्ते द्वौ भोजयेत् । अन्यत्समानमेवमातृतीयात् ॥ ५ ॥ * **त्रींस्तृतीये** ॥ ६ ॥ तृतीये तिष्ये त्रीन् भोजयेदाचतुर्थात् ॥ ६ ॥ * **एवं संवत्सरमभ्युच्चयेन** ॥ ७ ॥ एवमेतत्कर्म यावत्संवत्सरः पूर्यते तावत् कर्तव्यम् । ब्राह्मणभोजनं चाभ्युच्चयेन भवति चतुर्थप्रभृति चत्वारः पञ्चमप्रभृति पञ्चेत्यादि ॥ ७ ॥ एवंकृते फलमाह—* **महान्तं पोषं पुष्यति** ॥ ८ ॥ महत्या पुष्ट्या युक्तो भवति ॥ ८ ॥ * **आदित एवोपवासः** ॥ ९ ॥ उपवासस्त्वादित एव पुष्ये भवति न प्रतिपुष्यम् ॥ ९ ॥ * **आत्ततेजसां भोजनं वर्जयेत्** ॥ १० ॥ आत्ततेजांसि तक्रवाजिनादीनि । तानि नोपभुञ्जीत ॥ १० ॥ * **भस्मतुषाधिष्ठानम्** ॥ ११ ॥ वर्जयेदित्येव । भस्मतुषांश्च नाधितिष्ठेत् नाक्रामेत् ॥ ११ ॥ * **पदा पादस्य प्रक्षालनमधिष्ठानं च वर्जयेत्** ॥ १२ ॥ एकेन पादेन पादान्तरस्य प्रक्षालनं अधिष्ठानं च न कुर्यात् ॥ १२ ॥ * **प्रेङ्खोलनं च पादयोः** ॥ १३ ॥ प्रेङ्खोलनं दोलनमितस्ततश्चालनम् ॥ १३ ॥ * **जानुनि चात्याधानं जङ्घायाः** ॥ १४ ॥ एकस्मिन् जानुनि इतरस्या जङ्घायाः आत्याधानमवस्थापनं च वर्जयेत् ॥ १४ ॥ * **नखैश्च नखवादनः** ॥ १५ ॥ स्पष्टम् ॥ १५ ॥ * **स्फोटनानि चाकारणात्** ॥ १६ ॥ सर्वसन्धीनां स्फोटनानि वर्जयेत् अकारणात् कारण श्रमवार्तादि । वादनस्फोटनानीति समासपाठेऽप्येष एवार्थः ॥ १६ ॥ * **यच्चान्यत्परिचक्षते** ॥ १७ ॥ यच्चान्यदेवं युक्तं तृणच्छेदनादि शिष्टाः परिचक्षते गर्हन्ते तदपि वर्जयेत् ॥ १७ ॥ * **योक्ता च धर्मयुक्तेषु द्रव्यपरिग्रहेषु च** ॥ १८ ॥ एकश्चशब्दोऽनर्थकः । केचिन्नैव पठन्ति । धर्माविरुद्धा ये द्रव्यपरिग्रहास्तेषु च योक्ता उ

त्पादयिता स्यान्निराहस्स्यात् ॥ १८ ॥ *प्रतिपादयिता च तीर्थे ॥१९॥ तीर्थं गुणवत्पात्रं यज्ञो वा । तत्र द्रव्यस्यार्जितस्य प्रतिपादयिता स्यात् ॥ १९ ॥ *यन्ता चातीर्थे यतो न भयं स्यात् ॥२०॥ यन्ता नियन्ता अप्रदाता अतीर्थे यन्ता च स्यात् । यतः पुरुषादप्रदानेऽपि न भयं स्यात् । भयसम्भवे तु पिशुनादिभ्यो देयम् ॥२०॥ *सङ्ग्रहीता च मनुष्यान् ॥२१॥ अर्थप्रदानप्रियवचनानुसारादिभिर्मनुष्याणां सङ्ग्रहणशीलस्स्यात ॥ २१ ॥ *भोक्ता च धर्माविप्रतिषिद्धान् भोगान् ॥२२॥ धर्माविरुद्धा ये भोगाः स्रक्चन्दनस्वभार्यासेवादयः, तेषां च भोगशीलस्स्यात् ॥ २२ ॥ *एवमुभौ लोकावभिजयति ॥ २३ ॥ एवं महत्या पुष्ट्या युक्त उक्तप्रकारमनुतिष्ठन्नुभौ लोकावभिजयति भोगेनेमं लोकं तीर्थे प्रतिपादनेनामुं लोकमिति ॥ २३ ॥

इति विंशतितमी खण्डिका ॥ प्र० २ प० ८ ख० २० ॥

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां द्वितीयप्रश्ने अष्टमः पटलः ॥८॥

---

सर्वाश्रमाणां समयपदानात्युक्तं पुरस्तात् । के पुनस्ते आश्रमा इत्यत आह—*चत्वार आश्रमा गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थ्यमिति ॥१॥ आश्राम्यन्त्येषु श्रेयोऽर्थिनः पुरुषा इत्याश्रमाः । एषा सामान्यसंज्ञा । उत्तरा विशेषसंज्ञाः । गृहे तिष्ठति कुटुम्बरक्षणपर इति गृहस्थः । तस्य भावो गार्हस्थ्यम् । स एक आश्रमः । आचार्यकुले तत्र वासो लक्षणया सोऽप्येकः । 'मनु अवबोधने' मनुत इति मुनिर्ज्ञानपरः । तस्य भावो मौनम् । सोऽपरः । वनं प्रतिष्ठित इति वनप्रस्थः स एव वानप्रस्थः । प्रज्ञादित्वादण् । तस्य भावो वानप्रस्थ्यम् । इतिशब्दः परिसमाप्त्यर्थः । एतावन्त एवाश्रमा इति चतुर्णामेवोपदेशेऽपि चत्वार इति वचनमेकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानात् गार्हस्थ्यस्येति स्मृत्यन्तरोक्तमाग्राहीदिति ॥ १ ॥ *तेषु सर्वेषु यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छति ॥ २ ॥ तेष्वाश्रमेषु चतुर्ष्वपि यथाशास्त्रमव्यग्रस्समाहितमना भूत्वा यो वर्तते, स क्षेममभ-

यं पदं गच्छति । अनेनाश्रमविकल्प उक्तो वेदितव्यः । निश्रेयसार्थी ना न्यतमस्मिन्नाश्रमे यथाशास्त्रमवहितेन वर्तितव्यमिति । तथा च गौतमः— 'तस्याश्रमविकल्पमेके ब्रुवत' इति ॥ २ ॥ ***सर्वेषामुपनयनप्रभृति समान आचार्यकुले वासः** ॥ ३ ॥ उपनयनप्रभृति य आचार्यकुले वासोऽष्टाचत्वारिंशदादिनामन्यतमस्स सर्वेषामाश्रमाणां समानः ॥ ३ ॥ ***सर्वेषामनूत्सर्गो विद्यायाः** ॥ ४ ॥ अनूत्सर्गः छान्दसो दीर्घः । विद्याया अनूत्सर्गोऽपि सर्वेषामाश्रमाणां समानः । तस्मादाचार्यकुले वासस्समान इति ॥ ४ ॥ ***बुध्वा कर्माणि यत्कामयते तदारभेत** ॥ ५ ॥ प्रत्याश्रमं यानि कर्माणि विहितानि, तानि बुध्वा गृहस्थस्यैतानि कर्तव्यानि । एषामननुष्ठाने प्रत्यवायः फलं चेदमेषामेतान्यशक्यान्यनुष्ठातुं नैतानीत्याचार्यादुपश्रुत्य यत्कर्मफलं वा कामयेत, तदारभेत, तमाश्रमं प्रतिपद्येतेति ॥ ५ ॥ तत्र गार्हस्थ्यस्य पूर्वमेव प्रपञ्चितत्वादध्ययनानन्तरं प्रापिप्सितस्याचार्यकुलस्य स्वरूपमाह— ***यथा विद्यार्थस्य नियम एतेनैवान्तमनूपसीदत आचार्यकुले शरीरन्यासो ब्रह्मचारिणः** ॥ ६ ॥ यथा विद्यार्थस्य उपकुर्वाणस्य ब्रह्मचारिणः 'अथ ब्रह्मचर्यविधि'रित्यारभ्याग्नीन्धनादिनियम उक्तः, अतस्तेनैव नियमेनान्तमाशरीरपातादुपसीदतः उपसदनमेवानूपसदनं तत्कुर्वत आचार्यकुले शरीरन्यासः परित्यागो भवति । ब्रह्मचारिणो नैष्ठिकस्य तत्रैवामरणात्तिष्ठेत्, नाश्रमान्तरं गच्छेत् । यदि तमेवाश्रममात्मनः क्षेमं मन्येतेति । मनुः—'आचार्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते । गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत् ॥ एषु त्वविद्यमानेषु स्थानासनविहारवान् । प्रयुञ्जानोऽग्निशुश्रूषां साधयेद्देहमात्मनः ॥ एवं चरति यो विप्रो ब्रह्मचर्यमविप्लुतः । स गच्छत्युत्तमं स्थानं न चेहाजायते पुनः ॥' इति ॥ ६ ॥ ***अथ परिव्राजः** ॥ ७ ॥ अथानन्तरं परिव्राजो धर्म उच्यते । दृष्टादृष्टार्थान् सर्वानेवारम्भान् परित्यज्यात्मलाभाय संन्यासाश्रमं प्रव्रजतीति परिव्राट् संन्यासी ॥ ७ ॥ ***अत एव ब्रह्मचर्यवान् प्रव्रजति** ॥ ८ ॥ अत एव ब्रह्मचर्याश्रमादेव ब्रह्मचर्यवानविप्लुतब्रह्मचर्यः परिव्रजति पारिव्रज्यां

कुर्याद्यदि तथैवं पक्षकर्णाशो भवति । श्रूयते च 'ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वे'ति 'यदहरेव विरजेत्तदहरेव प्रव्रजेदि'ति च । अत्र कश्चिदाहुः—'अत एवेति वचनात् गृहाश्रमं प्रविष्टस्य तत्परित्यागेनाश्रमान्तरेणाभिराचार्यस्यानभिमतमिति लक्ष्यते । तत्रागमाभिप्रायः—दारपरिग्रहे सति यावज्जीवमग्निहोत्रं जुहुयादिति श्रुत्या विरुध्यते स कथं प्रव्रजेदिति । तस्मात्सत्यपि वैराग्ये काम्यस्य कर्मणः परित्यागेन नित्यानि नैमित्तिकानि च कर्माणि कुर्वन् प्रतिषिद्धानि वर्जयन् गृहस्थ एव मुच्यत इति । यथाह याज्ञवल्क्यः—'न्यायार्जितधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः । श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते ॥' इति ॥ अथ योऽनाहिताग्निस्तस्य विरक्तस्य मुन्याश्रमप्रवेशे को विरोधः । ऋणश्रुतिविरोधः । 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते । ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य' इति । मनुरपि—'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ॥' इति । मोक्षो मोक्षाश्रमः । नन्वेवं ब्रह्मचर्यादपि प्रव्रज्या नोपपद्यते । अथ तत्र 'यदहरेव विरजेदि'ति श्रुत्या युक्तं प्रव्रजितुं विरक्तस्य, गार्हस्थ्यादपि भविष्यति । स्मर्यते च—'प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम् । आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेदि'ति । तथा यो गृहस्थो वृद्धो मृतभार्यः पुनर्दारक्रियायामसमर्थः, तस्यापि युज्यते प्रव्रज्या । तस्माद्यदहरेव विरजेदित्येष एव कालः प्रव्रज्यायाः, सर्वमन्यदविरक्तस्येति युक्तम् । सूत्रकारस्तु सूत्रे श्रुत्यनुसारेण प्रयुक्तः । यथा गृहाद्वा वनाद्वेति ब्रुवाणैव श्रुतिर्ब्रह्मचर्यादेव प्रव्रजेदित्याह तथेति ॥८॥ ***तस्योपदिशन्ति ॥९॥** तस्य परिव्राजः कर्तव्यमुपदिशन्ति धर्मज्ञाः ॥९॥ ***अनग्निरनिकेतः स्यादशर्माशरणो मुनिः स्वाध्याय एवोत्सृजमानो वाचं ग्रामे प्राणवृत्तिं प्रतिलभ्यानिहोऽनमुत्रश्चरेत् ॥१०॥** ब्रह्मचारिणस्समिदाधानाद्यग्निकार्यं, गृहस्थस्यौपासनाद्यग्निहोत्रादि, वानप्रस्थस्य 'श्रामणकेनाग्निमाधाये'ति विहितेऽग्नौ होमादि, तस्य तु नैवंविधं किञ्चिदग्निकार्यमस्तीत्यनग्निः । निकेतो निवासस्थानं स्वभूतं तदभावादनि-

